( ३८ )

शब्दस्यानुमानेऽन्तर्भावं वदतो वैशेषिकस्य सुगतस्य च समाधानमुच्यते ।

द्विविधश्शब्दः पदात्मा वाक्यात्मा चेति । तत्र पदस्य पदार्थसम्बन्धग्रहणापेक्षया पदार्थस्मारकत्वेऽपि वाक्यस्य वाक्यार्थज्ञानजनकत्वन्न सम्बन्धापेक्षम्, पदार्थज्ञानवतो झटिति वाक्याद्वाक्यार्थज्ञानसम्भवात् । पदेन पदार्थस्मरणे सम्बन्धापेक्षत्वेऽपि विषयभेदात् सामग्रीभेदाच्च भेद एव, पक्षधर्मव्याप्त्यादिसापेक्षमनुमानम् । शब्दस्तु निरपेक्ष इति भेदाः । शब्दे वाच्यवाचकभावसम्बन्धापेक्षा, अनुमाने लिङ्गिलिङ्गसम्बन्धापेक्षेति वैषम्यम् ( पृ० २२१ ) ।

( ३९ )

स्वतःप्रामाण्यवादिनं परतःप्रामाण्यावादी एवं दूषयति । दूरे जलं दृष्ट्वा इदं जलमिति ज्ञाने जाते पश्चात् पूर्वोत्पन्नं जलज्ञानं प्रमा न वेति संशयो जायते, यदि स्वत एव प्रामाण्यज्ञानं तदा संशयानुपपत्तिरतः परतोऽनुमानात् प्रामाण्यज्ञानं सम्पादनीयम्, तत्र हेतुस्समर्थप्रवृत्तिजनकत्वादिति; एवञ्चानुमानादेव प्रामाण्यग्रह इति । तच्च स्वतःप्रामाण्यवादी खण्डयति ! यदि परतःप्रामाण्यं ज्ञायेत, तदा सफलप्रवृत्तिजनकत्वज्ञानस्य प्रामाण्यं तदुत्तरोत्पन्नप्रामाण्यानुमित्येति वक्तव्यम् । एवं तज्ज्ञानप्रामाण्यं हेत्वन्तरेण ग्राह्यमित्यनवस्थेति । अत्र परतःप्रामाण्यवादी जयन्तभट्टः समाधानमाह—

अपरीक्षणीयप्रामाण्यत्वादर्थक्रियाज्ञानस्य । प्रवर्तकं सर्वज्ञानं न परीक्षणीयप्रामाण्यं वर्तते फलज्ञाने तु सिद्धप्रयोजनत्वात् प्रामाण्यपरीक्षापेक्षैव नास्तीति कुतोऽनवस्था । प्रवर्तकं हि प्रथममुदकज्ञानमविद्यमानेऽपि नीरे मिहिरमरीचिषु दृष्टमिति तत्र संशेरते जनाः । अर्थक्रियाज्ञानन्तु सलिलमध्यवर्त्तिनाम्भवत्तदविनाभूतमेव भवतीति न तत्र संशयस्तदभावान्न तत्र प्रामाण्यविचार इत्यादि ।

श्रीवाचस्पतिमिश्रास्तु दृष्टार्थमन्त्रायुर्वेदप्रामाण्यं प्रवृत्तिसामर्थ्येनावधार्य तज्जातीयस्यादृष्टार्थस्य वेदस्य विनापि प्रवृत्तिसामर्थ्यं प्रामाण्यावधारणमाप्तोक्तत्वेनेति वेदस्येश्वरोक्तत्वेन प्रामाण्यं समर्थयन्तोऽपि अनुमानस्य प्रवृत्तिसामर्थ्यलिङ्गजन्मनो निरस्तसमस्तव्यभिचारशङ्कस्य स्वत एव प्रामाण्यमव्यभिचारिलिङ्गादिति वदन्तः केषाञ्चिज्जनानां स्वतःप्रामाण्याभ्युपगमेन सर्वत्र स्वतःप्रामाण्यवादस्य मार्गं प्रदर्शयन्ति ।

( ४० )

ख्यातिविवेचनप्रसङ्गे मीमांसकैकदेशिमतखण्डनार्थमुपवर्णयति श्रीजयन्तभट्टः।

इदं रजतमिति भ्रमे सत्यरजतप्रतीतिवदवभास्यरजतसद्भावाल्लौकिकालौकिकत्वे तु विशेषः। रजतज्ञानावभास्यं हि रजतमुच्यते तच्च किञ्चिद् व्यवहारप्रवर्तकं किञ्चिन्नेति। तत्र व्यवहारप्रवर्तकं लौकिकमुच्यते ततोऽन्यदलौकिकमिति। यच्च शुक्तिकाशकलमित्युच्यते तल्लौकिकं रजतं रजतज्ञानावभास्यत्वाद्रजतं तद्व्यवहाराप्रवृत्तेरलौकिकमिति।

इदं मतं वेदान्त्यभिमतप्रातिभासिकरजताभ्युपगममनुसरति; परन्तु नेदं वेदान्तिमतम् (पृ० २६३)।

( ४१ )

यद्यपीश्वरेऽनुमानमेव प्रमाणम् तथापि तदीयसर्वज्ञत्वादौ निखिलप्रपञ्चस्रष्टृत्वान्यथानुपपत्तिः प्रमाणम्। वेदानामीश्वरोच्चरितत्वे तु 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इत्यादि वेदवाक्यमेव प्रमाणम्। ईश्वरज्ञानं प्रत्यक्षमजन्यमेव तस्य शरीराद्यभावादिन्द्रियार्थसन्निकर्षाद्यभावान्न जन्यं प्रत्यक्षं 'अजनकानामेवार्थानां सवितृप्रकाशेनेव ग्रहणात्। ईश्वरस्य भावनाख्यसंस्कारेण न प्रयोजनं सर्वदा सर्वार्थदर्शित्वेन स्मृत्यभावात्। एवं सत्यतीतादिकं यन्न्यायरीत्या सूक्ष्मरूपेणापि न वर्तते तज्ज्ञानं तस्येदानीमुपपादयितुमशक्यम्। ततश्चातीतधर्मादेस्तस्य स्मरणानभ्युपगमात् तस्य वर्तमानकाले ज्ञानं दुर्लभम्। ततश्च तत्फलं कथं दास्यतीति प्रश्नो वर्तते। जयन्तभट्टस्तु, प्रजापतेर्जन्येच्छा प्रजायते इत्यभ्युपगच्छन् तस्यैव कर्मफलदातृत्वं सूचयति। अत्रेश्वरस्य भूतानुग्रहाद्धर्मो नित्यः। आनन्दश्चेत्याभ्युपगच्छति। नव्यन्यायग्रन्थेषु ज्ञानेच्छाप्रयत्ना एवेश्वरस्य विशेषगुणा इति लिख्यते। तत्तत्कर्मानुसारेण फलं प्रयच्छत ईश्वरस्य धर्मेण प्रयोजनं न दृश्यते। धर्मस्य सुखजनकत्वन्तु नेष्यत ईशस्य नित्यसुखाभ्युपगमात्। अपि च धर्मस्य फलदात्रन्तराभावात् किमर्थो धर्म इति प्रश्नो वर्तते (पृ० २८२)।

( ४२ )

एकं सर्वाभ्युपगतं स्मर्यमाणानुभूयमानसामानाधिकरण्यग्राहिणी प्रत्यभिज्ञा संस्कारसहितेन्द्रियजन्येति, अपरं प्रत्यभिज्ञायास्स्मर्यमाणपूर्वज्ञानविशेषितार्थ-

ग्राहित्वात् प्रत्यभिज्ञायास्तद्विशेषणस्य चार्थस्य बाह्येन्द्रियग्राह्यत्वानुपपत्तेः। स्तम्भादावपि मानसी प्रत्यभिज्ञेति। वेदान्तिमते तु सोऽयं देवदत्त इत्यादि प्रत्यभिज्ञायां वृत्तिद्वयम्, 'स' इत्यंशे स्मृतिः 'अयम्' इत्यंशे प्रत्यक्षमंशद्वयावच्छिन्नञ्चैतन्यात्मकं ज्ञानन्त्वेकमिति व्यवहारः (पृ० ३१८)।

( ४३ )

पदस्य वाक्यस्य चानित्यत्वं तार्किकाणां मीमांसकानाञ्च सम्मतमेव। वर्णानान्तु मीमांसका नित्यत्वं वदन्ति। आनुपूर्वीविशिष्टवर्णसमुदायः पदं तस्याश्चानुपूर्व्याः क्षणघटितत्वेनानुपूर्वीविशिष्टवर्णानामनित्यत्वमाहुस्तदुक्तं भट्टैः—'यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता' इति। वेदनित्यत्वं न स्थापनीयमपि तु वेदे पौरषेयत्वनिरासपूर्वकमपौरुषेयत्वमेव स्थापनीयमिति। तार्किकमते तु वर्णानामप्यनित्यत्वमेव तदिदं लाघवगौरवविचारेण वर्णानामनित्यत्वाङ्गीकारे लाघवमिति ग्रन्थे निर्धार्यते। वेदे उभयसिद्धप्रमाणग्रन्थे वाऽस्य विषयस्याविचारणादित्याह।

वस्तुतस्तु, जैमिनिः 'नित्यस्तु स्याद्दर्शनस्य परार्थत्वात्' इति सूत्रे शब्दस्य नित्यत्वमाह तेन वर्णनित्यत्वं सिद्ध्यति। बादरायणोऽपि ब्रह्मसूत्रेषु 'अत एव च नित्यत्वमि'ति वेदनित्यत्वं सूत्रयाम्बभूव। शब्दानित्यत्वपक्ष एव च गौरवं बहूनां शब्दानां क्षणिकानामुत्पत्तिः प्रागभावा ध्वंसाश्चानन्ताः कल्पनीयअस्मिन् मते इति विभावनीयम् (पृ० ३१०)।

( ४४ )

कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रमिति तार्किकाः। भट्टस्तु 'दिशः श्रोत्रमि'ति श्रुत्या मृतस्य श्रोत्रं दिशि व्यलीयत इत्युक्तेश्श्रोत्रस्याधिष्ठानमेवोपादानं तच्च दिगिति वदति। जयन्तभट्टस्तु 'दिशां कार्यान्तराक्षेपादागमान्यपरत्वतः आहोपुरुषिकामात्रं दिग्द्रव्यश्रोत्रकल्पनमि'ति ब्रवीति। तार्किकोक्तमभ्युपेत्य श्रोत्रस्य दिशि लय व्यवहारोऽन्यथा नेतव्यः।

ऐतरेयेऽपि 'श्रोत्राद्दिशः समभवन्' इत्यपि वर्ततेऽतो जयन्तोक्तं स्वमतपक्षपातेनेति मन्तव्यम्।

वस्तुतस्तु दीधितिकारोक्तरीत्या आकाशकालदिशामीश्वरेऽन्तर्भावाद्दिङ्नाम द्रव्यान्तरं नास्त्येवेति मन्तव्यम्। वेदान्तिनस्तु अविद्यैवाथवाऽविद्याचित्सम्बन्ध एव कालो दिगप्यविद्याचित्संबन्ध एवेति न पृथग् द्रव्यान्तराभ्युपगमः।

दिशः श्रोत्रमित्यत्र श्रुतिवाक्यमन्यपरमिति मूलं तस्य तत्तदभिमानिदेवतापर-मिति बृहदारण्यकभाष्ये श्रीशङ्कराचार्याः। तत्तदभिमानिदेवतास्तत्तदिन्द्रियाण्यधिष्ठाय जीवस्योपकुर्वन्ति जीवदवस्थायाम्। मरणकाले चोपकारो निवर्तत इत्यर्थः।

( ४५ )

योगिप्रत्यक्षस्य भट्टेन निरस्तस्य भट्टजयन्तेन व्यवस्थापनं वेदान्तिमत-स्योपोद्बलकम्। देवताधिकरणभाष्ये 'धर्मोत्कर्षवशाद् व्यासादयो देवादिभिः प्रत्यक्षं व्यवजह्रुरिति श्लिष्यते' इत्युक्तेः प्रत्यक्षधर्माण इति महाभाष्यञ्च। तत्र देवादिभि-रित्यनेन धर्मादेरपि ग्रहणादिन्द्रियागोचरत्वस्य समानत्वात्। भट्टैस्तु बौद्धनिराकर-णाय शब्ददेवतावादोऽङ्गीकृतोऽतो योगिनिराकरणं शरीरादिविशिष्टदेवताया अभाववत् तत्प्रत्यक्षनिराकरणञ्च सङ्गच्छते (पृ० १६३)।

चतुर्णामपि वेदानां तथा वेदान्तर्गतविधिमन्त्रार्थवादनामधेयानां च प्रामाण्यं मीमांसकरीत्यैवोपपाद्य शैववैष्णवाद्यागमानामपि प्रामाण्यमुपपादयति श्रीजयन्तभट्टः। तथाहि—जैमिनिना स्मृतीनां पुराणानां च वेदमूलकतया प्रामाण्यमभ्यधायि स्मृतिपादे धर्मस्य शब्दमूलत्वादित्यादिना। वेदः ईश्वरोच्चरितः अस्मिन् न्यायमते। अपौरुषेय इति तु जैमिनिमते इति भेदे सत्यपि स्मृतिप्रामाण्योपपादनप्रकारः श्रीजयन्तभट्टेन विशेषप्रशंसामर्हति। अयं हि महाजनपरिग्रहात् स्मृतीनां मनुयाज्ञवल्क्यादिप्रणीतानां प्रामाण्यमिच्छति। के महाजनाः? ये वेदोक्तं चातुर्वर्ण्यं चातुराश्रम्यं चाङ्गीकुर्वन्ति, ते सर्वे महाजनाः। शैवाः वैष्णवाः शाक्ताः सांख्या योगाः इत्यादयोपि महाजना एव वेदपरिग्रहाद् वर्णाश्रमादिप्रामाण्याभ्युपगमाच्च। तेषु परस्परविरोधः कथमुपपद्यते इति चेत्, उच्यते, वेदेऽपि परस्परविरोधो दृश्यते उदितानुदितहोमादौ अधिकारि-भेदाच्च परिह्रियते। एवं शैवाद्यागमानामपि व्यवस्थिताधिकारिभेदाद् न विरोधः। अत एव व्याससूत्रेष्वपि विज्ञानादिभावे वा तदप्रतिषेध इति व्याचख्यौ पुण्डरीकाक्षा-चार्यः इत्याह।

श्रीशङ्कराचार्याणामप्ययमेवाभिप्रायो दृश्यते 'येन त्वंशेन वेदैः न विरुध्यते तदंशे तेषां प्रामाण्याभ्युपगमात्' इति तैरभ्युपगमात्।

अत एव 'एतेनयोगः प्रयुक्तः इति बादरायणसूत्रस्थं येन त्वंशेन न विरुध्यते तेनेष्टमेव सांख्ययोगस्मृत्योः प्रामाण्यं इति भाष्यं व्याकुर्वता भामतीकारेण 'न च

तदप्रमाणं प्रधानादौ प्रमाणं च यमादौ इति वाच्यं तत्राप्रामाण्ये अन्यत्राप्यप्रामाण्यात् तदुक्तं—'प्रसरं न लभन्ते हि यावत्क्वचन मर्कटाः। नाभिद्रवन्ति ते तावत् पिशाचा वा स्वगोचरे' इति न्यायेनान्यत्राप्यप्रामाण्यापातात्। अतः यत्र वेदविरोधस्तत्र तेषां तात्पर्यं नेत्येव वक्तव्यमित्युक्त्वा सांख्ययोगादीनां प्रामाण्यं समर्थितम्। तन्न्यायेनैव शैवाद्यागमानामपि प्रामाण्यं रक्षणीयम्। तथाहि शैवैः पाञ्चरात्रस्य गौतमादिशाप-ग्रस्तैरेव परिग्रहात् वेदविरुद्धत्वाद् वेदनिन्दापरत्वाच्च अप्रामाण्यमुच्यते। वैष्णव-पाञ्चरात्रिकैः तामसेन शिवेनोक्तत्वात् तदप्रामाण्यमुच्यते। परं तूभयोः वेदप्रामाण्यवादिशिष्टैरभ्युपेतत्वाद् उभयोः प्रामाण्यमङ्गीकार्यमेव अवान्तरविशेषस्तु न तात्पर्यविषयः तदंशे न प्रामाण्यमुच्यते। एवमांशिकप्रामाण्यवादिपक्षं समर्थयन् सर्वांशेऽपि प्रामाण्यमस्त्येव यत्र विरुध्यते वेदेन तत्र तात्पर्यं तद्ग्रन्थस्य नास्तीत्यत्र तात्पर्यमिति समर्थयामास। अनयैव रीत्या जयन्तभट्टः पाञ्चरात्रशैवाद्यागमानामपि प्रामाण्यं समर्थयते महाजनपरिग्रहादेव प्रामाण्यमभ्युपगच्छन् इति।

| | |
|---|---|
| वाराणस्याम्<br>**अक्षयतृतीयायाम्,**<br>वि० सं० २०३९ | विदुषां वशंवदः<br>**सम्पादकः** |

# विषयसूचिका

॥ श्रीः ॥

# न्यायमञ्जरी

## प्रमाणप्रकरणम्

[ प्रथमाह्निकम् ]

नमः शाश्वतिकानन्दज्ञानैश्वर्यमयात्मने ।
सङ्कल्पसफलब्रह्मस्तम्बारम्भाय शम्भवे ॥ १ ॥

नमामि यामिनीनाथलेखालङ्कृतकुन्तलाम् ।
भवानीं भवसन्तापनिर्वापणसुधानदीम् ॥ २ ॥

---

## न्यायमञ्जरीग्रन्थिभङ्गः

5

नमोऽनवसितासक्तचित्क्रियाशक्तिसम्पदे ।
विष्णवे त्रिजगद्व्यापिपरमाश्चर्यमूर्तये ॥ १ ॥

सङ्कल्पितफलावाप्तिकल्पपादपमञ्जरीम् ।
स्वान्तस्तापतमःशान्त्यै मातृकां नौमि चण्डिकाम् ॥ २ ॥

मधुरासु प्रसन्नासु ग्रन्थयोऽतिरसास्वपि । 10
जयन्तोक्तिषु दृश्यन्ते क्वचिदिक्षुलतास्विव ॥ ३ ॥

सुकुमाराशयाः केचित् सन्ति तद्भङ्गविक्लवाः ।
अतस्तेभ्यो व्यधत्तेमं भङ्गं श्रीशङ्करात्मजः ॥ ४ ॥

प्राप्य चक्रधरश्चक्रमिव सर्वविदः श्रुतम् ।
शशाङ्कधरतोऽभेद्यग्रन्थिभेदाहितोद्यमः ॥ ५ ॥ 15

नमः शाश्वतिकानन्देति । आनन्दः सुखम् । ज्ञानम् अखिलार्थदृक् संवित् । ऐश्वर्यम् अणिमाद्यष्टगुणयोगः । शाश्वतिकानि नित्यानि च तान्यानन्दज्ञानैश्वर्याणि

सुरासुरशिरोरत्नमरीचिखचिताङ्घ्रये ।
विघ्नान्धकारसूर्याय गणाधिपतये नमः ॥ ३ ॥

जयन्ति पुरजिद्दत्तसाधुवादपवित्रिताः ।
निदानं न्यायरत्नानामक्षपादमुनेर्गिरः ॥ ४ ॥

5 अक्षपादमताम्भोधिपरिमर्षरसोत्सुकाम् ।
विगाहन्तामिमां सन्तः प्रसरन्तीं सरस्वतीम् ॥ ५ ॥

नानागुणरसास्वादखिन्नाऽपि विदुषां मतिः ।
आलोकमात्रकेणेममनुगृह्णातु नः श्रमम् ॥ ६ ॥

---

शाश्वतिकानन्दज्ञानैश्वर्याणि, तानि प्रकृतानि प्राचुर्येण प्रस्तुतानि यस्य स शाश्वतिका-
10 नन्दज्ञानैश्वर्यमयः, तादृगात्मा यस्य । प्राचुर्यं द्विविधम्—सततावियोगो बाहुल्यञ्च । तदत्र सततावियोगापेक्षया मयट् । नित्यत्वं चैषामीश्वरसिद्धौ[१] वक्ष्यति । ब्रह्मण आरभ्य स्तम्ब-पर्यन्तश्चतुर्दशविधो भूतग्रामो ब्रह्मस्तम्बः । सङ्कल्पेन सफलः । सह फलेन स्वसंवेदन-लक्षणेन वर्तत इति सफलः । सफलो यो ब्रह्मस्तम्बस्तस्य य आरम्भस्तन्निष्पत्त्यर्थश्चेष्टा-विशेषः । स सफलब्रह्मस्तम्बारम्भः । सङ्कल्प एवेच्छाविशेष एव सफलब्रह्मस्तम्बारम्भो
15 यस्य । न पुनरिच्छाजनितप्रयत्नपूर्वकोऽस्मदादीनामिव कार्यविशेषारम्भो भगवत इति स्तुतिर्गुणातिशयाभिधानरूपा । विचित्रसुखदुःखसंवेदनस्य यद्यपि कर्मकृतत्वं प्राणिनाम्, तथापीश्वरेच्छानिरपेक्षाणां तेषां न तत्र सामर्थ्यमिति वक्ष्यति । तथा चागमोऽपि—
"अज्ञो जन्तुरनीशोऽयम्" इति ।

आरभ्यते वा येनारम्भः प्रयत्नः, सफलब्रह्मस्तम्बविषयारम्भः प्रयत्नः सङ्कल्प एव
20 यस्येति । न तु सङ्कल्पादन्यः प्रयत्नस्तस्यास्ति, यद् वक्ष्यति ईश्वरसिद्धौ 'प्रयत्नश्चास्य सङ्कल्पविशेष एव' इति । यत् प्रयत्नेन सिद्ध्यति, तस्य सत्यसङ्कल्पत्वाद् भगवतः सङ्कल्पेनैव सिद्धिरिति ततोऽन्यस्य प्रयत्नस्य कल्पना निष्प्रमाणिकेति वक्ष्यमाणस्य तात्पर्यम् ।

अन्ये व्याचक्षते सङ्कल्पलक्षणेन फलेन सफलः सप्रयोजनो ब्रह्मस्तम्बारम्भो यस्य ।
25 स्वभावप्रवृत्तं सङ्कल्पमात्रमेव फलं प्रयोजनं प्रवर्तकं जगत्सर्गे भगवतः, पूर्णकामत्वेनान्य-स्यापेक्षणीयस्याभावात् ।

न्यायौषधिवनेभ्योऽयमाहृतः परमो रसः ।
इदमान्वीक्षिकीक्षीरान्नवनीतमिवोद्धृतम् ॥ ७ ॥
कुतो वा नूतनं वस्तु वयमुत्प्रेक्षितुं क्षमाः ।
वचोविन्यासवैचित्र्यमात्रमत्र विचार्यताम् ॥ ८ ॥
तैरेव कुसुमैः पूर्वमसकृत्कृतशेखराः । 5
अपूर्वरचने दाम्नि दधत्येव कुतूहलम् ॥ ९ ॥
यद्वा निर्गुणमप्यर्थमभिनन्दन्ति साधवः ।
प्रणयिप्रार्थनाभङ्गसंविधानामशिक्षिताः ॥१०॥
तदियं वाङ्मयोद्यानलीलाविहरणोद्यतैः ।
विदग्धैः क्रियतां कर्णे चिराय न्यायमञ्जरी ॥११॥ 10
अक्षपादप्रणीतो हि विततो न्यायपादपः ।
सान्द्रामृतरसस्यन्दफलसन्दर्भनिर्भरः ॥१२॥

---

तथा चाह भगवान् व्यासः—

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं प्रवर्ते चाथ कर्मणि ॥

फलस्य च प्रवर्तकत्वमग्रे प्रतिपादयिष्यते । यदि वा सङ्कल्पेन सम्पद्यतामिदम् 15
इत्येवंरूपेण सत्यसङ्कल्पत्वाद् भगवतः सफलो निष्पत्तिलक्षणेन फलेन फलवान् ब्रह्मस्तम्बारम्भो यस्य । फलान्तराभिसन्धिनापि हि प्रवर्तमानानां कर्मस्वारम्भसमये समारभ्य निष्पत्तेरेवेष्यमाणत्वात् फलत्वं दृष्टम्, इष्टलक्षणत्वात् फलस्य । तथा हि कीर्त्यादिफलकामा ग्रन्थादि चिकीर्षन्तो ग्रन्थनिष्पत्तिरूपावान्तरफलनिष्पत्तये नमस्कारादि कुर्वन्तो दृश्यन्ते । स्तम्बः स्थावरस्तृणगुल्मादिकः, तत्पर्यन्तं हि प्राणिनः कर्मवशात् संसरन्ति । 20
तथा च स्थावरानधिकृत्याह मनुः—

एतदन्तास्तु गतयो ब्रह्माद्याः समुदाहृताः ।
घोरेऽस्मिन् भूतसंसारे नित्यं सततयायिनि ॥ इति ।

यद्यपि चास्मिन् दर्शने स्थावराणामचैतन्यम्, तथापि चेतनावत् सहचरितत्वात् सृष्टौ चेतनावदुपचारस्तेषाम्, 'दण्डिनो गच्छन्ति' इतिवत् । यथा दण्डरहिता अपि दण्डिसाहचर्याद् दण्डिन इत्युपचर्यन्त इति । 25

**संविधानामशिक्षिता** इति । ण्यन्ताच्छिक्षतेः स्वकर्मणि क्तः ।

वयं मृदुपरिस्पन्दास्तदारोहणपङ्गवः ।
न तद्विभूतिप्राग्भारमालोकयितुमप्यलम् ॥१३॥
तदेकदेशलेशे तु कृतोऽयं विवृतिश्रमः ।
तमेव चानुगृह्णन्तु सन्तः प्रणयवत्सलाः ॥१४॥
5 असङ्गचैरपि नात्मीयैरल्पैरपि परस्थितैः ।
गुणैः सन्तः प्रहृष्यन्ति चित्रमेषां विचेष्टितम् ॥१५॥
परमार्थभावनाक्रमसमुन्मिषत्पुलकलाञ्छितकपोलम् ।
स्वकृतीः प्रकाशयन्तः पश्यन्ति सतां मुखं धन्याः ॥१६॥

## शास्त्रमेव स्वर्गापवर्गप्रतिपादकम्

10 इह प्रेक्षापूर्वकारिणः पुरुषार्थसम्पदमभिवाञ्छन्तस्तत्साधनाधिगमोपायमन्तरेण तदवाप्तिममन्यमानास्तदुपायावगमनिमित्तमेव प्रथममन्वेषन्ते । दृष्टादृष्टभेदेन च तद्द्विविधः पुरुषार्थस्य पन्थाः । तस्य दृष्टे विषये रुचिः प्ररूढवृद्धव्यवहारसिद्धान्वयव्यतिरेकाधिगतसाधनभावे भोजनादावनपेक्षितशास्त्रस्यैव भवति प्रवृत्तिः 'न हि मलिनः स्नायात्', 'बुभुक्षितो वाऽश्नीयात्' इति शास्त्रमुपयुज्यते । 15 अदृष्टे तु स्वर्गापवर्गमात्रे नैसर्गिकमोहान्धतमसविलुप्तालोकस्य लोकस्य शास्त्रमेव प्रकाशः । तदेव सकलसदुपायदर्शने दिव्यं चक्षुरस्मदादेर्न योगिनामिव योगसमाधिजज्ञानाद्युपायान्तरमपीति । तस्मादस्मदादेः शास्त्रमेवाधिगन्तव्यम् ।

---

योगसमाधिजेति । योगो द्विविधः—सम्प्रज्ञातोऽसम्प्रज्ञातश्च । योग एव क्रमेण समाध्यवस्थामसम्प्रज्ञातत्वलक्षणां सम्प्राप्तो योगसमाधिः । केवलयोगग्रहणे क्रियमाणे 20 सम्प्रज्ञातेऽपि स प्रत्ययः स्यादिति समाधिग्रहणम् । समाधिशब्दे तु योगशब्दं विनोक्ते यमनियमादियोगाङ्गाष्टकमध्यवर्तिनि योगाङ्गे समाधौ प्रसङ्गो न निवर्तेत इत्युभयग्रहणेनाभीष्टार्थप्रतिपादनान् नास्ति पौनरुक्त्यम् । योगसमाधिशब्दयोर्हि पर्यायतया पौनरुक्त्यमाशङ्कते, तदेव नास्ति । यदा आत्मादेर्यथाभूतेन स्वरूपेण सम्यक् प्रकर्षेण ज्ञानम्, तदा सम्प्रज्ञातो योगः सबीजः समाधिर्भण्यते । यदा तु विपर्ययोऽभ्यासक्रमेण स्वरूपेणा25 प्यात्मनः सम्प्रज्ञाताभावः, तदाऽसम्प्रज्ञातो योगो निर्बीजः समाधिः । योगाङ्गस्य पुनः समाधेर्लक्षणम् "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः" इति । तच्छब्देनात्र सूत्रे "तत्र प्रत्ययैकतानता ध्यानम्" इति प्राक्सूत्रनिर्दिष्टं ध्यानं परामृष्टम् ।

## शास्त्रविभागः

तच्च चतुर्दशविधम्, यानि विद्वांसश्चतुर्दशविद्यास्थानान्याचक्षते । तत्र वेदाश्चत्वारः । प्रथमोऽथर्ववेदः, द्वितीय ऋग्वेदः, तृतीयो यजुर्वेदः, चतुर्थः सामवेदः । एते चत्वारो वेदाः साक्षादेव पुरुषार्थसाधनोपदेशस्वभावाः, 'अग्निहोत्रं जुहुयात् स्वर्गकामः', 'आत्मा ज्ञातव्यः' इत्यादिश्रुतेः । स्मृतिशास्त्रमपि मन्वाद्युपनिबद्ध- 5
मष्टकाशिखाकर्मप्रपाप्रवर्तनादिपुरुषार्थसाधनोपदेश्येव दृश्यते । अश्रूयमाणफला- नामपि कर्मणां फलवत्ता विधिवृत्तपरीक्षायां वक्ष्यते, सर्वो हि शास्त्रार्थः पुरुषार्थ- पर्यवसायी, न स्वरूपनिष्ठ इति ।

## इतिहासादीनां विद्यास्थानत्वविचारः

इतिहासपुराणाभ्यामपि उपाख्यानादिवर्णनेन वैदिक एवार्थः प्रायेण प्रतन्यते । 10
यथोक्तम्—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ।। इति ।

---

**सर्वो हि शास्त्रार्थ** इति । सर्वः काम्यनित्यादिः शास्त्रार्थः पुरुषार्थे स्वर्गप्रत्यवाय- परिहारादौ पर्यवस्यति । न स्वरूपनिष्ठः, यथा **प्राभाकरा** नित्यान् कर्तव्यत्वादेव 15
कर्तव्यानाहुः, न पुरुषार्थहेतुत्वेन, काम्यैरविशेषप्रसङ्गः स्यादिति वदन्तः ।

**इतिहासपुराणाभ्यामपीति** । तयोर्हि वेदविहितमेव क्वचित् तत्प्रतिषिद्धम्, क्वचिद् विशिष्टपुरुषाचरणद्वारेण विशिष्टफलप्रदत्वेन प्रदर्शितम् 'इदं कर्मामुना समाचरि- तम्, सोऽप्येवंरूपेणानिष्टेन फलेन योगं प्राप' इति वैदिक एवार्थो विशिष्टपुरुषानुष्ठान- तत्फलकीर्तनेन प्रतन्यते । यथा दशरथादेर्वेदोदितां पुत्रेष्ट्यादिक्रियामनुष्ठितवतो राम- 20
भरतादिपुत्रजन्मप्रवर्तनम्; नहुषादेश्च ब्राह्मणावगूरणादिनिषिद्धाचरणेनाजगरत्वाप्त्या- द्यनिष्टफलकीर्तनम् । तथा च लोके व्याधिता न तथा वैद्योपदिष्टौषधादिसेवने प्रवर्तते, यथा पार्श्वस्थोक्ताः 'इदमौषधं सेव्यताम्, अस्मिन् हि सेविते ममान्यस्य चैष व्याधिराश्वेव विनष्ट इति ।

**वेदं समुपबृंहयेत्** इति । वैदिकानि विधिवाक्यानि पौराणिकैरैतिहासिकैश्च 25
तत्फलपरैरुपाख्यानैर्विमिश्रयेदित्यर्थः । न च सम्यग् मदभिधेयानुष्ठेयसारूप्याद् मया

तदेवं वेदपुराणधर्मशास्त्राणां स्वत एव पुरुषार्थसाधनोपदेशस्वभावत्वाद् विद्यास्थानत्वम् ।

## वेदाङ्गानां विद्यास्थानत्वम्

अङ्गानि व्याकरणज्योतिःशिक्षाच्छन्दोनिरुक्तानि वेदार्थोपयोगिपदादि-
5 व्युत्पादनद्वारेण विद्यास्थानत्वं प्रतिपद्यन्ते । तेषामङ्गसमाख्यैव तदनुगामितां प्रकटयति ।

## मीमांसायाः पृथग् विद्यात्वम्

विचारमन्तरेणाव्यवस्थितवेदवाक्यार्थानवधारणान्मीमांसा वेदवाक्यार्थ-विचारात्मिका वेदाकरस्येतिकर्तव्यतारूपमनुबिभ्रतीति विद्यास्थानतां प्रतिपद्यते ।
10 तथा च भट्टः—

धर्मे प्रमीयमाणे तु वेदेन करणात्मना ।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥

अत एव सप्तममङ्गमिति न गण्यते मीमांसा, प्रत्यासन्नत्वेन वेदैकदेश-भूतत्वात् । विचारसहायो हि शब्दः स्वार्थं निराकाङ्क्षं प्रबोधयितुं क्षमः ।

15

## न्यायविस्तरस्य विद्यामूलत्वम्

न्यायविस्तरस्तु मूलस्तम्भभूतः सर्वविद्यानाम्, वेदप्रामाण्यहेतुत्वात् । वेदेषु हि तार्किकरचितकुतर्कविप्लावितप्रामाण्येषु शिथिलितास्थाः कथमिव बहुवित्त-व्ययायासादिसाध्यं वेदार्थानुष्ठानमाद्रियेरन् साधवः ? किं वा तदानीं स्वामिनि परिम्लाने तदनुयायिना मीमांसादिविद्यास्थानपरिजनेन कृत्यमिति ? तस्मादशेष-
20 दुष्टतार्किकोपमर्दद्वारकदृढतरवेदप्रामाण्यप्रत्ययाधायिन्यायोपदेशक्षमम् अक्षपादो-पदिष्टमिदं न्यायविस्तराख्यं शास्त्रं प्रतिष्ठाननिबन्धनमिति परं विद्यास्थानम् ।

## विद्यास्थानस्वरूपविचारः

विद्यास्थानत्वं नाम चतुर्दशानां शास्त्राणां पुरुषार्थसाधनज्ञानोपायत्व-मेवोच्यते । वेदनं विद्या । तच्च न घटादिवेदनमपि तु पुरुषार्थसाधनवेदनम् । विद्यायाः

---

25 वेदेन करणभूतेनानुष्ठेयत्वेन प्रतिपादित इति बुद्ध्या गृहीत्वा प्रतरिष्यति प्रतरणेनानुष्ठाने
× × × × × × (अग्रेतनग्रन्थस्त्रुटितः)

स्थानमाश्रय उपाय इत्यर्थः। तच्च पुरुषार्थसाधनपरिज्ञानोपायत्वं कस्यचित् साक्षात्कारेण, कस्यचिदुपायद्वारेणेति तानीमानि चतुर्दशविद्यास्थानानीत्याचक्षते। यथोक्तम्—

पुराणतर्कमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥ इति। 5

अन्यत्राप्युक्तम्—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश॥ इति।

## वेदप्रामाण्यसाधकानामेव न्यायविस्तरपदवाच्यत्वम्

पूर्वत्र तर्कशब्देनोपात्तमुत्तरत्र च न्यायविस्तरशब्देनैतदेव शास्त्रमुच्यते। 10 न्यायस्तर्कोऽनुमानं सोऽस्मिन्नेव व्युत्पाद्यते। यतः सांख्यार्हतानां तावत् क्षपणकानां कीदृशमनुमानोपदेशकौशलम्, कियदेव तत्तर्केण वेदप्रामाण्यं रक्ष्यत इति नासाविह गणनार्हः। बौद्धास्तु यद्यपि अनुमानमार्गावगाहननैपुण्याभिमानोद्धुरां कन्धरामुद्वहन्ति, तथाऽपि वेदविरुद्धत्वात् तत्तर्कस्य कथं वेदादिविद्यास्थानस्य मध्ये पाठः? अनुमानकौशलमपि कीदृशं शाक्यानामिति पदे पदे दर्शयिष्यामः। 15 चार्वाकास्तु वराकाः प्रतिक्षेप्तव्या एवेति कः क्षुद्रतर्कस्य तदीयस्येह गणनावसरः।

## वैशेषिकास्तु न्यायविस्तरानुयायिनः

वैशेषिकाः पुनरस्मदनुयायिन एवेत्येवमस्यां जनतासु प्रसिद्धायामपि षट्तर्क्यामिदमेव तर्कन्यायविस्तरशब्दाभ्यां शास्त्रमुक्तम्।

## न्यायविस्तरस्यैवान्वीक्षिकीपदवाच्यत्वम् 20

इयमेवान्वीक्षिकी चतसृणां विद्यानां मध्ये न्यायविद्या गण्यते। "आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती" इति। प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा अनुमानमित्यर्थः। तद्व्युत्पादकं शास्त्रमान्वीक्षिकम्।

## विद्यास्थानानां चतुर्दशत्वनिर्णयः

ननु चतस्रश्चेद् विद्याः, कथं चतुर्दश दर्शिताः? नैष विरोधः, वार्तादण्ड- 25 नीत्योर्दृष्टैकप्रयोजनत्वेन सर्वपुरुषार्थोपदेशविद्यावर्गे गणनानर्हत्वात्। त्रय्यान्वीक्षिक्योश्च तत्र निर्देशाच्चतुर्दशैव विद्याः।

### मीमांसान्यायविस्तरयोः प्रस्थानभेदः

ननु वेदप्रामाण्यनिर्णयप्रयोजनश्चेन्न्यायविस्तरः कृतमनेन, मीमांसात एव तत्सिद्धेः। तत्र ह्यर्थविचारवत् प्रामाण्यविचारोऽपि कृत एव। सत्यम्, स त्वानुषङ्गिकः। तत्र मुख्यस्त्वर्थविचार एव। पृथक्प्रस्थाना हीमा विद्याः।

5 ### प्रस्थानभेदवशान्मीमांसाया वेदप्रामाण्यरक्षणाक्षमत्वम्

सा च वाक्यार्थविद्या, न प्रमाणविद्येति।

न च मीमांसकाः सम्यग् वेदप्रामाण्यरक्षणक्षमां सरणिमवलोकयितुं कुशलाः। कुतर्ककण्टकनिकरनिरुद्धसञ्चरमार्गाभासपरिभ्रान्ताः खलु त इति वक्ष्यामः। न हि प्रमाणान्तरसंवाददार्ढ्यमन्तरेण प्रत्यक्षादीन्यपि प्रमाणभावं भजन्ते, किमुत 10 तदधीनवृत्तिरेष शब्दः। शब्दस्य हि समयोपकृतस्य बोधकत्वमात्रम्। स्वाधीनमर्थतथात्वेतरत्वपरिनिश्चये तु पुरुषमुखप्रेक्षित्वमस्यापरिहार्यम्। तस्मादाप्तोक्तत्वादेव शब्दः प्रमाणीभवति, नान्यथेत्येतच्चास्मिन्नेव शास्त्रे व्युत्पादयिष्यते।

### न्यायविस्तरादिविद्यानामादिसर्गतः प्रवृत्तिः

नन्वक्षपादात् पूर्वं कुतो वेदप्रामाण्यनिश्चय आसीत्? अत्यल्पमिदमुच्यते। 15 जैमिनेः पूर्वं केन वेदार्थो व्याख्यातः? पाणिनेः पूर्वं केन पदानि व्युत्पादितानि? पिङ्गलात् पूर्वं केन च्छन्दांसि रचितानि? आदिसर्गात् प्रभृति वेदवदिमा विद्याः प्रवृत्ताः, संक्षेपविस्तरविवक्षया तु तांस्तांस्तत्र कर्तॄनाचक्षते।

### शास्त्रारम्भहेतुः

ननु वेदप्रामाण्यं निर्विचारसिद्धमेव साधवो मन्यन्त इति किमत्र विचार-20 यत्नेन? न संशयविपर्यासनिरासार्थत्वात्। यस्य हि वेदप्रामाण्ये संशयाना विपर्यस्ता वा मतिस्तं प्रति शास्त्रारम्भः। न हि विदितवेदार्थं प्रति मीमांसा प्रस्तूयते। तदुक्तम् "नान्यतो वेदविद्भ्यश्च सूत्रवृत्तिक्रियेष्यते" इति।

### उपदेष्टव्यनिर्णयः

भवति च चतुष्प्रकारः पुरुषः—अज्ञः, सन्दिग्धः, विपर्यस्तो, निश्चितमतिश्चेति। 25 तत्र निश्चितमतिरेष मुनिरमुना शास्त्रेणाज्ञस्य ज्ञानमुपजनयति, संशयानस्य संशयमुपहन्ति, विपर्यस्यतो विपर्यासं व्युदस्यतीति तान् प्रति युक्तः शास्त्रारम्भः।

## शास्त्रप्रणेतुस्तत्त्वज्ञत्वम्

कुतः पुनरस्यर्षेरपि निश्चितमतित्वं जातम् ? उच्यते—भवति तावदेष निश्चितमतिः । स तु तपःप्रभावाद् वा देवताराधनाद् वा शास्त्रान्तराभ्यासाद् वा भवतु, किमनेन ? तत्रैतत् स्यात् तत एव शास्त्रान्तरादस्मदादेरपि तत्त्वाधिगमो भविष्यतीति किमक्षपादप्रणीतेन शास्त्रेण ? परिहृतमेतत्, संक्षेपविस्तरविवक्षया शास्त्रप्रणयनस्य साफल्यात् । विचित्रचेतसश्च भवन्ति पुरुषा इत्युक्तम् । येषामित एवाज्ञानसंशयविपर्यया विनिवर्तन्ते तान् प्रत्येतत्प्रणयनं सफलमितीदं प्रणीतवानाचार्यः । तत्रेदमादिसूत्रम्—

> "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः ।"

## प्रथमसूत्रं प्रयोजनीयं न वा ?

ननु किमर्थोऽयमादिवाक्यारम्भः ? कोऽयं प्रश्नः ? शास्त्रं चेदारम्भणीयं क्रमवृत्तित्वाद् वाचः प्रथममवश्यं किमपि वाक्यं प्रयोक्तव्यम् । न ह्यादिवाक्यमकृत्वा द्वितीयादिवाक्यप्रणयनमुपपद्यत इति ग्रन्थकरणमेवाघटमानं स्यात् ।

## शास्त्रादावभिधेयादिवर्णनप्रयोजनम्

आह - न खल्वेवं न जाने, किन्तु यदेव शास्त्रे व्युत्पाद्यत्वेन स्थितं तदेव व्युत्पाद्यताम्, किमादौ तदभिधेयप्रयोजनकीर्तनेन ? उच्यते ।

> आदिवाक्यं प्रयोक्तव्यमभिधेयप्रयोजने ।
> प्रतिपादयितुं श्रोतृप्रवाहोत्साहसिद्धये ।।
> अभिधेयफलज्ञानविरहास्तमितोद्यमाः ।
> श्रोतुमल्पमपि ग्रन्थमाद्रियन्ते न सूरयः ।।

को हि नाम विद्वानविदितविषये निष्प्रयोजने च कर्मणि प्रवर्तते ? आह च भट्टः—

> सर्वस्यैव हि शास्त्रस्य कर्मणो वाऽपि कस्यचित् ।
> यावत्प्रयोजनं नोक्तं तावत् तत्केन गृह्यते ।। इति ।

**प्रयोजनज्ञानादेव शास्त्रे प्रवृत्तिः**

ननु प्रयोजनपरिज्ञानमादौ श्रोतॄणां कुतस्त्यमिति चिन्त्यताम्। किमस्मादेव वाक्यात्, उत युक्तितः? वाक्यं तावदनिश्चितप्रामाण्यं कथं प्रयोजननिश्चयाय प्रभवति? संशयाद्वा प्रवृत्तौ वेदार्थेऽपि तथैव स्यादिति शास्त्रमनारब्धव्यं स्यात्। युक्तितः प्रयोजनावगमः शास्त्रे सर्वस्मिन्नधीते सति सम्भवति, नेतरथेति तदवगम- पूर्विकायां प्रवृत्तावितरेतराश्रयः। शास्त्राधिगमनात् प्रयोजनपरिज्ञानम्, प्रयोजन- परिज्ञानाच्च शास्त्रश्रवणे प्रवृत्तिः। उच्यते। आदिवाक्यादेव श्रोतुः शास्त्रप्रयोजन- परिज्ञानम्, अर्थसंशयाच्च श्रवणे प्रवृत्तिः।

वेदे ह्यसिद्धप्रामाण्ये महाक्लेशेषु कर्मसु।
नानार्थशङ्कया युक्तमनुष्ठानप्रवर्तनम्॥
बहुवित्तव्ययायासवियोगसुगमेऽध्वनि।
प्रवृत्तिरुचितोदारफले लघुपरिश्रमे॥

शृण्वन्त एव जानन्ति सन्तः कतिपयैर्दिनैः।
किमेतत्सफलं शास्त्रमुत मन्दप्रयोजनम्॥
सूक्ष्मेक्षिका तु यद्यत्र क्रियते प्रथमोद्यमे।
असौ सकलकर्तव्यविप्रलोपाय कल्पते॥
आर्तो हि भिषजं पृष्ट्वा तदुक्तमनुतिष्ठति।
तस्मिन् सविचिकित्सस्तु व्याधेराधिक्यमाप्नुयात्॥
तेनादिवाक्याद् विज्ञाय साभिधेयं प्रयोजनम्।
तत्सम्भावनया कार्यस्तच्छास्त्रश्रवणादरः॥

यैरप्यादिवाक्यमित्थं व्याख्यायते किलानन्वितपदार्थकं वाक्यमनुपादेयम्, दशदाडिमादिवाक्यवत्; अन्वितपदार्थकमपि निष्प्रयोजनमनुपादेयमेव सदसद्वायस- दशनविमर्शवाक्यमिव; तदिहोपादेयताव्यापकप्रयोजनाद्यनुपलम्भादनादरणीयत्व- मिति व्यापकानुपलब्ध्या प्रत्यवतिष्ठमानः प्रयोजनाद्यभिधायिनाऽऽदिवाक्येन निवृत्ताशङ्कः क्रियत इति; तैरपि प्रयोजनप्रतिपादनमेवादिवाक्यस्यार्थ इत्युक्तं भवति। तत्प्रतिपादनेनैव व्यापकानुपलब्धिपरिहारादाशङ्का निवारिता भवतीति।

यदपि प्रवृत्तिहेतोरर्थसंशयस्य तर्कापरनाम्न औचित्यस्य वा समुत्पादनमादिवाक्येन क्रियत इति केचिदाचक्षते, तदपि प्रयोजनाभिधानद्वारकमेव। प्रयोजनविषयो हि संशयो वा, सम्भावनाप्रत्ययो वा, प्रवृत्त्यङ्गभूतस्तेनोत्पादनीय इति तदुत्पत्तौ प्रयोजनाभिधानमेवादिवाक्यस्य व्यापारः। संशयस्तु वस्तुवृत्तोपनत एव, पुरुषवचसां द्वैविध्यदर्शनात्। शौचसमाचारसाधुतादिना तु तस्मिन् सम्भावनाप्रत्ययोऽपि लोकस्य भवतीति। तस्मात् प्रयोजनप्रतिपादनार्थमेवादिवाक्यमिति सूक्तम्। 5

यच्च श्रोतृप्रवृत्त्यङ्गं तद्वक्तुं युक्तमादितः।
न च प्रयोजनज्ञानादन्यदस्ति प्रवर्तकम्॥

अभिधेयकथनमपि तत्साध्यप्रयोजनोपपादनाय, श्रोतृबुद्धिसमाधानाय च कर्तव्यमेव। 10

अर्थाक्षिप्तस्तु सम्बन्धः फलशास्त्राभिधेयगः।
तन्निर्देशेन सिद्धत्वान्न स्वकण्ठेन कथ्यते॥

## अनुबन्धचतुष्टयवर्णनम्

अभिधेयस्य शास्त्रस्य वाच्यवाचकभावलक्षणः सम्बन्धः, शास्त्रार्थस्य निःश्रेयसस्य च साध्यसाधनभावः सम्बन्धः, तदाश्रयनिर्देशादेव सिद्धः। 15

## अभिधेयस्वरूपवर्णनम्

अभिधेयास्तु प्रमाणादयो निग्रहस्थानपर्यन्ताः षोडश पदार्थाः प्रथमसूत्रे निर्दिष्टाः। तेषां स्वरूपमुपरिष्टाद् वक्ष्यते। अर्थपरिच्छित्तिसाधनानि प्रत्यक्षादीनि प्रमाणानि। तत्परिच्छेद्यमात्मादि। नानार्थावमर्शः संशयः। हिताहितप्राप्तिपरिहारौ तत्साधनञ्च प्रयोजनम्। हेतोः प्रतिबन्धावधारणं दृष्टान्तः। प्रमाणतोऽभ्युपगम्यमानः सामान्यविशेषवानर्थः सिद्धान्तः। परार्थानुमानवाक्यैकदेशभूताः प्रतिज्ञादयोऽवयवाः। सन्दिग्धेऽर्थेऽन्यतरपक्षानुकूलकारणदर्शनात् तस्मिन् सम्भावनाप्रत्ययस्तर्कः। साधनोपालम्भजन्मा तत्त्वावबोधो निर्णयः। वीतरागवस्तुनिर्णयफलो वादः। विजिगीषुकथा पुरुषशक्तिपरीक्षणफला जल्पः। तद्विशेषो वितण्डा। अहेतवो हेतुवदवभासमाना हेत्वाभासाः। अर्थविकल्पैर्वचनविघातश्छलम्। हेतुप्रतिबिम्बनप्रायं 20 25

---

त्रैकाल्यासिद्धेर्हेतोरहेतुसमः। अहेतुसमादीनां प्रत्यवस्थानानां हेतुप्रतिबिम्बनरूपत्वाभिप्रायं प्रायोग्रहणम्।

प्रत्यवस्थानं जातिः। सत्यवस्त्वप्रतिभासो विपरीतप्रतिभासश्च निग्रहस्थानम्। तत्र वक्ष्यमाणलक्षणसूत्रनिर्देशानुसारेण कानिचिदेकवचनान्तानि पदानि विग्रहे ग्रहीतव्यानि। प्रमाणावयवहेत्वाभासानां बहुवचनेन विग्रहो दर्शयितव्यः, शेषाणामेकवचनेन लक्षणसूत्रेषु तथा निर्देशात्। एवञ्चोद्देशलक्षणयोरेकविषयता
5 नितरां दर्शिता भवति। इतरेतरयोगे द्वन्द्वः समासः।

## प्रथमसूत्रार्थविचारः

प्रमाणादीनां तत्त्वमिति सम्बन्धमात्रे षष्ठी। तत्त्वस्य ज्ञानं निःश्रेयसस्याधिगम इति कर्मणि षष्ठ्यौ, तत्त्वस्य ज्ञायमानत्वेन निःश्रेयसस्य चाधिगम्यमानत्वेन कर्मत्वात्।

10 नन्वेवं व्याख्यायमाने तत्त्वप्रमाणादिपदसापेक्षत्वेनासमर्थत्वादसमासः प्राप्नोति, सापेक्षमसमर्थं भवतीत्याहुः। न चेदं प्रधानं सापेक्षम्, येन भवति वै प्रधानस्य सापेक्षस्यापि समास इति। 'राजपुरुषः शोभनः' इतिवत् समस्येत। उत्तरपदार्थप्रधानत्वात् षष्ठीतत्पुरुषस्य ज्ञानमेवात्र प्रधानं तत्त्वमुपसर्जनम्। अतश्च 'ऋद्धस्य राज्ञः पुरुष' इतिवदसमास एव युक्तः।

15 ननु ज्ञानमपि प्रमाणादिसापेक्षं भवत्येव, तद्विषयं हि तदिति। न, तत्त्वपदेनास्य निराकाङ्क्षीकृतत्वात्। तत्त्वस्य ज्ञानमिति, तदिदानीं तत्त्वमेव सापेक्षं वर्तते, कस्य तत्त्वमिति। तस्मात् तत्त्वस्योपसर्जनस्य सतः सापेक्षत्वादसमास एवेत्येवमभिशङ्कमानाः केचन 'तत्त्वं च तज्ज्ञानं च' इति कर्मधारयं व्याचचक्षिरे। तत् पुनरयुक्तम्, ज्ञानस्य स्वतस्तत्त्वातत्त्वविभागाभावात्। विषयकृतो हि ज्ञानानां
20 तथाभावः, अतथाभावो वा? तदेतत् तत्त्वविषयज्ञानं भवति, न स्वतस्तत्त्वस्वभावम्। किं पुनरिदं तत्त्वं नाम? सतोऽसतो वा वस्तुनः प्रमाणपरिनिश्चितस्वरूपम्, शब्दप्रवृत्तिनिमित्तं तदित्युच्यते। तस्य भावस्तत्त्वमिति। तच्च ज्ञानेन निश्चीयते। तत्परिच्छिन्दज्ज्ञानं तत्त्वज्ञानमित्युच्यते। ज्ञानस्यापि तद्रूपं ज्ञानान्तरपरिच्छेद्यमेव भवति। निर्णयतत्त्वाच्च प्रमाणादय इति व्यतिरेकनिर्देश एव युक्तः। न चासमास-
25 प्रसङ्गमात्रादन्यथावर्णनमुचितम्, ईदृशानां समासानां सामर्थ्यानपायेन बहुशो

---

निर्णेयतत्त्वाच्चेति। प्रमाणादीनां तत्त्वस्यैवात्र निर्णीयमानत्वात् तत्त्वस्य ज्ञानमिति व्यतिरेकनिर्देश एव युक्त इत्यर्थः।

दृष्टत्वात्, देवदत्तस्य गुरुकुलमिति। उपसर्जनं नोपसर्जनमिति। न कारणमेतत्, समासे विग्रहवाक्यसमानार्थतया समासो भवति, सा चेह विद्यत एव। वैयाकरणा अपि ईदृंशि पदानि समस्यन्त्येव, "अथ शब्दानुशासनम्। केषां शब्दानाम्? लौकिकानां वैदिकानाञ्चेति"। तस्माद् यथाभाष्यमेव षष्ठीत्रयव्याख्यानमनवद्यम्।

## शास्त्रप्रतिपाद्यविचारः 5

ननु षोडशपदार्थतत्त्वज्ञानस्य कथं निःश्रेयसाधिगमहेतुत्वमिति वक्तव्यम्। वेदप्रामाण्यसिद्ध्यर्थञ्चेदं शास्त्रमिति तावन्मात्रमेव व्युत्पाद्यताम्, किं षोडशपदार्थ-कन्थाग्रन्थनेन? उच्यते। आत्मापवर्गपर्यन्तद्वादशविधप्रमेयज्ञानं तावदन्यज्ञानानौ-पयिकमेव साक्षादपवर्गसाधनमिति वक्ष्यामः। तत्त्वज्ञानान्मिथ्याज्ञाननिरासे सति तन्मूलः संसारो निवर्तत इति, प्रमेयं तावदवश्योपदेश्यम्। तस्य तु प्रमेयस्यात्मादे- 10 रपवर्गसाधनत्वाधिगम आगमैकनिबन्धनः।

तस्य प्रामाण्यनिर्णीतिरनुमाननिबन्धना।
आप्तोक्तत्वञ्च तल्लिङ्गमविनाभावि वक्ष्यते॥

---

**उपसर्जनं नोपसर्जनमिति**। 'इदमुपसर्जनमतः पदान्तरसापेक्षं न समस्यते, इदन्तु नोपसर्जनं प्रधानम्, अतः पदान्तरसापेक्षमपि समस्यते' इति 15 न कारणम्। विग्रहवाक्यसमानार्थतेति वोच्यते। तर्हि विशेषतो गृह्यते निश्चीयते समासार्थः। तथा हि--'राजपुरुषः' इत्यादौ किं 'राज्ञः पुरुषः' आहोस्वित् 'राजा पुरुषो यस्य' अथ 'राजा चासौ पुरुषश्च' इत्याद्याः शङ्काः 'राज्ञः पुरुषः' इत्यनेन निवर्तन्ते। तेन विग्रहवाक्येन तुल्यार्थता यत्र तत्र समासः। 'राजपुरुषः शोभनः' इत्यत्र 'राज्ञः पुरुषः शोभनः' इति विग्रहवाक्यासमानार्थतया समासो न, प्रधानस्य 20 सापेक्षत्वात्। 'ऋद्धस्य राज्ञः पुरुषः' इत्येतद्विग्रहवाक्यसमानार्थत्वाभावाद् 'ऋद्धस्य राजपुरुषः' इत्यसमासः, नोपसर्जनस्य सापेक्षत्वात्। शब्दानुशासनमित्यत्र शब्दानामनु-शासनमिति समासः, केषां शब्दानामित्येतत्सापेक्षस्यापि 'शब्द'शब्दस्य, अन्यथा समासे गुणीभूतस्य केषामिति प्रत्यवमर्शो न स्यात्।

**अन्यज्ञानानौपयिकमिति**। अन्यज्ञानमनौपयिकमद्वारमनुपायो यस्य। उपाय 25 एवौपयिकमिति स्वार्थे विनयादिपाठात् ठक् ह्रस्वश्च। अन्यज्ञानस्य वाऽनुपायः सदपवर्ग-साधनं न पुनः प्रमाणादिज्ञानमिव प्रमेयज्ञानोपायतयेत्यर्थः।

प्रतिबन्धग्रहे तस्य प्रत्यक्षमुपयुज्यते ।
कोऽन्यस्तत्तरणे हेतुरनवस्थामहोदधेः ॥
आयुर्वेदादिवाक्येषु दृष्ट्वा प्रत्यक्षतः फलम् ।
वचःप्रमाणमाप्तोक्तमिति निर्णीयतां यतः ॥

5 उपमानन्तु क्वचित् कर्मणि सोपयोगमित्येवं चतुष्प्रकारमपि प्रमाणं प्रमेयवद् उपदेष्टव्यम् । संशयादयस्तु पदार्था यथासम्भवं प्रमाणेषु प्रमेये चान्तर्भवन्तोऽपि न्यायप्रवृत्तिहेतुत्वात् पृथगुपदिश्यन्ते । न्यायश्च वेदप्रामाण्यप्रतिष्ठापनपूर्वकत्वेन पुरुषार्थोपयोगित्वमुपयातीति दर्शितम्—

तत्र नानुपलब्धेऽर्थे न निर्णीते प्रवर्तते ।
10 किं तु संशयिते न्यायस्तदङ्गं तेन संशयः ॥
प्रयोजनमनुद्दिश्य न च न्यायं प्रयुञ्जते ।
दृष्टान्तः पुनरेतस्य सम्बन्धग्रहणास्पदम् ॥

सिद्धान्तोऽपि धर्मप्रापणेनाश्रयासिद्धतामपोद्धरन्न्यायं प्रवर्तयति ।

ननु संशयपदेन न्यायविषयं सन्दिग्धं धर्मिणमभिदधताऽऽश्रयासिद्धि-
15 रपोद्धृतैव । सत्यम् । क्वचित् तु विषये संशयमन्तरेण न्यायप्रवृत्तिर्दर्शयिष्यत इति संशयितैकविषयन्यायनियमाभावात् सिद्धान्तोऽपि वक्तव्यः ।

न्यायाभिधानेऽवयवाः परं प्रत्युपयोगिनः ।
परार्थमनुमानञ्च तदाहुर्न्यायवादिनः ॥

ननु प्रतिज्ञोदाहरणाभ्यां तदभिधेयौ सिद्धान्तदृष्टान्तौ गम्येत एव, किं
20 पृथगुपादानेन ? यद्येवं हेत्वाख्येनावयवेन तदभिधेयसिद्धेरनुमानमपि पृथङ् न वक्तव्यं स्यात् । एवं भवतु किं नेश्छिन्नम् ? नैवम्, अभिधेये न्याये निरूपणीये तदभिधायिनामवयवानामवसर इति तदर्थः प्रथमं व्युत्पादनार्हो भवति, इतरथा अवयवमात्रोपदेश एव शास्त्रं समाप्येत ।

---

उपमानं तु क्वचित् कर्मणि सोपयोगं 'गवयमालभेत' इत्यादौ ।

25 संशयमन्तरेण न्यायप्रवृत्तिरिति । यदा कार्यान्तरप्रयुक्तो देशान्तरं गच्छन् सहसैव धूमावलोकनादग्निमनुमिमीते, तदा संशयं विनापि न्यायप्रवृत्तेरुपलम्भः ।

तर्कः संशयविज्ञानविषयीकृततुल्यकल्पपक्षद्वयान्यतरपक्षशैथिल्यसमुत्पादनेन तदितरपक्षविषयं प्रमाणमक्लेशसम्पद्यमानप्रतिपक्षव्युदासमनुगृह्णाति मार्गशुद्धिमादधान इति पृथगुपदिश्यते। स चाशयशुद्धिमुपदर्शयितुं वादे प्रयोक्ष्यत इत्यन्यतराधिकरणनिर्णयमन्तरेण न पर्यवस्यति। न्यायोपरमकारणत्वेन तस्य प्रवर्तको निर्णयः, इतरथा निरवसानमनासादितफलं को नाम न्यायमारभेत। 5

ननु तत्त्वज्ञानपदेन गतार्थत्वान्न पृथग् वक्तव्यो निर्णयः, निर्णयो हि तत्त्वज्ञानमेव। अस्त्येतत्, किं तु षोडशपदार्थतत्त्वज्ञानं प्रमाणान्तरकरणकमपि भवति। न तस्य न्यायोपरमहेतुत्वम्, एष तु साधनदूषणसरणिक्षोदजन्मा निर्णयस्तदुपरमहेतुः पृथगुपादानमन्तरेण न लभ्यते।

नन्वनुमानपदादेव, तर्हि यथाभिलषितो लप्स्यते निर्णयः? तदयुक्तम्। 10 अनुमानफलं निर्णयः, नानुमानम्। करणस्य प्रमाणत्वान्निर्णयोपादानमन्तरेण तदनुमानमफलमपर्यवसितं स्यात्। उभाभ्यां तर्हि तत्त्वज्ञानानुमानपदाभ्यामयमाक्षेप्स्यते निर्णयः, अनुमानस्य तत्त्वज्ञानान्तत्वात्? न निर्णयोपादानाद् विना तदन्तत्वासिद्धेः, लिङ्गाभाससमुत्थतत्त्वज्ञानाभाससम्भवात्।

ननु संशयपूर्वकत्वादनुमानस्य सामर्थ्यान्निर्णयान्ततैव भविष्यतीति 15 संशयानुमानतत्त्वज्ञानैर्गतार्थो निर्णयः? मैवम्; संशयपूर्वकत्वेऽप्यनुमानस्य तदाभासोपजनितनिर्णयाभाससम्भवात्। न चैष नियमः संशयपूर्वकमनुमानमिति। तस्मादनुमानस्य विशिष्टनिर्णयावसानत्वलाभाय निर्णयपदमुपादेयमित्यलं प्रसङ्गेन।

वादे तु विचार्यमाणे न्यायः संशयच्छेदनेनाध्यवसितावबोधम्, अध्यवसिताभ्यनुज्ञातश्च विदधत् तत्त्वपरिशुद्धिमादधातीति वीतरागैः शिष्यसब्रह्मचारिभिः 20 सह वादः प्रयोक्तव्यः।

---

स चाशयशुद्धिमुपदर्शयितुमिति। तर्कस्य प्राङ्नीत्या यद्यपि स्वतः साधनभावो नास्ति, तथाप्याशयशुद्धिं वीतरागत्वं प्रकटयितुम्। तर्कक्रमेण स्वार्थानुमानकाले यथाप्रतिपन्नः स्वयमसावर्थस्तथैव परस्य प्रतिपाद्यते, वीतरागकथात्वाद् वादस्येति।

संशयानुमानतत्त्वज्ञानैरिति। संशये सति यदनुमानं तत उत्पद्यते यत् 25 तत्त्वज्ञानम्, तन्निर्णयस्वभावमेवेति।

जल्पवितण्डे तु दुष्टतार्किकोपरचितकपटदूषणाडम्बरसन्त्रास्यमानसरल-मतिसमाश्वासनेन तद्धृदयस्थतत्त्वज्ञानसंरक्षणाय क्वचिदवसरे वीतरागस्याप्युप-युज्येत इति वक्ष्यामः ।

हेत्वाभासाः सम्यङ्न्यायप्रविवेकोपकारद्वारेण तदुपयोगिनः । हेत्वाभास-
5 स्वरूपावधारणे हि सति तद्विलक्षणतया हेतवः सुखमवगम्यन्ते ।

नन्वत्र विपर्ययो दृश्यते, हेत्ववगमे सति तदितरहेत्वाभासव्यवस्थापनात् । सत्यमेवम्, तथाऽपि प्रयोक्तुश्च द्वयमपि ज्ञेयम्, हेतवः प्रयुज्यन्ते हेत्वाभासाश्च परिह्रियन्त इति । यच्च निग्रहस्थानपरिगणिता अपि हेत्वाभासाः पुनरुपदिश्यन्ते तद्वादे चोदनीया भविष्यन्तीत्याशयेन ।

10 छलजातिनिग्रहस्थानानि जल्पवितण्डोपकरणानि । तेषामवधृतस्वरूपाणां स्ववाक्ये परिवर्जनम्, क्वचिदवसरे प्रयोगः, परप्रयुक्तानाञ्च प्रतिसमाधानमित्यादि शक्यक्रियम्, अतस्तान्यपि जल्पवितण्डाङ्गत्वाद् ज्ञातव्यानीति पृथगुपदिश्यन्ते ।

दुःशिक्षितकुतर्कांशलेशवाचालिताननाः ।
शक्याः किमन्यथा जेतुं वितण्डाटोपपण्डिताः ।।
15 गतानुगतिको लोकः कुमार्गं तत्प्रतारितः ।
मा गादिति च्छलादीनि प्राह कारुणिको मुनिः ।।
तदेवमुपदेष्टव्याः पदार्थाः संशयादयः ।
तन्मूलन्यायनिर्णेयवेदप्रामाण्यसंविदे ।।
तेनागमप्रमाणत्वद्वाराखिलफलप्रदा ।
20 इयमान्वीक्षिकी विद्या विद्यास्थानेषु गण्यते ।।

आह च भाष्यकारः—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां विद्योद्देशे परीक्षितेति ।।

---

आह च भाष्यकार इति । भाष्यकारो हि—सेयमान्वीक्षिकी प्रमाणादिपदार्थैः
25 प्रविभज्यमानेत्येतत्सापेक्षत्वं श्लोकमिमं पपाठ—प्रदीपः सर्वविद्यानामिति । सेय-मान्वीक्षिकी विद्योद्देशाख्ये नीतिशास्त्रप्रकरणे परीक्षिता । या सर्वविद्यानां मध्ये प्रदीप

इत्येष षोडशपदार्थनिबन्धनेन निःश्रेयसस्य मुनिना निरदेशि पन्थाः ।
अन्यस्तु सन्नपि पदार्थगणोऽपवर्गमार्गोपयोगविरहादिह नोपदिष्टः ॥

## शास्त्रप्रवृत्तिप्रकारः

त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरुद्देशो लक्षणं परीक्षेति । नामधेयेन पदार्थाभिधानमुद्देशः । उद्दिष्टस्य तत्त्वव्यवस्थापको धर्मो लक्षणम् । लक्षितस्य तल्लक्षणमुपपद्यते न वेति विचारः परीक्षा । 5

ननु च विभागलक्षणा चतुर्थ्यपि प्रवृत्तिरस्त्येव, भेदवत्सु प्रमाणसिद्धान्तच्छलादिषु तथाव्यवहारात् । सत्यम् । प्रथमसूत्रोपदिष्टे भेदवति पदार्थे भवत्येव विभागः, उद्देशरूपानपायात्तु उद्देश एवासौ । सामान्यसञ्ज्ञया कीर्तनमुद्देशः, प्रकारभेदसञ्ज्ञया कीर्तनं विभाग इति । तथा चोद्देशतयैव तत्र तत्र भाष्यकारो 10 व्यवहरति 'अयथार्थः प्रमाणोद्देशः' इत्याक्षेपे, तस्माद् 'यथार्थ एव प्रमाणोद्देशः' इति च समाधानमभिदधानः । तस्मात्त्रिविधैव प्रवृत्तिः । तत्रोद्देशः प्रथममवश्यं कर्तव्योऽनुद्दिष्टस्य लक्षणपरीक्षानुपपत्तेः । सामान्यविशेषलक्षणयोरपि पौर्वापर्यनियमोऽस्त्येव, अलक्षिते सामान्ये विशेषलक्षणावसराभावात् । परीक्षा तु लक्षणोत्तरकालभाविनीति तत्स्वरूपनिरूपणादेव गम्यते । विभागसामान्यलक्षणयोस्तु 15 नास्ति पौर्वापर्यनियमः, पूर्वं वा सामान्यलक्षणं ततो विभागः पूर्वं वा विभागस्ततः सामान्यलक्षणमुच्यत इति । तदिहोद्देशस्तावद्व्याख्यातः ।

---

इव प्रदीपो वेदप्रामाण्यकारणस्य तदर्थाधिगमोपायस्य च न्यायस्य प्रकाशनात् । उपायः सर्वकर्मणाम् । सुखावाप्तिदुःखपरिहारार्थेषु कर्मसु प्रवृत्तिरनुमानात् तत्साधनत्वनिश्चये सति यतो भवति, अतोऽनुमानव्युत्पादकत्वादियं सर्वकर्मणां प्रवृत्तावुपायः । आश्रयः 20 सर्वधर्माणाम् । धर्मस्वरूपमागमैकसमधिगम्यम् । आगमो न्यायापेक्षः सम्यग्धर्मावबोधको भवति, नान्यथा । यदाह—

आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥

इत्यतस्तदधीनत्वाद् धर्मावबोधस्याश्रयः सर्वधर्माणामित्युक्तम् । 25

अयथार्थः प्रमाणोद्देश इति । 'न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात्'

### प्रकृतग्रन्थे निरूपणीयं वस्तु

अस्माभिस्तु लक्षणसूत्राण्येव व्याख्यास्यन्ते। परीक्षासूत्रसूचितं तु वस्तु सोपयोगलक्षणवर्णनावसरे एव यथाबुद्धि दर्शयिष्यते, न पृथक् परीक्षासूत्रविवरण-श्रमः करिष्यते।

5 प्रथमसूत्रानन्तरं 'दुःखजन्मे'त्यादि द्वितीयं सूत्रं लक्षणानौपयिकत्वान्नेह विवृतम्, अपवर्गपरीक्षाशेषभूतत्वात्तु तदवसर एव निर्णेष्यते, प्रमाणसामान्यलक्षणम्, विभागसूत्रे त्ववसरप्राप्तत्वादिदानीमेव विव्रियते—

"प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" ॥ इति

### प्रमाणपदार्थविचारः

10 अत्रेदं तावद्विचार्यते, किं प्रमाणं नाम ? किमस्य स्वरूपम् ? किं वा लक्षण-मिति ? ततस्तत्र सूत्रं योजयिष्यते। तदुच्यते। अव्यभिचारिणीमसन्दिग्धा-मर्थोपलब्धिं विदधती बोधाबोधस्वभावा सामग्री प्रमाणम्। बोधाबोधस्वभावा हि तस्य स्वरूपम्। अव्यभिचारादिविशेषणार्थोपलब्धिसाधनत्वं लक्षणम्।

### प्रमाणपदनिरुक्तिविचारः

15 ननु च प्रमीयते येन तत्प्रमाणमिति करणसाधनोऽयं प्रमाणशब्दः। करणञ्च साधकतमम्, तमवर्थश्चातिशयः, स चापेक्षिकः, साधकान्तरसम्भवे हि तदपेक्ष-यातिशययोगात् किञ्चित्साधकतममुच्यते। सामग्र्याश्चैकत्वात्तदतिरिक्तसाधका-न्तरानुपलम्भात् किमपेक्षमस्या अतिशयं ब्रूमः ? अपि च कस्मिन्विषये सामग्र्याः प्रमाणत्वम्। प्रमीयमाणो हि कर्मभूतो विषयः, सामग्र्यन्तरीभूतत्वात्सामग्र्ये-वेति करणतामेव यायात्। निरालम्बनाश्चेदानीं सर्वप्रमितयो भवेयुरालम्बन-

20 कारकस्य चक्षुरादिवत्प्रमाणान्तःपातित्वात्। कश्च सामग्र्या प्रमेयं प्रमिमीते ?

---

इत्यस्य विभागाक्षेपसूत्रस्यावतरणिकायाम् 'अयथार्थः प्रमाणोद्देशः' इति भाष्यकृद् विभागमुद्देशशब्देन व्याजहार।

बोधाबोधस्वभावेति। विशेषणज्ञानादेर्बोधस्वभावस्य तत्रानुप्रवेशाद् बोधाबोध-

25 स्वभावेत्युक्तम्।

प्रमातापि तस्यामेव लीनः । एवञ्च यदुच्यते 'प्रमाता प्रमाणं प्रमेयं प्रमितिरिति । चतसृषु विधासु तत्त्वं परिसमाप्यते' इति तद् व्याहन्यते । न च लोकोऽपि सामग्र्याः करणभावमनुमन्यते तस्यां करणविभक्तिमप्रयुञ्जानः । न ह्येवं वक्तारो भवन्ति लौकिकाः 'सामग्र्या पश्याम' इति, किन्तु 'दीपेन पश्यामः' चक्षुषा निरीक्षामहे इत्याचक्षते । तस्मान्न सामग्री करणम्, अकरणत्वाच्च न प्रमाणमिति नेदं साधु प्रमाणस्वरूपम् । 5

## करणस्वरूपविचारः

अत्रोच्यते—यत एव साधकतमं करणं करणसाधनश्च प्रमाणशब्दः, तत एव सामग्र्याः प्रमाणत्वं युक्तम् । तद्व्यतिरेकेण कारकान्तरे क्वचिदपि तमबर्थसंस्पर्शानुपपत्तेः । अनेककारकसन्निधाने कार्यं घटमानमन्यतरव्यपगमे च विघटमानं कस्मा अतिशयं प्रयच्छेत् ? न चातिशयः कार्यजन्मनि कस्यचिदवधार्यते, सर्वेषां तत्र व्याप्रियमाणत्वात् । सन्निपत्यजनकत्वमतिशय इति चेन्न । आरादुपकारकाणामपि कारकत्वानपायात् । ज्ञाने च जन्ये किमसन्निपत्य जनकम् ? सर्वेषामिन्द्रियमनोऽर्थादीनामितरेतरसंसर्गे सति ज्ञाननिष्पत्तेः । अथ सहसैव कार्यजननमतिशयः, सोऽपि कस्याञ्चिदवस्थायां करणस्येव कर्मणोऽपि शक्यते वक्तुम् । अविरलजलधरधाराप्रबन्धबद्धान्धकारनिवहे बहुलनिशीथे सहसैव स्फुरता विद्युल्लतालोकेन कामिनीज्ञानमादधानेन तज्जन्मनि सातिशयत्वमवाप्यते । एवमितरकारककदम्बसन्निधाने सत्यपि सीमन्तिनीमन्तरेण तद्दर्शनं न सम्पद्यते । आगतमात्रायामेव तस्यां भवतीति तदपि कर्मकारकमतिशययोगित्वात्करणं स्यात् तस्मात्फलोत्पादाविनाभाविस्वभावत्वमवश्यतया कार्यजनकत्वमतिशयः । स च सामग्र्यन्तर्गतस्य न कस्यचिदेकस्य कारकस्य कथयितुं पार्यते, सामग्र्यास्तु सोऽतिशयः सुवचः । सन्निहिता चेत्सामग्री, सम्पन्नमेव फलमिति सैवातिशयवती । 10 15 20

---

**चतसृषु विधास्विति** । तत्त्वं परिसमाप्यते, अर्थः परिसमाप्तो भवति; नाधिकापेक्षोपयुज्यत इत्यर्थः ।

**सन्निपत्य जनकत्वमिति** । अन्यकारकव्यापाराव्यवधीयमानव्यापारत्वं सन्निपत्य जनकत्वम् । फलोत्पादाविनाभाविस्वभावो यावन्न भवति, तावत् कथमवश्यतया कार्यजनको भवेत्, ताद्रूप्यं च सामग्रीतो नान्यस्येति । 25

ननु मुख्ययोः प्रमातृप्रमेययोरपि तदविनाभावित्वमतिशयोऽस्त्येव, प्रमिति-सम्बन्धमन्तरेण तयोस्तथात्वाभावात् । प्रमिणोतीति प्रमाता भवति, प्रमीयते इति च प्रमेयम् । सत्यमेतत् । किन्तु साकल्यप्रसादलब्धप्रमितिसम्बन्धनिबन्धनः प्रमातृप्रमेययोर्मुख्यस्वरूपलाभः, साकल्यापचये प्रमित्यभावाद् गौणे प्रमातृप्रमेये सम्पद्येते, एवञ्च साकल्यमन्तरेण प्रमितितमबर्थयोगात्तदेव करणम् । 5

## सामग्रीविचारः

यत्तु किमपेक्षं सामग्र्याः करणत्वमिति ? तदन्तर्गतकारकापेक्षमिति ब्रूमः । कारकाणां धर्मः सामग्री न स्वरूपहानाय तेषां कल्पते, साकल्यदशायामपि तत्स्व-रूपप्रत्यभिज्ञानात् ।

10 ननु समग्रेभ्यः सामग्री भिन्ना चेत्कथं पृथङ् नोपलभ्यते ? अभेदे तु सर्व-कारकाणि करणीभूतान्येवेति कर्तृकर्मव्यवहारोच्छेदप्रसङ्गः । मैवम् । समग्र-सन्निधानाख्यधर्मस्य प्रत्यक्षमुपलम्भात् । पृथगवस्थितेषु हि स्थालीजलज्वलन-तण्डुलादिषु न समग्रताप्रत्ययः । समुदितेषु तु भवतीत्यतस्तन्तुपटलपरिघटितपटा-द्यवयवित्कारककलापनिष्पाद्यद्रव्यान्तराभावेऽपि समुदायात्मिका सामग्री विद्यत 15 एवेति समुदाय्यपेक्षया करणतां प्रतिपद्यते । तस्मान्न परिचोदनीयमिदं कस्मि-न्कर्मणि सामग्री करणमिति । समुदायिनां सामग्र्यवस्थायामपि स्वरूपानपायात् समुदायिविशेषे कर्मणि सामग्री करणम् । अत एव न प्रमितेर्निरालम्बनत्वम् । एतेन प्रमाता पृथगुपदर्शित इति विधाचतुष्टयमपि समाहितम् ।

यत्त्वभ्यधायि सामग्र्याः करणविभक्तिनिर्देशो न दृश्यत इति, तत्रोच्यते । 20 सामग्री हि संहतिः, सा हि संहन्यमानव्यतिरेकेण न व्यवहारपदवीमवतरति । तेन सामग्रीं पश्यामीति न व्यपदेशः । यस्तु दीपेन्द्रियाणां तृतीयानिर्देशः स फलो-

---

ननु मुख्ययोः प्रमातृप्रमेययोरिति । तत्कालं प्रमामकुर्वन्नपि योग्यतया यः प्रमातेति भण्यते स गौणः, यस्तु तत्कालमेव प्रमाजन्मनि व्याप्रियते स मुख्यः । एवं प्रमेयमपि ।

25 कारककलापनिष्पाद्यद्रव्यान्तराभावेऽपीति । विजातीयानां द्रव्यारम्भकत्वा-दर्शनादिति भावः ।

पजननाविनाभाविस्वभावत्वाख्यसामग्रीसरूपसमारोपणनिबन्धनः । अन्यत्रापि च तद्रूपसमारोपणे स्थाल्या पचतीति व्यपदेशा दृश्यत एव । तस्मादन्तर्गतकारकापेक्षया लब्धकरणभावा सामग्री प्रमाणम् ।

अपरे पुनराचक्षते, सामग्री नाम समुदितानि कारकाणि, तेषां द्वैरूप्यमहृदयङ्गमम्, अथ च तानि पृथगवस्थितानि कर्मादिभावं भजन्ते, अथ च तान्येव समुदितानि करणीभवन्तीति कोऽयं नयः ? तस्मात्कर्तृकर्मव्यतिरिक्तमव्यभिचारादिविशेषणकार्थप्रमाजनकं कारकं करणमुच्यते ? तदेव च तृतीयया व्यपदिशन्ति । दीपेन पश्यामि, चक्षुषा निरीक्षे, लिङ्गेन बुध्ये, शब्देन जानामि, मनसा निश्चिनोमीति ।

ननु त्रीण्येव कारकाण्यस्मिन् पक्षे भवेयुः, ज्ञानक्रियायां तावदेवमेवैतद्यथा भवानाह । पाकादिक्रियासु क्रियाश्रयसाधारणाद्युपकारभेदपर्यालोचनया भवत्वधिकरणादिकारकान्तरव्यवहारः । प्रमितौ तु मनोदीपचक्षुरादेर्न लक्ष्यते विशेष इति तत्सर्वं कारणत्वेन सम्मतम् । कस्तेषु तमबर्थं इति चेत्, अस्ति कश्चिद् यदयं लोकोऽहं मया जानामि' 'घटेन घटं जानामि' इति न कर्तृकर्मणी विस्मृत्यापि करणत्वेन व्यपदिशति । नयनमनोदीपशब्दलिङ्गादीनि तु तथा व्यपदिशति । सोऽयमेषां पश्यतिं कर्तृकर्मवैलक्षण्यं चक्षुरादीनाम् । तद्वैलक्षण्यमेव च तेषामतिशय इति तदयमिह प्रमाणं प्रमाता प्रमेयं प्रमितिरिति चतुर्वर्गेणैव व्यवहारः परिसमाप्यते । तस्मात्कर्तृकर्मविलक्षणा संशयविपर्ययरहितार्थावबोधविधायिनी बोधाबोधस्वभावा सामग्री प्रमाणमिति युक्तम् ।

---

तस्मात् कर्तृकर्मविलक्षणा संशयविपर्ययरहितार्थावबोधविधायिनी बोधाबोधस्वभावा सामग्री प्रमाणमिति युक्तमित्यत्र सामग्रीशब्दः समग्रप्रधानो द्रष्टव्यः । कर्तृकर्मव्यतिरिक्तं जनकं यत् तत् प्रमाणमित्यर्थः । अन्यथा ह्युपक्रमे कर्तृकर्मव्यतिरिक्तस्य कारकमात्रस्योदाहरणप्रदर्शनेन प्रमाणत्वं प्रतिज्ञायोपसंहारे सामग्र्यास्तत्प्रतिपादनेनोपक्रमोपसंहारयोर्विरोधः स्यात् । एतच्च यथोपलब्धपाठानुसरणेन व्याख्यातम् । स्पष्टगमनिकाप्रायं चेत् पाठान्तरं क्वचिद् भवेत्, तत् सैव गमनिकाऽस्तु । एवमन्यत्रापि पाठानिश्चये द्रष्टव्यम् ।

## ज्ञानस्यैव प्रमाणत्वं न वेति विचारः

ये तु बोधस्यैव प्रमाणत्वमाचक्षते न सूक्ष्मदर्शनास्ते। बोधः खलु प्रमाणस्य फलं न साक्षात्प्रमाणम्। करणार्थाभिधानो हि प्रमाणशब्दः प्रमीयतेऽनेनेति प्रमाणम्। प्रमीयते इति कोऽर्थः? प्रमा जन्यते इति, प्रमाणादवगच्छाम इति च
5 वदन्तो लौकिकाः करणस्यैव प्रामाण्यमनुमन्यन्ते। यस्तु प्रमा प्रमाणमिति प्रमाणशब्दः स प्रमाणफले द्रष्टव्यः। तथा च संशयविपर्ययात्मकं प्रमाणाद्धि भिन्नं फलमिति ज्ञानमात्ममनोऽनुमाने, तद्विशेषणार्थपरिच्छेदे वा, विशिष्टप्रमाणजननात्प्रमाणतां प्रतिपद्यते। अव्यभिचारादिविशेषणोपपन्नमपि ज्ञानमफलजनकमप्रमाणमेव प्रमाणमुच्यते।

10 तदयुक्तम्। सकलजगद्विदितबोधेतरस्वभावशब्दलिङ्गदीपेन्द्रियादिपरिहारप्रसङ्गात्। तस्मात्सामग्र्यनुप्रविष्टबोधो विशेषणज्ञानमिव क्वचित्प्रत्यक्षे, लिङ्गज्ञानमिव लिङ्गिप्रमितौ, सारूप्यदर्शनमिवोपमाने, शब्दश्रवणमिव तदर्थज्ञाने, प्रमाणतां प्रतिपद्यते। अत एव बोधाबोधस्वभावा सामग्री प्रमाणमित्युक्तम्।

## निराकारज्ञानवादिवैभाषिकमतम्

15 अन्ये तुल्यसामग्र्यधीनयोर्ज्ञानार्थयोर्ग्राह्यग्राहकभावं वदन्तो बोधं प्रमाणमभ्युपागमन्, क्षणभङ्गिषु पदार्थेषु सहकार्युपादानकारणापेक्षक्षणान्तरसन्तति-

---

तथा च संशयविपर्ययात्मकमिति। यदा करणसाधनेन प्रमाणशब्देन लोके व्यवहारः एवं सति फलस्य प्रमारूपस्याप्रामाण्यं सिध्यति। फलप्रमाणपक्षे पुनः संशयज्ञानस्य, प्रमाणलक्षणविरहाद् यत् क्वचित् सिद्धं प्रामाण्यं 'संशयितोऽयमर्थः' इत्यादौ
20 विशेषणत्वेन तद्धीयते। फलान्तराजनकत्वेन च यदप्रामाण्यमकारकस्य फलस्य, तदपि न परिगृहीतं भवतीति तात्पर्यम्।

ननु फलात्मकत्वेन तस्यार्थाधिगमे व्यापृतत्वात् प्रमाणत्वं भविष्यति, तन्नेत्याह— "प्रमाणाद्धि भिन्नं फलम्" इति।

25 अन्ये तुल्यसामग्र्यधीनयोरिति। अजनकोऽप्यर्थः सहभाविज्ञानेन गृह्यत इति निराकारज्ञानवादिनां वैभाषिकाणां दर्शनम्। अजनकस्य च ग्राहकत्वेऽन्यस्यापि तत्कालभाविनोऽर्थक्षणस्य तज्ज्ञानं किमिति न ग्राहकमित्यतिप्रसङ्गनिवारणाय तुल्य

**जननेन च लोकयात्रामुद्वहत्सु ज्ञानजन्मनि ज्ञानमुपादानकारणम्, अर्थः सहकारि-कारणम्, अर्थजन्मनि चार्थ उपादानकारणम्, ज्ञानं सहकारिकारणमिति, ज्ञानञ्च ज्ञानार्थजन्यमर्थश्चार्थज्ञानजन्यो भवतीत्येवमेकसामग्र्यधीनतया तमर्थमव्यभिचरतो ज्ञानस्य तत्र प्रामाण्यमिति ।**

## साकारज्ञानवादिनां सौत्रान्तिकानां मतम् 5

**तदिदमनुपपन्नम्, अफलजनकस्य प्रमाणत्वापत्तेरित्युक्तत्वात् । अपि च कर्मणि ज्ञानं प्रमाणमिष्यते । यथोक्तम्,**

**'सव्यापारमिवाभाति व्यापारेण स्वकर्मणेति' ।**

**स चायमर्थक्षणो ज्ञानसमकालस्ततः पूर्वाभ्यां ज्ञानार्थक्षणाभ्यामुपजनित इति तत्कर्मतां प्रतिपद्यतां न पुनःस्वसमानकालप्रसूतज्ञानक्षणकर्मतामिति ।** 10

**ननु च तुल्यसामग्र्यधीनतया समानकालतया च तदव्यभिचारसिद्धौ क्व कर्मत्वमुपयुज्यते ? हन्त तर्हि सहोत्पन्नयोः समानसामग्रीकयोर्ग्राह्यग्राहकनियमः**

---

सामग्र्यधीनयोरित्युक्तम् । एकसामग्र्युत्पन्नत्वेन तस्यैव तद् ग्राहकम्, नान्यस्य; यथैतद्ग्रहणे तुल्यसामग्र्यधीनत्वं तस्य नियामकमस्ति तथाऽन्यग्रहणे न किञ्चिदस्तीत्यर्थः । पूर्वभावी स्वसन्तानगतसदृशक्षण उपादानकारणम् । यदुक्तम्— 15

"सभागहेतुः सदृशाः स्वसन्तानभुवो क्षणाः ।" इति ।

तदन्यः सहकारिकारणम् । तथा चाहुः—

"ततोऽन्ये कारणं हेतुः सहभूर्ये मिथः फलाः ।" इति ।

यत्पुनर्द्वितीयमुपादानकारणलक्षणं कृतम्—'यदुत्पत्तौ यत्सन्ताननिवृत्तिस्तत्तस्यो-पादानकारणम्' इति तद् विसदृशोत्पादाभिप्रायम् । तथाहि—घटोत्पत्तौ मृत्पिण्डसन्तान-निवृत्तिः; अनुत्पन्ने हि घटे मृत्पिण्डक्षणा एव सन्तानेनोत्पद्यन्ते घटे तूत्पन्ने घटक्षणा इति । 20

**अपि च कर्मणि ज्ञानं प्रमाणमिष्यत** इति । कर्म हि विषयो भण्यते, विषयश्च स भवति यमालम्ब्य भूतमभूतं ज्ञानं सत्तां प्रतिलभते । न चायं न्यायः सहोत्पद्य-मानयोरस्ति । अत्रैव सामान्येन **बौद्धदर्शन**मात्राश्रयणेन ज्ञापकमाह—**यथोक्तम्, सव्यापारमिवाभातीति** । ननु च **साकारज्ञानवादिनामिदं** वचनम् । तथा च पूर्वमर्धम्— 25

किं कृत इति ? कर्त्तव्यं ज्ञानं प्रकाशस्वभावमिति ग्राहकम् । अर्थो जडात्मेति ग्राह्य-मिति चेदयमपि विशेषस्तुल्यकारणयोः कुतस्त्यः ? उपादानसहकारिकारणभेदादिति चेन्न । तस्य क्षणभङ्गभङ्गे निराकारयिष्यमाणत्वात् ।

### तत्र विज्ञानवादिमतम्

5 ये हि निराकारस्य बोधरूपस्य नीलपीताद्यनेकविषयसाधारणत्वाज् जन-कत्वस्य च चक्षुरादावपि भावेनातिप्रसङ्गात्तदाकारकृतमेव ज्ञानकर्मनियममव-गच्छन्तः साकारविज्ञानं प्रमाणमिति प्रतिपेदिरे, तेऽपि विज्ञानाद्वैतसिषाधयिषयैव-मभिदधानास्तन्निरासप्रसङ्ग एव निरसिष्यन्ते । न ह्येकमेव साकारं ज्ञानं ग्राह्यं ग्राहकञ्च भवितुमर्हतीति वक्ष्यते । अर्थस्तु साकारज्ञानवादिनो न समस्त्येव । स

10 ह्यनुमेयो वा स्यात्प्रत्यक्षो वा ? नानुमेयः सम्बन्धग्रहणाभावात् ।

अर्थे हि सति साकारं निराकारं तदत्यये ।
नित्यानुमेयबाह्यार्थवादी ज्ञानं क्व दृष्टवान् ।।

नापि प्रत्यक्षोऽर्थः, आकारद्वयप्रतीत्यभावात्, अभ्युपगमे चानवस्थाप्रसङ्गात् । अर्थाकारो हि निराकारज्ञानगम्यो न भवतीति ज्ञानेनाकारवत्ता गृह्यते । सोऽय-

15 मिदानीं ज्ञानाकारोऽपि ग्राह्यत्वादन्येनाकारवता गृह्यते सोऽप्यन्येनेति । अथ वा अर्थो निराकारज्ञानगम्यो न भवतीति स्वग्राहके ज्ञानात्मनि समर्पितात्मा

---

'दधानं तच्च तामात्मन्यर्थाधिगमनात्मना' इति । अस्यार्थः—तज्ज्ञानं तामर्थरूपतां दधानं सद् यदा स्वकर्मणि स्वस्मिन् विषये ग्राह्ये नियतार्थग्रहणलक्षणेन व्यापारेण सव्यापारं नियतार्थग्रहणलक्षणव्यापारयोगीवाभाति । तस्मात् सैवार्थाकारता प्रमाणम्, तद्वशान्

20 नीलस्येदं पीतस्येदमिति नियतनीलाद्यर्थग्रहणवदिव ज्ञानं लक्ष्यत इति तात्पर्यम् । **बौद्धमते** निर्व्यापारत्वात् सर्वधर्माणाम् 'इव'शब्दोपादानम् । एवं च **वैभाषिकमते** इदं दूषणं कथं सङ्गच्छते ? सत्यम् । किन्तु स्वस्मिन् विषये ज्ञानस्य प्रामाण्यं तैरपीष्यते । अत एव तन्मतसंवादिन एव श्लोकाकारस्योपन्यासः कृतः । अथवा **वैभाषिकै**-रनिष्यमाणमपि बलादेतदङ्गीकार्यम्, अन्यथा निर्विषयत्वे ज्ञानस्य **योगाचारदर्शना**-

25 पत्तिप्रसङ्गात् ।

**अथ वा अर्थो निराकारज्ञानगम्यो न भवतीत्यादिना** अनुमानादर्थव्यवस्था-पनेऽप्यनवस्थामाह—**पुनरन्योऽर्थः कल्पनीय इति** । साकारस्य ज्ञानस्याकारजनकोऽर्थो-

विनियोक्त्री हि श्रुतिः सर्वत्र प्रकरणादौ वाक्यविद्भिरभ्युपगम्यते । यथोक्तं 'विनियोक्त्री श्रुतिस्तावत्सर्वेष्वेतेषु सम्मतेति' । तस्याश्च नित्यपरोक्षत्वाद् दुरधिगमस्तत्र लिङ्गस्य प्रतिबन्धः । न च निशापदवचनस्य सत्तानुमातुमपि शक्या । तस्यां साध्यायां भावाभावोभयधर्मकस्य हेतोरसिद्धविरुद्धानैकान्तिकत्वेनाहेतुत्वात् । न चात्र धर्मः कश्चिदुपलभ्यते यस्तेन तद्वान् पर्वत इवाग्निमाननुमीयते । न च 5 दिवावाक्यं तदर्थोऽपि निशावचनानुमाने लिङ्गतां प्रतिपत्तुमर्हति ।

अश्रुते हि निशावाक्ये कथं तद्धर्मताग्रहः ।
श्रुते तस्मिंस्तु तद्धर्मग्रहणे किं प्रयोजनम् ॥

दिवावाक्यपदार्थानां तिष्ठतु लिङ्गत्वम्, अनुपपद्यमानतयापि न निशावाक्यप्रत्यायकत्वमवकल्पते । पदार्थानां हि सामान्यात्मकत्वाद्विशेषमन्तरेणानुपपत्तिः 10 स्यान् न वाक्यान्तरमन्तरेण । तस्माच्छ्रूयमाणं वाक्यमेव तदेकदेशमन्तरेण निराकाङ्क्षप्रत्ययोत्पादकस्वव्यापारनिर्वहणं सन्धिमनधिगच्छत्तदेकदेशमाक्षिपतीति । सेयं प्रमाणैकदेशविषया श्रुतार्थापत्तिः ।

---

इति द्वितीयाश्रुतितोऽपि 'व्रीह्यर्थोऽवघातः' इति श्रुत्यन्तरकल्पनमिच्छति । लिङ्गेन श्रुतिकल्पनं यथा 'बर्हिर्देवसदनं दामि' इति मन्त्रस्याभिधानसामर्थ्यलक्षणेन लिङ्गेन 15 बर्हिर्लवनमनेन मन्त्रेण कर्तव्यमिति श्रुतेः परिकल्पनम् । तथाहि देवाः सीदन्त्यस्मिन्निति देवसदनं बर्हिर्दामि लुनामीत्यभिधानसामर्थ्यम् । वाक्याद् यथा 'अरुणयैकहायन्या सोमं क्रीणाति' इति श्रुत्या क्रयार्थयोररुणैकहायन्योर्वाक्यादेकक्रियासम्बन्धनिबन्धनादेकहायनीद्रव्यारुणगुणयोः परस्परसम्बन्धावगमकश्रुतिपरिकल्पनम् । प्राभाकरास्तु वाक्योदाहरणम् 'अरुणया क्रीणाति' इत्येवमाहुः; क्रीणातिपदारुणपदसम्बन्धात्मकाद् वाक्या- 20 दस्मादेवारुणायाः क्रयार्थत्वं प्रतीयते, न तृतीयया श्रुत्या । सा हि कारकमात्रे अक्रियाशेषेऽपि दृष्टा । यथा 'गोदोहनेन पशुकामस्य प्रणयेत्' इति फलार्थत्वादप्रणयनार्थस्यापि गोदोहनस्य कारकतयैव प्रणयनेन सम्बन्धः, न प्रणयनशेषतया । यथा च शाल्यर्थं कुल्यानां प्रणीतानां य आचमनपानादिना सम्बन्धो नासावाचमनादिशेषतया अपि तु कारकत्वेन, एवं तृतीयाया अतच्छेषभूतेऽपि प्रयोगदर्शनान्न ततः शेषत्वनिश्चयः, 25 किन्तु पदान्तरसम्बन्धात्मकवाक्यादेव । अतोऽत्र 'अरुणया क्रीणाति' इति न तृतीययैव शेषत्वप्रतिपत्तिः, अपि तु क्रीणातिपदसमभिव्याहारात्मकाद् वाक्या-

**तन्वर्थादेव कथमर्थान्तरं न कल्प्यते। पीवरत्वं हि नाम भोजनकार्यमुपलभ्यमानं स्वकारणं भोजनमनलमिव धूमः समुपस्थापयतु। तच्च वचसा कालविशेषे निषिद्धं तदितरकालविशेषविषयं भविष्यतीति किं वचनानुमानेन? वचनमपि नादृष्टार्थमपि तु अर्थगत्यर्थमेव। तदस्य साक्षादर्थस्यैव कल्प्यमानस्य को दोषो यद्व्यवधानमाश्रीयते। उच्यते**

**शब्दप्रमाणमार्गेऽस्मिन्ननभिज्ञोऽसि बालक।**
**प्रमाणतैव न ह्यस्य साकाङ्क्षज्ञानकारिणः॥**
**पुरोऽवस्थितवस्त्वंशदर्शनप्राप्तिनिर्वृतिः।**
**प्रत्यक्षादि यथा मानं न तथा शाब्दमिष्यते॥**
**वाक्यार्थे हि समग्रांशे परिपूरणसुस्थिते।**
**अभिधाय धियं नास्य व्यापारः पर्यवस्यति॥**
**तावन्तं बोधमाधाय प्रामाण्यं लभते वचः।**
**तदर्थवाचकत्वाच्च तद्वाक्यं वाक्यमिष्यते॥**
**शब्दैकदेशश्रुत्यातस्तदंशपरिपूरणम्।**
**कल्प्यं प्रथममर्थस्य कुतस्तेन विना गतिः॥**

---

देवेत्याहुः। प्रकरणात् 'समिधो यजति' इत्यादीनां प्रयाजादीनां दर्शपूर्णमासप्रकरणे श्रवणात् तादर्थ्यप्रतिपादकश्रुतिकल्पनम्। स्थानाद् यथा 'दब्धिर्नामास्य दब्धोऽहं भ्रातृव्यं दभेयम्' इति मन्त्रस्योपांशुयाजस्य स्थाने क्रमे सन्निधावाम्नातस्य प्रकरणात् सकलदर्शपूर्णमासार्थत्वे प्राप्ते स्थानाद् देशसाम्यादुपांशुयाजार्थभावगमकश्रुतिपरिकल्पनम्। अनाम्नातकर्तृकेषु पुरोडाशादिषु पदार्थेष्वाध्वर्यवमित्यादिसमाख्यया अध्वर्य्वादिकर्तृकत्वप्रतिपादयितृश्रुतिकल्पनं यत् तत् समाख्यायाः।

**भावाभावोभयधर्मकस्येति**। यदाह

नासिद्धे भावधर्मोऽस्ति व्यभिचार्युभयाश्रयः।
धर्मो विरुद्धोऽभावस्य सा सत्ता साध्यते कथम्॥ इति।

**वाक्यार्थे हि समग्रांशे**। वाक्यार्थो हि देवदत्तस्य पीनताख्येन धर्मेण कालविशेषावच्छिन्नस्वकारणभूतभोजननिषेधसहितेन संसर्गः। स यदि रात्रौ न भुङ्क्ते कदा तर्हि भुङ्क्ते?, भोजनं विना च कथं पीन इति सापेक्षत्वाद् दुःस्थितो न समग्रैरपेक्षितैरंशैः

प्रायः श्रुतार्थापत्त्या च वेदः कार्येषु पूर्यते ।
तत्रार्थः कल्प्यमानस्तु न भवेदेव वैदिकः ॥
या मन्त्रैरष्टकालिङ्गैस्तद्विधः परिकल्प्यते ।
श्रुतिलिङ्गादिभिर्या च कल्प्यते विनियोजिका ॥
विश्वजित्यधिकारश्च यागकर्तव्यताश्रुतेः । 5
उत्पत्तिवाक्यं सौर्यादावधिकारविधिश्रुतेः ॥
ऐन्द्राग्न्यादिविकारेषु कार्यमात्रोपदेशतः ।
यश्च प्रकृतिवद्भावो विध्यन्त उपपाद्यते ॥
तदेवमादौ सम्बन्धग्रहणानुपपत्तितः ।
श्रुतार्थापत्तिरेवैषा निःसपत्नं विजृम्भते ॥ 10
तया श्रुत्यैकदेशश्च सर्वत्र परिकल्प्यते ।
अर्थकल्पनपक्षे तु न स्याद्वेदैकगम्यता ॥
इत्यर्थापत्तिरुक्तैषा षट्प्रमाणसमुद्भवा ।

---

परिपूरितः, यदा सुस्थितो निराकाङ्क्षो भवति तदाऽसौ वाक्येन प्रतिपादितो भवति । भावतस्तु निराकाङ्क्षस्य प्रतिपादकं वाक्यमुच्यते । यदाहुः 15

साकाङ्क्षावयवं भेदे परानाकाङ्क्षशव्दकम् ।
क्रियाप्रधानं गुणवदेकार्थं वाक्यमुच्यते ॥

समग्रांशपरिपूरणदुःस्थित इति तु पाठे समग्रांशानां परिपूरणाय परिपूरयितुं परिपूरणनिमित्तं दुःस्थित इति व्याख्येयम् । समग्राङ्गपरिपूरणेति तु पाठे स्पष्ट एवार्थः । **या मन्त्रैरष्टकालिङ्गैरिति** । 20

यां जना अभिनन्दन्ति रात्रिं धेनुमिवायतीम् ।
संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली ॥

'अष्टकायै सुराधसे स्वाहा' इत्यादयो मन्त्रा अष्टकादिकर्मविशेषप्रकाशका दृश्यन्ते, न चाविहितस्य प्रकाशनमस्ति; विहितानां कर्मणां प्रयोगकाले मन्त्रैः प्रकाशनात् । अतो मन्त्रप्रकाशनान्यथानुपपत्तितः 'अष्टकाः कर्तव्या' इति वैदिकविधिपरिकल्पनम् । **श्रुति-लिङ्गादिभिर्या चेति** प्राग् व्याख्यातम् । **विश्वजित्यधिकारश्चेति** । 'विश्वजिता यजेत' इति हि तत्र श्रूयते, यजेत यागः कर्त्तव्य इति । स च निष्फलः, कथं कर्तव्य इति ? तत्कर्तव्यतासिद्धये 25

## अर्थापत्तेः प्रमाणान्तरतानिरासः

एषा विचार्यमाणा तु भिद्यते नानुमानतः ॥
प्रतिबन्धाद्विना वस्तु न वस्त्वन्तरबोधकम् ।
यत्किञ्चिदर्थमालोच्य न च कश्चित्प्रतीयते ॥
प्रतिबन्धोऽपि नाज्ञातः प्रयाति मतिहेतुताम् ।
न सद्योजातबालादेरुद्भवन्ति तथाधियः ॥
न विशेषात्मना यत्र सम्बन्धज्ञानसम्भवः ।
तत्राप्यस्त्येव सामान्यरूपेण तदुपग्रहः ॥

अपि च तेन विना नोपपद्यत इति च व्यतिरेकभणितिरियम् । व्यतिरेकश्च
10 प्रतीतः, तस्मिन् सत्युपपद्यत इत्यन्वयमाक्षिपति । अन्वयव्यतिरेकौ च गमकस्य लिङ्गस्य धर्मं इति कथमर्थापत्तिर्नानुमानम् ? केवलव्यतिरेकी हेतुरन्वयमूल एव गमक इति वक्ष्यामः ।

## अतीन्द्रियशक्तेर्निर्विषयत्वप्रदर्शनम्

याश्च प्रत्यक्षादिपूर्विकाः शक्तिकल्पनायामर्थापत्तय उदाहृतास्ताश्च शक्ते-
15 रतीन्द्रियाया अभावान् निर्विषया एव ।

---

फलाक्षेपः, तच्चाधिकारनिमित्तत्वादधिकारशब्देनोक्तं फलम् । अथवा 'विश्वजिता यजेत' इति केवला प्रेरणा श्रूयते । सा च प्रेर्यं विना कस्येति तस्या अनुपपत्त्या स्वर्गकाम इति प्रेर्यसमर्पकपदपरिकल्पनम् । यागस्य कर्तव्यता तद्विषयप्रेरणावशाद् भवति । अधिक्रियत इत्यधिकारः स्वर्गकामः प्रेर्यस्तस्य कल्पना । 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः'
20 इति अत्र ब्रह्मवर्चसं प्रति सौर्यस्य चरोर्विधानं श्रूयते । न चानवगतस्वरूपस्यात्र विधानं सम्भवति । अतोऽधिकारविध्यन्यथानुपपत्त्या कर्मस्वरूपावगमकस्योत्पत्तिविधि-कल्पनम् । दर्शपूर्णमासयोर्हि 'आग्नेयोऽष्टाकपालो भवति' इत्यादिवाक्येभ्योऽवगत-स्वरूपयोः स्वर्गं प्रति 'दर्शपूर्णमासाभ्यां यजेत स्वर्गकामः' इति विधानात् । 'ऐन्द्राग्नं चरुं निर्वपेत् प्रजाकामः' इत्यादौ कार्यमात्रं भावनामात्रं करणम्, फलञ्च आग्नेयेन
25 चरुणा भावयेदिति निर्दिष्टम् । कथमंशस्तु नोपदिष्टः । न चानुपकृतं करणं भवतीति करणरूपतान्यथानुपपत्त्या 'प्रकृतिवद् विकृतिः कर्तव्या' इति कल्प्यते । उपदिष्टेति-कर्तव्यताकं कर्म प्रकृतिः, अनुपदिष्टेतिकर्तव्यताकं तु विकृतिः । विध्यन्त इतिकर्तव्यता ।

स्वरूपादुद्भवत्कार्यं सहकार्युपबृंहितात् ।
न हि कल्पयितुं शक्तं शक्तिमन्यामतीन्द्रियाम् ॥

ननु शक्तिमन्तरेण कारकमेव न भवेत् । यथा पादपं छेत्तुमनसा परशुरुद्यम्यते तथा पादुकाद्यपि उद्यम्येत । शक्तेरनभ्युपगमे हि द्रव्यस्वरूपाविशेषात्सर्वस्मात् सर्वदा कार्योदयप्रसङ्गः । तथा हि विषदहनयोर्मारणे दाहे च शक्तावनिष्यमाणायां मन्त्रप्रतिबद्धायां स्वरूपप्रत्यभिज्ञायां सत्यामपि कार्यौदासीन्यं यद् दृश्यते तत्र का युक्तिः ? न हि मन्त्रेण स्वरूपसहकारिसान्निध्यं प्रतिबध्यते, तस्य प्रत्यभिज्ञायमानत्वात् । शक्तिस्तु प्रतिबध्यत इति सत्यपि स्वरूपे सत्स्वपि सहकारिषु कार्यानुत्पादो युक्तः । किञ्च सेवाद्यर्जनादिसाम्येऽपि फलवैचित्र्यदर्शनादतीन्द्रियं किमपि कारणं कल्पितमेव धर्मादिर्भवद्भिः, अतः शक्तिरतीन्द्रिया तथाभ्युपगम्यतामीति ।

तदेतदनुपपन्नम् । यत्तावदुपादाननियमादित्युक्तम्, तत्रोच्यते न हि वयमद्य किञ्चिदभिनवं भावानां कार्यकारणभावमुत्थापयितुं शक्नुमः, किन्तु यथाप्रवृत्तमनुसरन्तो व्यवहरामः । न ह्यस्मदिच्छया आपः शीतं शमयन्ति कृशानुर्वा पिपासाम् । तत्र च्छेदनादावन्वयव्यतिरेकाभ्यां, वृद्धव्यवहाराद्वा, परश्वधादेरेव कारणत्वमध्यवगच्छाम इति तदेव तदर्थिन उपादद्महे न पादुकादीति । न च परश्वधादेःस्वरूपसन्निधाने सत्यपि सर्वदा कार्योदयः स्वरूपवत् सहकारिणामप्यपेक्षणीयत्वात्, सहकार्यादिसन्निधानस्य सर्वदानुपपत्तेः । सहकारिवर्गे च धर्मादिकमपि निपतति, तदपेक्षे च कार्योत्पादे कथं सर्वदा तत्सम्भवः ? धर्माधर्मयोश्च वैचित्र्यं कार्यबलेन कल्पनमपरिहार्यम् । तयोश्च न शक्तित्वादतीन्द्रियत्वम् । अपि तु स्वरूपमहिम्नैव, मनःपरमाण्वादिवत् ।

यद्यपि विषदहनसन्निधाने सत्यपि मन्त्रप्रयोगात्तत्कार्यादर्शनम्, तदपि न शक्तिप्रतिबन्धननिबन्धनमपि तु सामग्र्यन्तरानुप्रवेशहेतुकम् ।

ननु मन्त्रिणा प्रविशता तत्र किं कृतम् ? न किञ्चित्कृतम् । सामग्र्यन्तरन्तु सम्पादितम्, काचिद्धि सामग्री कस्यचित्कार्यस्य हेतुः । स्वरूपं तदवस्थमेवेति चेद् । यद्येवमभक्षितमपि विषं कथं न हन्यात् ? तत्रास्य संयोगाद्यपेक्षणीयमस्तीति चेन्मन्त्राभावोऽप्यपेक्ष्यताम् । दिव्यकरणकाले धर्म इव मन्त्रोऽप्यनुप्रविष्टः कार्यं

प्रतिहन्ति। शक्तिपक्षेऽपि वा मन्त्रस्य को व्यापारः ? मन्त्रेण हि शक्तेर्नाशो वा क्रियते, प्रतिबन्धो वा। न तावन्नाशः, मन्त्रापगमे पुनस्तत्कार्यदर्शनात्। प्रतिबन्धस्तु स्वरूपस्यैव शक्तेरिवास्तु। स्वरूपस्य किं जातम् ? कार्यौदासीन्यमिति चेत् तदितरतोपि समानम्। स्वरूपमस्त्येव दृश्यमानत्वादिति चेच्छक्तिरप्यस्ति 5 पुनः कार्यदर्शनेनानुमीयमानत्वादिति।

किञ्च शक्तिरभ्युपगम्यमाना पदार्थस्वरूपवन्नित्याभ्युपगम्येत, कार्या वा ? नित्यत्वे सर्वदा कार्योदयप्रसङ्गः। सहकार्यपेक्षायान्तु स्वरूपस्यैव तदपेक्षास्तु किं शक्त्या ? कार्यत्वे तु शक्तेः पदार्थस्वरूपमात्रकार्यत्वं वा स्यात् सहकार्यादिसामग्रीकार्यत्वं वा। स्वरूपमात्रकार्यत्वे पुनरपि सर्वदा कार्योत्पादप्रसङ्गः, 10 सर्वदा शक्तेरुत्पादात्। सामग्रीकार्यत्वे तु कार्यमस्तु किमन्तरालवर्तिन्या शक्त्या ? अशक्तात्कारकात्कार्यं न निष्पद्यत इति चेच्छक्तिरपि कार्यं तदुत्पत्तावप्येवं शक्त्यन्तरकल्पनादनवस्था। आह दृष्टसिद्धये ह्यदृष्टं कल्प्यते न तु दृष्टविघाताय। शक्त्यन्तरकल्पनायां शक्तिश्रेणीनिर्माण एव क्षीणत्वात् कारकाणां कार्यविघातः स्यादित्येकैव शक्तिः कल्प्यते। तत्कुतोऽनवस्था ?

15 अत्रोच्यते यद्यदृष्टमन्तरेण दृष्टं न सिद्ध्यति काममदृष्टं कल्प्यताम्। अन्यथाऽपि तु तदुपपत्तौ किं तदुपकल्पनेन ? दर्शिता चान्यथाप्युपपत्तिः। कल्प्यमानमपि चादृष्टं तत्कल्प्यतां यदनवस्थां नावहेत धर्मादिवत्। अपि च व्यापारोऽप्यतीन्द्रियः शक्तिवदिष्यते भवद्भिः, अन्यतरकल्पनयैव कार्योपपत्तेः किमुभयकल्पनागौरवेण ? शक्तमव्याप्रियमाणं न कारकम्, कारकमिति चेत्तच्छक्त-20 मिति। तथा कथं जानामि, कार्यदर्शनाज्ज्ञास्यामीति चेद्व्यापारादेव कार्यं सेत्स्यति। पादुकादेर्व्याप्रियमाणादपि न पादपच्छेदो दृश्यत इति चेत् प्रत्यक्षस्तर्हि व्यापारो नातीन्द्रियो, यतः कार्यदर्शनात्पूर्वमपि व्याप्रियमाणत्वं ज्ञातमायुष्मता। कार्यानुमेयो हि व्यापारः कार्यं विना न ज्ञायेतैव। कार्यं त्वन्यतरस्मादपि घटमानं नोभयं कल्पयितुं प्रभवतीत्यलं प्रसङ्गेन प्रकृतमनुसरामः।

25 तस्मादतीन्द्रियायाः शक्तेरभावान्निर्विषया यथोदाहृतास्ता अर्थापत्तयः।

भवन्त्यपि वा शक्तिरतीन्द्रियाऽनुमानस्यैव विषयः, कार्यकारणपूर्वकत्वेन व्याप्तिग्रहणात् स्वरूपमात्रस्य च कारणत्वानिर्वहणादधिकं किमप्यनुमास्यते। सा शक्तिरिति।

शब्दनित्यत्वसिद्धौ तु यार्थापत्तिरुदाहृता ।
तस्याः शब्दपरीक्षायां समाधिरभिधास्यते ॥

## अभावपूर्विकार्थापत्तिखण्डनम्

अभावपूर्विकाप्यर्थापत्तिरनुमानमेव । जीवतो गृहाभावेन लिङ्गभूतेन बहिर्भावावगमात् । चैत्रस्य गृहाभावो धर्मी बहिर्भावेन तद्वानिति साध्यो धर्मः 5 जीवन्मनुष्यगृहाभावत्वात् पूर्वोपलब्धैवंविधगृहाभाववत् । यथा धर्मी वह्निमानिति साध्योऽर्थः धूमत्वात् पूर्वोपलब्धधूमवदिति । अतश्च गृहादीनां लिङ्गत्वाशङ्कनम् अपाकरणञ्चाडम्बरमात्रम् ।

यत्पुनः प्रमेयानुप्रवेशदूषणमभ्यधायि, तदपि न साम्प्रतम् । किं प्रमेयमभिमतमत्र भवताम् ? किं सत्तामात्रम्, उत बहिर्देशविशेषितं सत्त्वम् । सत्तामात्रं 10 तावदागमादेवावगतमिति न प्रमाणान्तरप्रमेयतामवलम्बते । बहिर्देशविशेषितं तु सत्त्वं भवति प्रमेयम्, तस्य तु तदानीमनुप्रवेशः कुतस्त्यः ? गृहाभावग्राहकं हि प्रमाणं गृह एव सदुपलम्भकप्रमाणावकाशमपाकरोति, बहिर्न सदसत्त्वचिन्तां प्रस्तौति ।

वृद्धस्य जीवतो दूरे तिष्ठतः प्राङ्गणेऽपि वा । 15
गृहाभावपरिच्छेदे न विशेषोऽस्ति कश्चन ॥

जीवनविशिष्टस्त्वसौ गृह्यमाणो लिङ्गतामश्नुते व्यभिचारनिरासात् । न च विशेषणग्रहणमेव प्रमेयग्रहणम् । जीवनमन्यदन्यच्च बहिर्भावाख्यं प्रमेयम् ।

ननु जीवनविशिष्टगृहाभावप्रतीतिरेव बहिर्भावप्रतीतिः ? नैतदेवम् । जीवनविशिष्टगृहाभावप्रतीतेर्बहिर्भावः प्रतीतः । न तत्प्रतीतिरेव बहिर्भावप्रतीतिः 20 न हि दहनाधिकरणधूमप्रतीतिरेव दहनप्रतीतिः । किन्तु धूमादन्य एव दहनः । इहापि गृहाभावजीवनाभ्यामन्य एव बहिर्भावः । पर्वतहुतवहयोः सिद्धत्वान्मत्वर्थमात्रं तत्रापूर्वमनुमेयम् । एवमिहापि बहिर्देशयोगमात्रमपूर्वमनुमेयम् । यदि तु तदधिकं प्रमेयमिह नेष्यते तदा गृहाभावजीवनयोः स्वप्रमाणाभ्यामवधारणादानर्थक्यमर्थापत्तेः । तस्मात्प्रमेयान्तरसद्भावात्तस्य च तदानीमननुप्रवेशान्न 25 प्रमेयानुप्रवेशो दोषः । अर्थापत्तावपि च तुल्य एवायं दोषः । तत्राप्यर्थादर्थान्तरकल्पनाभ्युपगमात् । दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यत इत्यर्थकल्पनेत्येव ग्रन्थोप-

निबन्धात्, तस्य तस्मात्प्रतीतिरिति तत्र व्यवहारः, तत्रावाच्यतत्प्रतीतौ तदनुप्रवेशो दोष एव, स्वभावहेताविव तद्बुद्धिसिद्धया तत्सिद्धेः प्रमाणान्तरवैफल्यादिति ।

### प्रभाकरमतेऽर्थापत्तिसमर्थनम्

प्राभाकरास्तु प्रकारान्तरेणानुमानाद्भेदमत्राचक्षते । अनुमाने गमकविशेषण-
5 मन्यथानुपपन्नमनलं विना धूमो हि नोपपद्यते । इह तु विपर्ययः, गम्यो गमकेन विना नोपपद्यते । गम्यो बहिर्भावः, स जीवतो गृहाभावं विना नोपपद्यते । "गृहान्निर्गतो जीवन् बहिर्भवतीति" भाष्यमप्येवं योजयन्ति । दृष्टः श्रुतो वार्थोऽर्थकल्पना अर्थान्तरं कल्पयतीत्यर्थः । यतः सा कल्पना प्रमेयद्वारिकाऽन्यथा नोपपद्यते, कल्प्यमानोऽर्थोऽन्यथा नोपपद्यते स च गम्य इति ।

### 10 प्रभाकरमतखण्डनम्

एतदपि ग्रन्थवैषम्योपपादनमात्रम्, न तु नूतनविशेषोत्प्रेक्षणम् । गम्ये तावदगृहीते सति तद्गतमनुपपद्यमानत्वं कथमवधार्येत ? गृहीते तु गम्ये किं तद्गतानुपपद्यमानत्वग्रहणेन ? साध्यस्य सिद्धत्वात् । पुरा तद्गतमन्यथाऽनुपपद्य-मानत्वं गृहीतमासीदिति चेद् । अहो महाननुमानाद्विशेषः । इदं हि पूर्वं प्रतिबन्ध-
15 ग्रहणमुक्तं स्यात् ।

---

स्वभावहेताविवेति । वृक्षोऽयं शिंशपात्वादित्यत्र यावदेव शिंशपाख्यो भावो गृहीतस्तावदेव वृक्षत्वमपि, तत्स्वभावो गृहीत एव । तद्ग्रहणे तस्याग्रहणात् तत्स्वभाव-तैव न स्यादित्यर्थः ।

भाष्यमप्येवं योजयन्तीति । दृष्टः श्रुतो वार्थोऽर्थकल्पना अर्थस्य कल्पकः,
20 कस्यार्थस्येत्यपेक्षायां योऽन्यथा नोपपद्यते तस्येति योजना प्रभाकरपक्षे । ननु समासा-न्तर्गतेनार्थशब्देन कथमन्यथा नोपपद्यत इत्यस्य सम्बन्धः, तत्र गुणीभूतत्वादर्थशब्दस्य । नैवम्, कल्पनाशब्देनापि सम्बन्धेऽन्यथा नोपपद्यत इत्यस्यायमेवार्थो लभ्यते यतः । इदमेवाह यतः सा कल्पना प्रमेयद्वारिकेति । प्रमेयद्वारिका प्रमेयमुखेन अन्यथा नोपपद्यते, प्रमेयस्यान्यथानुपपद्यमानत्वात्, 'साऽन्यथा नोपपद्यते' इत्युच्यते न साक्षादित्यर्थः ।
25 तदेवाह 'कल्प्यमानोऽर्थोऽन्यथा नोपपद्यते' इति ।

अपि च बहिर्भावस्य गृहाभावं विनाऽनुपपत्तिरिति उक्ते तस्मिन्सति तस्योपपत्तिर्वक्तव्यः। सा च का ? किमुत्पत्तिर्ज्ञप्तिर्वा ? यदि ज्ञप्तिः, सा चानुमानेऽपि गम्यं गमकं विना नास्ति तस्मिन्सत्यस्तीति समानः पन्थाः।

उत्पत्तिस्तु गृहाभावाद् बहिर्भावस्य दुर्भणा।
प्राक् सिद्धे हि गृहाभावे तदुत्पादः क्षणान्तरे ॥ 5
कारणं पूर्वसिद्धं हि कार्योत्पादाय कल्पते।
तेनैकत्र क्षणे जीवन्न गृहे न बहिर्भवेत् ॥

तस्माद्यत्किञ्चिदेतत्।

## अर्थापत्तेः स्वरूपान्तरखण्डनम्

एवञ्च यदेके ज्ञप्त्युत्पत्तिकृतमिह वैलक्षण्यमुत्प्रेक्षितवन्तो धूमेनाग्निर्गम्यत 10 एव, गृहाभावेन बहिर्भावो जन्यतेऽपीति, तदपि प्रत्युक्तं भवति।

यत्तु सम्बन्धग्रहणाभावादित्युक्तम्, तदपि न सुन्दरम्। ( मन्दिराशुद्धम द्वारवर्त्तिनस्तदुत्पत्तेः ? )।

एतच्च स्वयमाशङ्क्य न तैः प्रतिसमाहितम्।
उदाहरणमन्यत्तु व्यत्ययेन प्रदर्शितम् ॥ 15

गृहभावेन बहिरभावकल्पनमिति तत्रैव, तदेव। तदेव वक्तव्यम्। इयमभावपूर्विका न भवत्येवार्थापत्तिः। षडर्थापत्तीः प्रतिज्ञायेमामभावपूर्विकामर्थापत्ति-

---

उदाहरणमन्यत् तु व्यत्ययेन प्रदर्शितमिति। तथाह

गृहद्वारि स्थितो यस्तु बहिर्भावं प्रकल्पयेत्।
यदा तस्मिन्नयं देशे न तदान्यत्र विद्यते ॥ इति 20

वार्त्तिकं भाष्योदाहृतार्थापत्तेः प्रत्यक्षेणापि हि बहिर्भावं प्रतिपद्य गृहाभावेन सह सम्बन्धग्रहणादर्थापत्तिपूर्वकत्वाभावादनुमानेऽन्तर्भावमाह। इमञ्चान्तर्भावमनिराकृत्यैवोदाहरणान्तरं चित्ते विधायाह

"तदाप्यविद्यमानत्वं न सर्वत्र प्रतीयते।
न चैकदेशनास्तित्वात् व्याप्तिर्हेतोर्भविष्यति ॥" इति 25

गृहव्यवस्थितं चैत्रमुपलभ्य तस्मिन्नेव काले तदन्यथानुपपत्त्यैव सर्वत्राभावमुपलभ्य तस्य गृहव्यवस्थितदेवदत्तभावेनाविनाभावग्रहणे तत्रार्थापत्तिपूर्वकत्वमेव

मुत्कोपनैयायिककटाक्षपातभीतामिह गहने हरिणीमिव यदुपेक्ष्य गम्यते तदत्यन्तमत्रभवतामनार्यजनोचितं चेष्टितम् ।

त्वदेकशरणां बालामिमामुत्सृज्य गच्छतः ।
कथं ते तर्कयिष्यन्ति मुखमन्या अपि स्त्रियः ।।

5 भावेनाभावकल्पना तु प्रत्यक्षपूर्विकैवार्थापत्तिः । तस्याऽपि च न दुरवगमः सम्बन्धः । असर्वगतस्य द्रव्यस्य नियतदेशवृत्तेरक्लेशेन तदितरदेशनास्तित्वाव-धारणात् । अनग्निव्यतिरेकनिश्चये च धूमस्य, भवतां का गतिः ? या तत्र वार्त्ता, सैवेहापि नो भविष्यति । न च भूयोदर्शनावगम्यमानान्वयमात्रैकशरणतया ।

---

सम्बन्धग्रहणस्य । ननु चैत्राधिष्ठितदेशव्यतिरिक्तसमीपदेशे चैत्रस्याभावेनाभावं प्रतिपद्या-
10 भावेनाविनाभावग्रहणात् किमुच्यतेऽर्थापत्तिपूर्वकत्वमित्याशङ्क्याह—'चैकदेशनास्ति-त्वात्' इति । चैत्राधिष्ठितव्यतिरिक्तानन्तदेशगतो ह्यभावो भावस्य सम्बन्धी, न सन्नि-कृष्टव्यतिरिक्तदेशगत एव । तस्य च प्रमाणान्तरेणाभावेनाप्यवगमाभावादर्थापत्ति-पूर्वकत्वम् । दृश्यस्य ह्यनुपलब्धिरूपेणाभावेनाभावः सिद्ध्यति । न च विप्रकृष्टदेशे दृश्यतास्तीति एकदेशनास्तित्वमात्रात् केवलान्न हेतोरुत्तरकालमभावानुमापकस्य
15 गृहसद्भावस्य व्याप्तिग्रहोऽस्तीत्यर्थः । इत्थमेतदुम्बेकादिदृष्ट्या वार्त्तिकव्याख्यानम्, तदनुयायिना ग्रन्थकृतापि तदेवानुसृत्योक्तम् । तत्त्वतस्तु 'तदाप्यविद्यमानत्वम्' इति वार्त्तिकं व्याख्यायमानं प्रकृतोदाहरणसमर्थनेऽपि सङ्गच्छते । तदा ह्ययमर्थः तदा-पीत्यस्य यदापि द्वारि स्थितस्तदापि दृश्यानुपलम्भादभावो गृहे सिध्यतु, न पुनः सर्वत्र प्रतीयते, दृश्यत्वाभावात्, अतः सर्वत्राभावनिश्चयेऽर्थापत्तेरेव व्यापारः । अयं भावः—
20 गृहे यदा न तदा, बहिरित्येवं व्याप्तौ गृहीतायां गृहेऽदर्शनाद् बहिर्भावः सिद्ध्यति, न चैवमर्थापत्तिं विना व्याप्तिग्रहः सम्भवति, दूरदेशे अभावस्याप्यवगन्तुमशक्यत्वात्; अतोऽर्थापत्त्या एकदेशभावान्यथानुपपत्तिरूपया देशान्तरेऽप्यभावकल्पनेति । ननु भाव-स्याभावेन सह सम्बन्धग्रहणाद् भावलिङ्गेनैवाभावावगतिरित्याह 'न चैकदेश-नास्तित्वाद् गृहाभावाद् गृहीतात् कारणात् सर्वाभावैर्हेतोर्लिङ्गस्य व्याप्तिसिद्धिः' ।
25 अयमर्थः भावाख्यं लिङ्गमभावावगतौ येन सह गृहीतसम्बन्धं तस्यैव गमकं भवितुमर्हति, गृहाभावेन च तस्य सम्बन्धग्रहो वृत्तोऽतस्तस्यैव गमकं भवतु; न च गृहाभावेन सह व्याप्तिर्गृहीता या सर्वा भावैः सह व्याप्तिः सिद्ध्यति, अतिप्रसङ्गादित्यलमप्रकृताभिधानेन

यस्य वस्त्वन्तराभावो गम्यस्तस्यैव दुष्यति ।
मम त्वदृष्टिमात्रेण गमकाः सहचारिणः ।।

इति कथयितुमुचितम् । अनिश्चितव्यतिरेकस्य साध्यनिश्चयाभावादिति दर्शयिष्यामः । पक्षधर्मान्वयव्यतिरेकोऽपि नागृहीतोऽनुमानाङ्गम् । बहिरभावसिद्धौ चानुमानप्रयोगः स एव यस्त्वया दर्शितः । प्रतिपक्षप्रयोगः प्रत्यक्षादिविरुद्धत्वा- 5
द्धेत्वाभास एवेत्यलं प्रसङ्गेन ।

## श्रुतार्थापत्तिखण्डनम्

श्रुतार्थापत्तिरपि वराकी नानुमानाद्भिद्यते । वचनैकदेशकल्पनाया अनु- पपन्नत्वाद् अर्थस्य च कार्यलिङ्गस्य सत्त्वात् । यथा क्षितिधरकन्दराधिकरणं धूम- मवलोक्य तत्कारणमनलमनुमिनोति भवान्, एवमागमात्पीनत्वाख्यं कार्यमवधार्य 10
तत्कारणमपि भोजनमनुमिनोतु । कोऽत्र विशेषः ? तत्कार्यतया भूयोदर्शनतः प्रतिपन्नत्वात् । लिङ्गस्य तु क्वचित्प्रत्यक्षेण ग्रहणम्, क्वचिद्वचनतः प्रतिपत्तिरिति, नैष महान्भेदः, ।

ननु वचनमपरिपूर्णमिति प्रतीतिमेव यथोचितां जनयितुमसमर्थम् । किं 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यतो न भवति तत्पीनताप्रतीतिः ? 15
न । न भवति, साकाङ्क्षा तु भवति, न च साकाङ्क्षप्रतीतिकारिणस्तस्य प्रामाण्यमिति तदेव तावत्पूरयितुं युक्तम् । तदसत्–कस्यात्र साकाङ्क्षत्वम् ? किं शब्दस्य ? किं वा तदर्थस्य, ? उत स्वित्तदवगमस्येति । शब्दस्य तावदर्थ- निरपेक्षस्य न काचिदाकाङ्क्षानभिव्यक्तशब्दवत् । अर्थस्तु साकाङ्क्षः सन्नर्थान्तरमुपकल्पयतु, कोऽवसरो वचनकल्पनायाः । अवगमोऽप्यर्थविषय 20
एव साकाङ्क्षो भवति, न शब्दविषयः श्रोत्रकरणकः । तस्मादवगमनैराकाङ्क्षच- सिद्धये तदर्थकल्पनमेव युक्तम् । वचनैकदेशकल्पनमप्यर्थावगतिसिद्ध्यर्थमेवेति तत्कल्पनमेवास्तु किं सोपानान्तरेण ।

---

ममत्वदृष्टिमात्रेणेति । अस्य पूर्वमर्धम् 'यस्य वस्त्वन्तराभावो गम्यस्तस्यैव दुष्यति' इति । अस्यार्थः–यस्य वादिनो बौद्धस्य वस्त्वन्तराभावोऽनग्निव्यावृत्तिलक्षणोऽनु- 25
मानगम्यस्तस्य तत्तद्देशानवगमरूपो दोषः । यावत् सर्वानग्निव्यावृत्तान् देशान् नावगच्छति तावद् व्यतिरेकग्रहो न सिद्ध्यतीत्येवंरूपः । ननु चाग्न्याद्यभावेऽपि

यत्तु कल्प्यमानस्यावैदिकत्वमर्थस्य प्राप्नोतीति ? तत्र वचनकल्पनापक्षे सुतरामवैदिकः सोऽर्थः स्यात्, कल्प्यमानस्य वचनस्य वेदादन्यत्वात्, श्रुतोऽनुमितश्च द्विविधः स वेद एवेति चेत्, श्रौतार्थः श्रौतार्थानुमितो द्विविधः स वेदार्थ एव भविष्यतीति किं वचनसोपानान्तरकल्पनया ? तेन श्रूयमाणवेदवचनप्रति-
5 पाद्यार्थसामर्थ्यलभ्यत्वादेव तस्य वेदार्थता भविष्यति । सर्वथा न वचनैकदेशविषया श्रुतार्थापत्तिः श्रेयसी । श्रुत्येकदेशकल्पनापक्षप्रतिक्षेपाच्च तदतीन्द्रियतया सम्बन्धग्रहणमघटमानमिति यदुक्तं तदपि प्रत्युक्तम् । अर्थे तु सामान्येन सम्बन्धग्रहणमपि सूपपादम् । तत्र तत्र यज्यादेरर्थस्याधिकाराद्यर्थान्तरासंबद्धस्य दृष्टत्वादिति ।

प्राभाकरास्तु 'दृष्टः श्रुतो वेति' भाष्यं लौकिकमभिधानान्तरमेवेदमुपलब्धि-
10 वचनमि'ति वर्णयन्तः श्रुतार्थापत्तिं प्रत्याचक्षते । श्रूयमाणस्यैव शब्दस्य तावत्यर्थे सामर्थ्यमुपगच्छन्तः तमर्थं शाब्दमेव प्रतिजानते वाक्यस्य दूराविदूरव्यवस्थितगुणागुणक्रियाद्यनेककारककलापोपरक्तकार्यात्मकवाक्यार्थप्रतीतावि षोरिव दीर्घदीर्घो व्यापारः । अविरतव्यापारे च शब्दे सा प्रतीतिरुदेति । तद्व्यापारविरतौ नोदेति तदुत्पादककारकाभावात् । बृद्धव्यवहारतश्च शब्देषु व्युत्पाद्यमानो लोकस्तथा-

---

15 धूमादिव्यतिरेकि ( अवाच्यान्यक्षराणि ) त्र वाक्यस्यैव तत्प्रतिपत्तिहेतोर्व्यापारः । कार्यं हि तेन प्रतिपाद्यम् । निराकाङ्क्षस्य च तस्य प्रतिपादने तत्प्रतिपादितं भवति इति तात्पर्यम् ।

दूराविदूरेति दूरव्यवस्थिता गुणीभूता अङ्गभूता याः क्रियाः, अदूरव्यवस्थिता अगुणभूताश्च प्रधानक्रियाः । दूरव्यवस्थितत्वं भिन्नवाक्योपादानत्वम् । तथाहि 'आग्नेयोऽष्टाकपालो भवति' इत्यादिभिर्वाक्यैः प्रधानक्रिया उपात्ताः, 'समिधो यजति'
20 इत्यादिभिस्तु गुणक्रियाः । एतत्तु 'दर्शपूर्णमासाभ्यां यजेत स्वर्गकामः' इत्यधिकारवाक्यापेक्षयोत्पत्तिवाक्यानामुक्तम् । क्वचित्तु अदूरव्यवस्थिता एकवाक्योपात्ता गुणागुणक्रियाः । तद्यथा "एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत" इति । अथ हि वारवन्तीयकरणं गुणक्रिया अन्यस्योत्पत्तिवाक्यस्याभावात्, यागश्च प्रधानक्रियानेनैवोपात्ता । आदिग्रहणाद् द्रव्यदेवतातद्विशेषणा-
25 दीनामवरोधः । एवमादिनानेकेन कारककलापेनोपरक्तः कार्यान्तराद् व्यवच्छिन्नः कार्यात्मा यो वाक्यार्थः । अथवा गुणक्रिया द्रव्यं ेति गुणत्वेन स्थिता द्रव्यचिकीर्षकत्वेन व्यवस्थिता या अवघातादयः, याश्चागुणक्रिया नियोगार्थाः समिदादयस्ताः ।

**भूतवाक्यव्यवहारिणो वृद्धान् पश्यन्वाक्यस्य च तादृशवाक्यार्थे सामर्थ्यमवधारयति। तदनुवर्त्तीनि तु पदानि तस्मिन्नैमित्तिके निमित्तानि भवन्ति। नैमित्तिकानुकूल्यपर्यालोचनया क्वचिदश्रूयमाणान्यपि तानि निमित्ततां भजन्ते, विश्वजिदादौ स्वर्गकामादिपदवत् क्वचिच्छ्रूयमाणान्यपि तदननुकूलत्वात्परित्यज्यन्ते,**

---

दूरव्यवस्थिता विकृतिषु प्रकरणान्तरोपात्तत्वेन, अदूरव्यवस्थिताश्चैकप्रकरणत्वेन 5
प्रकृतिषु; अन्यत् समानम्। कारकत्वन्तु क्रियाद्रव्यादीनां साक्षात् पारम्पर्येण च; नियोगसंपत्तेस्तदधीनत्वात्, न पुनर्घटादाविव मृदादीनां प्रवृत्तिविषयत्वेन कारकत्वम्। प्रवृत्तिप्रयोजनं हि नियोगो, न प्रवृत्तिविषय इति प्राभाकराः तत्सिद्धये हि धात्वर्थे प्रवर्तन्ते, न तु तत्रैवेति। **तदनुवर्त्तीनि तु पदानि तस्मिन्नैमित्तिके निमित्तानि भवन्तीति** ह्यस्यायमाशयः यदि पदानां वाक्यार्थावधृतौ सामर्थ्यमन्यतोऽवधृतं स्यात् तदा तदनुसारितया 10
वाक्यार्थप्रत्ययोऽपि भवेत्; यदा पुनर्वाक्यार्थस्य कार्यरूपस्य प्रवृत्तिलक्षणेन व्यवहारेणावगमात् तत्रावापोद्वापाभ्यां पदानां निमित्तत्वमवगम्यते तदा यथावगतनिमित्तनैमित्तिकानुसरणादेव। यथा पदानां निमित्तत्वं सङ्गच्छते तथा अवगन्तव्यम्। अत एव वाचकत्वादन्यन्निमित्तत्वम्। वाचकत्वं सम्बन्धग्रहणसापेक्षत्वेन, निमित्तत्वं पुनस्तस्मिन्निरपेक्षत्वेन वाक्यार्थविगमं प्रति। अन्यथा प्रथमश्रुताद् वाक्यादर्थप्रतिपत्तिर्न स्यात्। 15
**नैमित्तिकानुकूल्यपर्यालोचनयेति।** नैमित्तिकं नियोगानुकूल्यम्, अधिकारिणि सति तस्य सम्पत्तिसिद्धेः। **क्वचिच्छ्रूयमाणान्यपीति।** दर्शपूर्णमासयोः 'ऐन्द्रं दधि, ऐन्द्रं पयः' इति प्रधानं हविर्द्वयं विधायोक्तम् यस्योभयं हविरार्तिमार्च्छेत् 'स ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' इति। यस्य हविरार्तिमार्च्छेत् हविर्यागायोग्यतां व्रजेदिति। हविरार्तिगमननिमित्ता पञ्चशरावौदनकर्तव्यता प्रतीयते। हविषश्चार्तिङ्गतस्य विधेयपञ्चशरावप्रवण- 20
त्वेन प्रतीतस्योभयविशेष्यत्वाश्रयणे तु स्वार्थत्वपरार्थत्वलक्षणं विरुद्धं रूपद्वयं प्रसज्यते। हविश्चेदार्तिमार्च्छेत् तच्चोभयमित्युभयपदेन च विशेष्यत्वे हविषोऽभिधानावृत्तिलक्षणो वाक्यभेदः प्रसज्यते। हविरार्तिमार्च्छेदित्येकवारमुच्चारितं हविरिति तच्चेद्धविरुभयमिति पुनरुच्चारयितव्यं प्रसज्यते। तत उद्देश्यत्वाद् ग्रहाद्येकत्ववद् विशेषणाविवक्षा। तस्माद्धविरार्तिगमननिमित्तैव पञ्चशरावौदनकर्तव्यता। उभयपदन्तु श्रुतमपि न विवक्षितम्। 25
उभयमुभयात्मकं यदेतद्धविः प्रक्रान्तमित्यनुवादमात्रतयैव समन्वयो न विवक्षितत्वेनेति यावत्। यथा यावेतावुभौ चाण्डालौ गच्छन्तौ पश्यसि तौ न स्प्रष्टव्यौ, यदि स्पृशेः तत्

'यस्योभयं हविरार्त्तिमार्च्छेदि'तिवत् । क्वचिदन्यथा स्थितानि तदनुरोधादन्यथैव स्थाप्यन्ते 'प्रयाजशेषेण हवींष्यभिघारयती'तिवत्, तस्मात्प्रथमावगतैकघनाकार-वाक्यार्थानुसारेण सतामसतां वा पदानां निमित्तभावव्यवस्थापनादश्रूयमाण-तथाविधैकदेशादपि वाक्यात्तदर्थावगतिसम्भवात् किं श्रुतार्थापत्त्या ? अत एव च
5 न सोपानव्यवहितं तस्यार्थस्य शाब्दत्वम्, साक्षादेव तत्सिद्धेः । न च श्रूयमाणेषु निमित्तेषु कुतस्तदर्थमवगच्छामः, अनवगच्छन्तश्च कीदृशं नैमित्तिकमवकल्पयामः ।

उच्यते श्रुतेष्वपि पदेषु तेषां निमित्तभावो न स्वमहिम्नावकल्पते किन्तु नैमित्तिकानुसारद्वारक इत्युक्तम् । एवमश्रुतेष्वपि भविष्यति, न यजौ करण-विभक्तिं शृणुमो, न स्वर्गे कर्मविभक्तिं, नाग्निचिदादिषु क्विप्प्रत्ययं, नाधुनादिषु
10 प्रकृतिं, न समासतद्धितेषु यथोचितां विभक्तिमपि च प्रतीम एव तदर्थम् । एवं

---

स्नायाः इति अत्रैकचाण्डालस्पर्शेऽपि स्नानादुभावित्यस्याविवक्षा । यथा च यद्येतावुभौ व्याधितौ स्यातां तदौषधं देयमित्येकस्यापि व्याधितत्वे ओषधदानम् ।

क्वचिदन्यथा स्थितानीति । 'प्रयाजशेषेण हवींष्यभिघारयेत्' [ ? ] इत्यत्र शेषवाचोयुक्त्यैव प्रयाजशेषस्य कर्मान्तरं प्रति गुणत्वं न सम्भवति, प्रयाजार्थत्वेन
15 गृहीतस्याज्यस्य यच्छेषं तदपि प्रयाजार्थमेव, अतस्तस्याज्यार्थताकरणस्यासम्भवात् प्रतिपत्तिकर्मतैव न्याय्या । प्रतिपत्तिकर्मत्वे च प्रयाजशेषस्य प्रतिपाद्यमानत्वात् प्रधानत्वेन द्वितीयानिर्देश एव युक्तः । 'कृष्णविषाणाणां चात्वाले प्रास्यति' इति [ ? ] कृष्णविषाणाया इव हविषां चाधारत्वेन सप्तमीति निर्देश एव युक्तश्चात्वाल इतिवत् । तेन प्रयाजशेषं हविष्ष्वभिधारयेदिति प्रतिपत्तिकर्मत्वेन वाक्यार्थानुगुण्यात्
20 समन्वयो युक्तः । प्रतिपत्तिरेव हि तदा प्रयाजशेषस्याज्यस्य दृष्टार्था । अतः परं हि जुह्वामाज्यभागार्थमाज्यं ग्रहीतव्यम्, तत्परार्थेनाज्येनामिश्रितं कर्तव्यमवश्यं तच्छेषं परित्यक्तव्यम् । परित्याग एव च विशिष्टेन रूपेण प्रतिपत्तिः, यथेश्वरशिरोधृतस्य मालादेर्विशिष्टे प्रदेशे त्यागो न यत्र तत्र । समिदादयः पञ्चाङ्गयागाः प्रयाजाख्याः । अत एव च न सोपानव्यवहितमिति । श्रुतार्थापत्तिरत्र सोपानम् ।

25 न यजौ करणविभक्तिमिति । 'स्वर्गकामो यजेत' इत्येतावत् तावच्छ्रूयते, न तु यागः करणम्, स्वर्गः फलमिति; तथापि वाक्यार्थभूतनियोगसामर्थ्यलभ्यमेतद् उभयो रूपम् । तथाहि स्वर्गकामो यागानुष्ठाने नियुज्यते । स च तत्रान्यदिच्छत्यन्यत् करोतीति

**विश्वजिदादावपि यजेतेति नैमित्तिकबलादेव स्वर्गकामादिपदार्थं प्रत्येष्यामः । नियोगगर्भत्वाच्च विनियोगस्य, लिङ्गादीनि श्रुतिकल्पनामन्तरेणापि नियोगव्यापार-परिगृहीते वस्तुनि विनियोजकतां प्रतिपत्स्यन्ते ।**

**नन्वेवं सति सर्वत्र शब्दव्यापारसम्भवात् ।**
**मुख्यस्यापि भवेत्साम्यं गौणलाक्षणिकादिभिः ।।** 5

---

न्यायात् कथं प्रवर्तेत ? न च यागेऽप्रवृत्तौ नियोगः सम्पत्ति लभत इति नियोग एव स्वसिद्धये यागस्य करणत्वं स्वर्गस्य च फलत्वं व्यवस्थापयति; सोऽयमाधिकारिक एवा-नयोः सम्बन्धो न श्रूयमाणविभक्तिकृत इति । **नियोगगर्भत्वाच्च विनियोगस्येति** । योऽयं विनियोगः शेषभावः श्रुत्यादिना प्रमाणेनावघातादीनां प्रतिपाद्यतेऽत्यन्तपारार्थ्य-लक्षणस्तादर्थ्येनानुष्ठानपर्यन्तः स नियोगगर्भो नियोगापेक्षाकृतः, न पुनः श्रुत्यादीनामेव 10 तथाविधे तस्मिन् सामर्थ्यम् । 'सक्तून् जुहोति' इत्यादौ होमकृतस्य सक्तुसंस्कारस्य नियोगेनानपेक्षितत्वात् सत्यपि द्वितीया श्रुतिर्न होमस्य सक्त्वर्थतामनुष्ठानपर्यन्तां दर्श-यति । 'गोदोहनेन पशुकामस्य प्रणयेत्' इति प्रणयनं प्रति श्रुतापि गोदोहनस्य करणता नियोगेन तथानपेक्षणात् फलं प्रति नीयते । 'कृष्णलमवहन्ति' इत्यत्र तु प्रत्युतावघातार्थता कृष्णलस्य नियोगवशादेव । नियोगेन च स्वसाधन- 15 संस्कारकत्वेनावघातस्यापेक्षणात् यवेष्वश्रुतोऽप्यवघातः क्रियते । अत एव द्वारतादर्थ्ये श्रुत्यादीनां व्यापारमाहुः । नियोगेन स्वसिद्ध्यर्थमाक्षिप्तानामवघातादीनां श्रुत्यादयो द्वारमुपायं प्रदर्शयन्ति, अवघातेन चेन्नियोगस्योपकर्तव्यं तत्तदीयव्रीह्युपकारद्वारेणोप-कुर्विति । **नियोगव्यापारपरिगृहीते वस्तुनीति** । नियोगस्य व्यापार उपादानात्मा, तत्प्रयुक्ताक्षेपापरपर्यायग्राहकव्यापारेण परिगृहीतं सर्वं नियोगार्थत्वेन व्यवस्थापितम् । 20 अयं भावः । अनुष्ठानसिद्ध्यर्थं वा प्रयाजादीनां प्रकरणादिभिः श्रुत्यन्तरकल्पनं तादर्थ्य-सिद्धये वा ? न तावद् अनुष्ठानसिद्ध्यर्थं नियोगव्यापारपरिग्रहादेव तत्सिद्धेः । अथ तादर्थ्यसिद्धये, तदपि न, विनापि श्रुत्यन्तरकल्पनं श्रुत्यादिभिरर्थानामेव शेषशेषिभाव-प्रतिपादनस्य कर्तुं शक्यत्वादिति ।

**गौणलाक्षणिकादिभिरिति** । अभिधेयाविनाभूतः पदार्थो यदा कार्ययोगित्वेन 25 विवक्ष्यते तदा अभिधेयाविनाभावाल्लक्षणात आगतो लाक्षणिको, यथा 'गङ्गायां घोषः प्रतिवसति' इति घोषप्रतिवसनलक्षणेन कार्येण तट एव लक्ष्यमाण; सम्बध्यते । 'सिंहो

श्रुतिलिङ्गादिमानानां विरोधो यश्च वर्ण्यते ।
पूर्वपूर्वबलीयस्त्वं तत्कथं वा भविष्यति ॥

उच्यते सत्यपि सर्वत्र शब्दव्यापारे तत्प्रकारभेदोपपत्तेरेष न दोषः । न हि पदानां सर्वात्मना निमित्तभावमपहायैव नैमित्तिकप्रतीतिरुपप्लवते । तदपरित्या-
5 गाच्च तत्स्वरूपवैचित्र्यमनुवर्त्तत एव ।

अन्यथा सिंहशब्देन मतिः केसरिणीसुते ।
अन्यथा देवदत्तादौ प्रतीतिरुपजन्यते ॥

---

माणवकः' इत्यादौ तु सिंहजात्याभिधेयया लक्ष्यमाणो यः शौर्यलक्षणो गुणः, स गुणोऽर्थो-वच्छेदकोऽन्यस्य, अत एव गुणादवच्छेदकादायातो गौण इत्युच्यते । अत्र हि तेन गुणेन
10 शौर्यलक्षणेन लक्ष्यमाणेन योऽवच्छिद्यते देवदत्तः स कार्ययोगी, न पुनर्गुणः, लक्षणायान्तु लक्ष्यमाण एव कार्ययोगीति विशेषः । अत एव यस्यासावच्छेदकत्वेन गुणो विवक्ष्यते तस्य विशेष्यस्य देवदत्तादेरवश्यं प्रयोगो गौणे; न तु लक्षणायां तटेन लक्ष्यमाणेनान्यद-वच्छिद्यते, अत एव तत्रावच्छेद्यस्याप्रयोगः । यथाह "गौणे हि प्रयोगो न लक्षणायाम्" इति [ ? ] प्रभाकरोपाध्यायः । गौणलाक्षणिकादिभिरित्यादिग्रहणं लक्षितलक्षणाद्यर्थम् ।
15 श्रुतिलिङ्गादिमानानामिति श्रुतिलिङ्गयोर्विरोधे यथा 'निवेशनः सङ्गमनो वसूनाम्' इति मन्त्रो लिङ्गादभिधानसामर्थ्यादिन्द्रप्रकाशनसमर्थ इति यावदिन्द्रोपस्थाने विनियुज्यते तावच्छ्रुत्या 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति गार्हपत्ये विनियोगाल्लिङ्गं बाध्यते, क्लृप्तस्य कल्प्यमानापेक्षया बलवत्त्वात् । उपतिष्ठत इति 'उपान्मन्त्रकरणे' इति आत्मने-पदप्रयोगादभिधानं विवक्षितम्, तत्प्रत्ययेव मन्त्रस्य करणत्वात् । तेनोपतिष्ठेताभिदध्यात्
20 स्तुवीतेत्यर्थः । लिङ्गवाक्ययोर्विरोधे यथा 'स्योनं ते सदनं कृणोमि, घृतस्य धारया सुशेवं कल्पयामि, तस्मिन् सीद अमृते प्रतितिष्ठ, व्रीहीणां मेध सुमनस्यमानः' इति मन्त्रं प्रति संशयः । किं सकलोऽयं मन्त्रः पुरोडाशार्थे बर्हिष उपस्तरणे पुरोडाशासादने च प्रयोक्तव्यः? उत कल्पयाम्यन्तः उपस्तरणे 'तस्मिन् सीद' इत्यादिः पुरोडाशासादन इति ? सर्वेषां पदानामस्मिन् मन्त्रे साकाङ्क्षत्वादेकवाक्यत्वादुभयत्र प्रयोग इति वाक्यसामर्थ्यात् प्राप्तः,
25 लिङ्गस्याभिधानसामर्थ्यस्य बलीयस्त्वात् कल्पयाम्यन्तस्योपस्तरणे विनियोगोऽपरस्या-सादने । 'तस्मिन् सीद' इत्यादेरप्येकवाक्यत्वाद् यावदुपस्तरणप्रकाशनसामर्थ्यं कल्प्य-ते तावत् क्लृप्तसामर्थ्येन कल्पयाम्यन्तेनोपस्तरणस्य प्रकाशितत्वान्न कल्पनां लभते, एवं

गङ्गायां मज्जतीत्यत्र गङ्गाशब्दो निमित्तताम् ।
उपयाति यथा नैवं घोषादिवसतौ तथा ॥

श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानामप्यर्थसन्निकर्षविप्रकर्षकृतोऽस्त्येव विशेष इति तत्रापि न विनियोगसाम्यम् ।

श्रुतिलिङ्गादिभिर्योऽपि कल्पयेद्विनियोजिकाम् ।　　5
तस्यापि तस्यास्तुल्यत्वाद् बाध्यबाधकता कथम् ॥

---

'स्योनं ते सदनं कृणोमि' इत्यादेरप्येकवाक्यताबलाद् यावत् पुरोडाशासादनप्रकाशनसामर्थ्यं कल्प्यते तावत् 'तस्मिन् सीद' इति क्लृप्तपुरोडाशासादनप्रकाशनसामर्थ्योपहतत्वान्नैव कल्पनासम्भवः। एकवाक्यतया ह्यभिधानसामर्थ्यं यावत् कल्प्यते तावत् क्लृप्तेन बाधितत्वाद् विप्रकर्षः। वाक्यप्रकरणयोर्विरोधे यथा–'अग्निरिदं हविरजुषता- 10 वीवृधत महो ज्यायोऽक्रात, अग्निषोमाविदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्, इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्' इत्यादि सूक्तवाकनिगदः। तत्र पौर्णमासीदेवता अमावास्यादेवताश्च समाम्नाताः परस्परेणैकवाक्यतां नाभ्युपयन्ति। तत्र लिङ्गसामर्थ्यात् पौर्णमासीप्रयोगादिन्द्राग्नीशब्दः उत्क्रष्टव्योऽमावास्यायां च प्रयोक्तव्यः पौर्णमास्यामिन्द्राग्न्योर्देवतयोरभावात् कं प्रकाशयत्वेष शब्दस्तत्र प्रयुज्यमान इति। इति- 15 कृत्वा तत उत्कृष्य तत्र तयोर्देवतयोरभावादसान्नाय्ययाजिनः सम्भवात् तत्रामावास्यायां प्रयोक्तव्यः। तस्य यः शेषः 'अवीवृधेतां महो ज्यायोऽक्राताम्' इति स किं यावत्कृत्वः समाम्नातस्तावत्कृत्व उभयोः पौर्णमास्यामावास्ययोः प्रयोक्तव्यः प्रकरणस्य बलवत्त्वात्, अथ येनेन्द्राग्नीशब्देन सहैकवाक्यतां प्राप्तो यत्रासौ तत्रैव प्रयोक्तव्यो वाक्यस्य बलीयस्त्वादिति ? तत्र प्रकरणवशाद् यावत् सर्वैः सहैकवाक्यता कल्प्यते तावदिन्द्राग्नी- 20 शब्देन क्लृप्तयैकवाक्यतया प्रकरणं बाध्यत इति विप्रकर्षः। क्रमप्रकरणयोर्विरोधे यथा, राजसूयप्रकरणेऽभिषेचनीयस्य क्रमे शौनःशेपाद्युपाख्यानमाम्नातम्. तत्किं प्रकरणवशात् सर्वार्थमाहोस्वित् क्रमाम्नानादभिषेचनीयार्थमिति ? तत्र क्रमाम्नातेन यावत् सन्निधानबलोद्भूताकाङ्क्षाकृतैकवाक्यताऽभिषेचनीयेन सहास्य कल्प्यतेऽभिषेचनीयस्य पृथक्- प्रयोजकशक्तिबललब्धप्रकरणभावकल्पनया तावत् क्लृप्तयैवाधिकारविधेः प्रकरणशक्त्यैक- 25 वाक्यतेति विप्रकर्षः। क्रमसमाख्ययोर्विरोधे यथा पौरोडाशिकमिति समाम्नाते काण्डे सान्नाय्यक्रमे 'शुन्धध्वं दैव्याय कर्मणे' इति शुन्धनार्थो मन्त्रश्चाम्नातः। स किं समाख्या-

**अथ तत्कल्पने तेषां विदूरान्तिकवृत्तिता ।**
**स एवार्थगतो न्याय इति तत्कल्पनेन किम् ॥**

**ऐन्द्राग्न्यादिषु वैकृतेषु कर्मसु न प्राकृतविध्यन्तवचनानुमानम्, अपि तु चोदक-व्यापारेण तस्यैव प्राप्तिः, वैकृतस्य विधेः काचिदाकाङ्क्षा चोदक इत्युच्यते ।**

5 **नन्वेवमुभयत्र तदवगमाविशेषादुपदेशातिदेशयोः को विशेषः ? न नियोगावगमे कश्चिद्विशेषः, किन्तूपदेशे, यथोपदेशं कार्यमतिदेशे तु यथाकार्यमुपदेश इत्येव तयोर्विशेषः ।**

---

सामर्थ्यात् पुरोडाशपात्राणां शुन्धने विनियोक्तव्योऽथ सान्नाय्यपात्राणां सन्निधेरिति ? तत्र यावत् पौरोडाशिकमिति समाख्यावलात् पुरोडाशसन्निधिं धर्माणां कल्पयित्वा 10 पुरोडाशार्थत्वं प्रतिपाद्यते तावत् क्लृप्तसान्नाय्यसन्निधानबलेनैव सान्नाय्यार्थत्वस्य प्राप्तत्वान्न समाख्यया सन्निधिकल्पनाद्वारेण पुरोडाशार्थत्वकल्पनमिति विप्रकर्षः । सान्नाय्ये दधिपयसी ।

**अथ तत्कल्पने तेषां विदूरान्तिकवृत्तितेति** । लिङ्गं हि साक्षादेव श्रुतिं कल्पयति, वाक्यं पुनर्लिङ्गमभिधानसामर्थ्यमकल्पयित्वा न श्रुतिकल्पनायां प्रभवतीति दूरान्तिक-15 वृत्तिता; एतच्च प्राक् स्पष्टीकृतमेव ।

**वैकृतस्य विधेः काचिदाकाङ्क्षेति** । 'प्राकृतविधिना दृष्टादृष्टसाधनोपकारवता सम्पन्नम्, अहमपि च विधिः, मयापि च तथाविधसाधनोपकारवता सम्पत्तव्यम्' इति याकाङ्क्षा सा चोदको धर्माक्षेपकः पदार्थः ।

**यथोपदेशं कार्यमिति** । अस्यार्थः किं धर्मा यथोपदेशं ये यत्सम्बन्धेन श्रुत्या-20 दिभिः प्रमाणैरुपदिष्टास्ते तैः सम्बन्धमनुभूय पश्चात् कार्येण नियोगेन सम्बध्यन्ते आहोस्विद् यथाकार्यमुपदेशः प्रथमं कार्येण नियोगेन सम्बध्य पश्चाच्छ्रुत्यादिकृतस्तेषां परस्परसम्बन्ध इति । अनेन च किं यजिप्रयुक्ता धर्मा उतापूर्वप्रयुक्ता इति भाष्यकृता यः संशयः सप्तमाद्ये कृतः स व्याख्यातः । तत्र यदि यथोपदेशं कार्यमिति पक्षस्तदा प्रथ तावद् यजिना सर्वे धर्माः सम्बध्यन्ते तत्सम्बन्धविधानार्थं च यजिरुद्देश्यो यजित्व-25 मात्रेण, न तु विशिष्टनियोगसाधनत्वविशिष्टः, परार्थस्य सतः प्राधान्येनोद्देष्टुमशक्यत्वाद् विशिष्टानुवादे वाक्यभेदप्रसङ्गाच्च । तस्माद् यथोद्देशस्य ग्रहादेरेकत्वस्या-

ननु यथाकार्यमुपदेशेऽनुपयुज्यमानकृष्णलचर्वंवघातादेः प्राप्तिरेव न भवेदिति को बाधार्थः ? न अखण्डमण्डलविध्यन्तकाण्डप्राप्तेः, न ह्यंशांशिकया चोदकः प्रवर्त्तते, इत्यलमनया प्रसक्तानुप्रसक्त्यागतशास्त्रान्तरगर्भकथाविस्तरप्रस्तावनया ।

इति प्रसङ्गाद् व्याख्यातं लेशतो वाक्यविन्मतम् ।
एतस्य युक्तायुक्तत्वपरिच्छेदे तु केवलम् ॥
श्रुतार्थापत्तिरस्माकं दूषणीयतया स्थिता ।
तद्दूषणश्च पूर्वोक्तवीथ्यानेन पथास्तु वा ॥

---

विवक्षा प्राग्वद् विशेषश्चोद्देश्यत्वादेवोभयपदविशेष्यत्वाभात्रः । तथा च निर्विशेषणं यजिमात्रमुद्दिश्य प्रयाजादिधर्मविधानम् । तच्च यजिमात्रं प्राकृतवैकृतेषु सर्वयागेषु समानमिति सर्वं(मातृकात्र खण्डिता)व्येत्यतिदेशककल्पनया विकृतिषु धर्मप्राप्तिश्चिन्तनीया । अतश्च नारब्धव्य उत्तरः षट्कः ।अथ नु····न तदा प्रतिकरणमपूर्वशब्दाभिधेयानां कार्याणां नियोगानां भेदाद् ये धर्मा येन कार्येण··शब्दान्तरादिप्रमाणवशासादितभेदत्वेन भिन्नत्वात् । अतश्च दर्शपूर्णमासकार्यसम्बन्धित्वेन ते व्यः उत्तरः षट्कः अतिदेशतश्च प्राप्तौ । उक्तम् 'प्रकृतिवद् विकृतिः कर्तव्या' इति । तत्र यजौ श्रूयन्ते त्वाच्चापूर्वस्य तेनैव प्रथमं धर्माणां सम्बन्धः स एवात्मानं साधिकारं साधयितुं करणमि····त्यादिकृतः पश्चात् परस्परसम्बन्ध इति किं यथोपदेशं कार्यमथ यथाकार्यमुपदेश इति··· शयः । यथाकार्वमुपदेशे हि व्यवस्था धर्माणां तत्र यत्र न विहितास्तत्र कार्योपकाराकाङ्क्षा··· इति चोदकस्तं पदार्थमसावाक्षेप्तुमर्हति येन कार्यस्योपकारः कश्चित् कर्तुं शक्यते न च····लकृतेनावघातेन कश्चिदुपकारो जनयितुं शक्यते प्रकृताविव दृष्टस्य तुषकणविमो ····णाः कृष्णलास्तेषामवघातेन किमिव क्रियेत ? अतः प्राप्त्यभावादेव कृष्णलेष्वर्थलोपादक(रणम् ?)··भावे कीदृशी बाधना ।

**अखण्डमण्डलविध्यन्तकाण्डप्राप्तेर्न ह्यंशांशिकया चोदकः प्रवर्तत इति ।** न····[अ]खण्डमण्डलविध्यन्तकाण्डप्राप्तेरिति तत्र ग्रन्थकृता तावदनेनैवाभिप्रायेणातिप्रसङ्गमाशङ्क्य अलमनयेत्यादिनोपसंहृतम् । इदं त्वत्रोत्तरम्, प्रकृतौ विधिर्दृष्टादृष्टोपकारवत्साधनसिद्ध्या सम्पन्नस्तत्रायमपि वैकृतो विधिरुपकारमेवापेक्षते न तु तज्जनकान्

## ध्वनिकारसम्मतध्वनितस्यार्थत्वनिरासः

**एतेन शब्दसामर्थ्यमहिम्ना सोऽपि वारितः ।**
**यमन्यः पण्डितम्मन्यः प्रपेदे कञ्चन ध्वनिम् ॥**
**विधेर्निषेधावगतिर्विधिबुद्धिर्निषेधतः ।**

5 **यथा**

**भम धम्मिअ वीसत्थो पान्थ मा मे गृहं विश ॥**

---

पदार्थान्, प्राकृतस्य विधेरुपकारापेक्षित्वदर्शनात् । स च प्राकृत उपकारोऽपेक्षासमये विभागेनापेक्षितुं न शक्यते । उपकारजनका हि विभक्ताः, न तु तैर्जन्यते यो महोपकारः । अतस्तेन महोपकारेणाविभक्तेन कथं विभागेन पदार्था आक्षेप्तुं पार्यन्ते ? यथा वन-
10 शब्दादविभागेन वृक्षाणां प्रतीतौ न धवार्थिना तत्प्रतीतिसमये धवत्यागः शक्यक्रियः, एवमविभक्तोपकारापेक्षातो धर्माणामाक्षेपे नानुपयुक्तानां परित्यागः शक्यक्रिय इति । इममेव चार्थं हृदि विनिवेश्याह **न ह्यांशांशिकया चोदकः प्रवर्तत** इति ।

**एतेन पण्डितम्मन्य** इति आनन्दवर्धनाचार्यं ध्वनिकारं परामृशति । स हि यस्मिन् काव्यप्रभेदे वाच्यवाचकौ प्रकरणादिसहायौ वाच्यदशोत्तीर्णस्य प्रतीयमानस्य प्राधान्येन
15 स्थितस्य व्यञ्जकतां प्रतिपद्येते तं काव्यप्रभेदं ध्वनिमाह । यथा च व्याकरणमूलत्वात् सर्वविद्यानां प्रथमैर्विद्वद्भिर्वैयाकरणैः श्रूयमाणेषु वर्णेषु स्फोटाभिव्यञ्जकत्वात् ध्वनि-शब्दः प्रयुक्तस्तयामुनापि तादृशे प्रभेदे व्यञ्जकत्वसामान्याद् ध्वनिशब्द एव प्रयुक्तः । आह च ।

"यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
20 व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः" ॥ इति ॥

अस्योदाहरणं – **भम धम्मिअ** इत्यादि ।

भम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिओ तेण ।
गोलाणइकच्छकुडङ्गवासिणा दरिअसीहेण ॥

भ्रम धार्मिक विश्रब्धः स शुनकोऽद्य मारितस्तेन ।
25 गोलानदीकच्छलताकुञ्जवासिना दृप्तसिंहेन ॥

कच्छः कूलभागः। कुडङ्गं लतागहनम्। अत्र च यद्यपि कदाचिदविनयवत्या चौर्यसुरतक्रीडासु प्रच्छायतया सर्वस्वभूतानि गोदावरीकूलवर्तीनि लतागेहानि प्रत्यहं पुष्पावचयार्थमागतेन धार्मिकेण चोर्यमाणसौभाग्यानि रक्षन्त्या वैदग्ध्याद् भयोपन्यासपूर्वं तत्र तस्य भ्रमणपरिहारायैवमुक्तम्, तथाप्यञ्जसा प्रव्रजितस्य शुनो भयमाशङ्कमानस्य सिंहेन तस्य व्यापादनमुपन्यस्य भयनिवृत्तिं कृत्वा भ्रमणं विधीयत इति विधेर्वाच्यता। अथ च विधिरूपवाच्यार्थोत्थापनाङ्गभूतेन दृप्तसिंहकर्तृकश्वव्यापादनलक्षणेन वाच्येनार्थात्मना वाक्येनैवमर्थाभिधानव्यवधानेन व्यञ्जकेनामुना सम्भूय द्वाभ्यां प्रकरणाभिधातृप्रतिपत्तिविशेषपर्यालोचनसहायाभ्यां 'तत्र मा भ्रमीः' इति निषेधावगतिः क्रियते, विधिनिषेधयोश्च युगपद् वाच्यदशोपारोहासम्भवादेकस्य वाच्यत्वमपरस्य प्रतीयमानत्वम्। अत्र च यद्यपि स्वत एव भ्रमणप्रवृत्तेरप्रवृत्तप्रवर्तनात्मकविध्यर्थाभावान्न मुख्यं विधित्वं तथापि स्वरससिद्धाया अपि भ्रमेः श्वभयान्निवृत्तायास्तन्निवारणेन यः प्रतिप्रसवः स एव विधिशब्देन निर्दिष्टः।

'तरुण्येकाहमेवास्मि सार्धं दृक्शक्तिहीनया। श्वश्वा चिरगतो भर्ता' इत्येवंप्रायश्लोकैकदेशोऽयं **'पान्थ ! मा मे गृहं विश'** इति। एतद् एतेनेत्यादिना निराकुरुते। अयमाशयः। वेदे शब्दनिबन्धनत्वादर्थव्यवस्थायास्तत्र यथाशब्दमर्थव्यवस्थाऽस्तु, लोके पुनर्ज्ञातमर्थं परं प्रतिपादयितुं शब्दान् प्रयुञ्जते ज्ञानञ्च प्रमाणान्तरात्। तत् शब्दप्रतिपादितं वस्तु यदि प्रमाणान्तरेण न विरुध्यते तद्यथावगतमेव ग्राह्यम्, विरोधे तु न, यथा अविरोधो भवति तथा तस्यार्थो व्यवस्थाप्यः। तथाहि यथा "गङ्गायां घोषः" इति लक्षणायां स्रोतोरूपस्यार्थस्याधारत्वानुपलम्भात् प्रमाणान्तरानुगुण्येन तटप्रतिपादन एव पर्यवस्यति शब्दव्यापारः, यथा च गौणे 'सिंहो माणवकः' इत्यादौ द्वयोरपरजात्योर्विरुद्धयोरेकत्र समावेशासम्भवाद् गुणविशेष एव शौर्यलक्षणे प्रतिपादनशक्तिः सिंहशब्दस्य, एवमत्र यद्यपि विधावभिधानशक्तिः पर्यवसिता तथापि तात्पर्यशक्तेरपर्यवसानाद् विधौ च पदार्थानन्वयाद् मा भ्रमीरिति निषेध एव झगिति वाक्यार्थतयावभासते। ततोऽत्र यद्यपि श्वव्यापादनोपन्यासेन भयनिवृत्तिं कृत्वा भ्रमणमेव विधीयते तथापि दृप्तपदविशेषितसिंहपदार्थपर्यालोचनायां सदर्पपञ्चाननबाधिताध्वप्रतिपादनेन सुतरां भयहेतूपन्यासाद् विरुद्धकारणोपलम्भाद् भ्रमणविधिर्न वाक्यार्थतामुपगन्तुमलम्, प्रत्युत तन्निषेधस्यैवोद्भूतनिमित्तत्वमिति तस्यैव वाक्यार्थतोपारोहः। यद्यपि साक्षाल्लोटा प्रतिपाद्यमानो विधिः श्रूयते

**मानान्तरपरिच्छेद्यवस्तुरूपोपदेशिनाम् ।**
**शब्दानामेव सामर्थ्यं तत्र तत्र तथा तथा ॥**
**अथ वा नेदृशी चर्चा कविभिः सह शोभते ।**
**विद्वांसोऽपि विमुह्यन्ति वाक्यार्थगहनेऽध्वनि ॥**

---

5 तथाप्यनन्वयवलाद् भ्रमेत्यनेन विपरीतलक्षणया भ्रमणनिषेध एव प्रतिपाद्यते । दृश्यते च विपरीतलक्षणयापि व्यवहारः । तथाहि चन्द्रदर्शस्वभावाममावास्यां दर्शशब्देन विपरीतलक्षणया प्रतिपादयन्ति । अपि च, अस्ति तावदेवंप्रायाद् वाक्यादित्थम्भूतनैमित्तिकावगतिः, अस्याश्चावगतौ यथा निमित्तानां निमित्तत्वमवकल्प्यते तथा कल्प्यमिति । एतदेव चेतसि निधाय 'एतेन पण्डितम्मन्यः' इत्यत्र 'एतेन' इति सर्वनाम प्रयुक्तम् । युक्तश्च 10 प्रतीयमानार्थप्रतिपत्तेः शाब्दत्वमेव, अन्यथेदृशमर्थमवगम्य प्रतिपत्तुः 'उत्प्रेक्षितो मयायमर्थो न तु शब्दात् प्रतिपन्नः' इति प्रतीतिः स्यात्, अस्ति च शाब्दत्वेन प्रतीतिः, अतः शाब्द एवायम् । यस्य तु यथाश्रुतग्राहिणो विधिमात्रप्रतीत्यैव संतोषः सोऽनवधारितवाक्यार्थ एव । यदाहुः 'गन्तव्यं दृश्यतां सूर्यः' इत्युक्ते बहिर्निःसृत्य प्रविश्य यो ब्रूयाद् 'दृष्टः सूर्यो निर्मलः प्रकीर्णरश्मिः' इति, न तेन यथोक्तं कृतमित्युच्यते, कालविशेषोप15 लिप्सानिबन्धनत्वाद् वाक्यस्येति । तथा

काकेभ्यो रक्ष्यतां सर्पिरिति बालोऽस्य चोदितः ।
उपघातपरे वाक्ये न श्वादिभ्यो न रक्षति ॥

एवञ्चैवमादौ सर्वत्र नैमित्तिकावगतिपूर्वकत्वेन निमित्तानां निमित्तत्वव्यवस्थापनान्न निमित्तस्वरूपमात्राश्रयणेन व्यवहारः प्रवर्तनीयः । आह च

20 स्तुतिनिन्दाप्रधानेषु वाक्येष्वर्थो न तादृशः ।
पदानां प्रविभागेन यादृशः परिकल्प्यते ॥

तदित्थंस्थिते न्यायस्य समानत्वाद् यथा 'रसायनोपयोगादमृतो जायते' 'दध्युपयोगात् पृथिव्यां निमज्जति' इत्यत्र 'दीप्ताग्निर्मन्दाग्निश्च भवति' इत्ययमर्थस्तात्पर्यशक्त्या वाक्यार्थस्तथा सर्वत्र व्यङ्ग्याभिमतोऽर्थात्मा वाक्यतात्पर्यशक्तिक्रोडीकृतत्वाद् 25 वाक्यार्थ एव । 'पान्थ मा मे गृहं विश' इत्यत्र निषेधं प्रति कारणोपन्यासो यः कृतः स विरुद्धत्वात् विधिमेव पर्यवस्थापयतीति विधिरेव वाक्यार्थ इत्यलमतिप्रसङ्गेन । **तत्र तत्र** लक्षणादौ । **तथा तथा** तेनैव प्रकारेण लक्षणाद्यात्मकव्यापारसमाश्रयेण ।

तदलमनया गोष्ठ्या विद्वज्जनोचितया चिरम् ।
परमगहनस्तर्कज्ञानामभूमिरयं नयः ।
प्रकृतमधुना तस्माद् ब्रूमो न भात्यनुमानत-
स्तनुरपि सतामर्थापत्तेर्विशेष इति स्थितम् ॥

## अभावस्य प्रमाणान्तरत्वम्

आह अभावस्तर्हि प्रमाणान्तरमस्तु ।

सत्परिच्छेदकं यत्र न प्रमाणं प्रवर्त्तते ।
तदभावमितौ मानं प्रमाणाभाव उच्यते ।।

'इह घटो नास्ती'ति घटं प्रति सदुपलम्भकप्रमाणप्रवृत्तिर्नास्तीति, असौ प्रमाणाभावो घटाभावं परिच्छिनत्ति । तत्र च घटविषयज्ञातृव्यापारानुत्पाद एव दृश्यादर्शनशब्दवाच्यः प्रमाणम्, नास्तीति बुद्धिः फलम् ।

अथ वा घटाभावग्राही ग्रहीतृव्यापारः सदुपलम्भकप्रमाणाभावजनितो नास्तीति प्रत्ययस्वभावः प्रमाणम्, फलन्तु हानादिज्ञानं भविष्यति तदुक्तम् ।

प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते ।
सात्मनोऽपरिणामो वा विज्ञानं वान्यवस्तुनि ।। इति ।

अन्यवस्तुशब्देन घटाभाव उक्तः । तत्र तावदिदं नास्तीति ज्ञानं न प्रत्यक्ष-जनितमिन्द्रियार्थसन्निकर्षाभावात् । सन्निकर्षो हि संयोगसमवायस्वभावः तत्प्रभावभेदो वा । संयुक्तसमवायादिरिह नास्त्येव । संयुक्तविशेषणभावोऽपि न सम्भवति कुम्भाभावस्य भूप्रदेशविशेषणत्वाभावात् । न ह्यसंयुक्तमसमवेतं वा किञ्चिद्विशेषणं भवति, संयुक्तस्य दण्डादेः समवेतस्य शुक्लगुणादेस्तथाभावदर्शनाद् । अभावश्च न केनचित्संयुज्यते अद्रव्यभावात्, न क्वचित्समवैति गुणादि-वैलक्षण्यादिति । यदि च संयुक्तविशेषणभावसन्निकर्षोपकृतं चक्षुरभावं गृह्णाति

---

दृश्यादर्शनशब्दवाच्य इति । दृश्यस्य दर्शनयोग्यस्य यददर्शनं तच्छब्दाभिलप्यः

सात्मनोऽपरिणामो वेति । घटज्ञातृतालक्षणावस्थानाविर्भावोऽत्रापरिणामो विवक्षितः ।

तर्हि तदविशेषात्संयुक्तद्रव्यवर्तीन् रसादीनपि गृह्णीयात्, तदभावमपि मा ग्रहीद-योग्यत्वाविशेषात्। योग्यायोग्यत्वकृतग्रहणाग्रहणनियमवादे वा योग्यतैव सन्निकर्षो भवति, किं षट्कघोषणेन ? तस्मान्न घटाभावज्ञानं चाक्षुषम्।

ननु भूप्रदेशञ्च घटाभावञ्च विस्फारिते चक्षुषि निरीक्षामहे। निमीलिते तु 5 तस्मिंस्तयोरन्यतरमपि न पश्यामः। तत्र समाने च तद्भावभावित्वे भूप्रदेशज्ञानं चाक्षुषम्, अभावज्ञानन्तु न चाक्षुषमिति कुतो विशेषमवगच्छामः ? बाढम्, अव-गच्छामः, सन्निकर्षाभावादेव। न ह्यसन्निकृष्टं चक्षुरवगतिजन्मने प्रभवति। तद्भाव-भावित्वं त्विदमन्यथासिद्धम्, विदूरदेशे व्यवस्थितस्थूलज्वालावलीजटिलज्वलनगत-भास्वररूपोपलम्भानुवर्त्तितद्गतोष्णस्पर्शज्ञानवत्। तत्र यथा रूपानुमीयमानस्पर्श-10 वेदने नयनान्वयव्यतिरेकान्वयविधानमन्यथासिद्धम्, एवमिहापि भूप्रदेशोपलम्भा-विनाभाविनि कुम्भाभावग्रहणे तत्कृतमिन्द्रियान्वयव्यतिरेकान्वयविधानमिति न चाक्षुषो घटाभावप्रतिभासः। तदुक्तम्

गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्।
मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया॥ इति।

15 अतश्चैवमसन्निहितस्यापि क्वचिद् ग्रहणदर्शनात्, स्वरूपमात्रेण गौर-मूलकमुपलब्धवतस्ततो देशान्तरं गतस्य तत्र केनचिद् गर्गोऽस्ति वा नास्ति वेति पृष्टस्य सतः स्वरूपमात्रं गृहीतं गौरमूलकमनुस्मरतः तदानीमसन्निकृष्टेऽपि गर्गस्याभावे तदैव तस्य ज्ञानमुदेति, तत्रेन्द्रियकथापि नास्ति इति न तस्य प्रत्यक्ष-त्वम्, चानुमानगम्योऽयमभावः। भूप्रदेशस्य तद्गतघटादर्शनस्य वा लिङ्गत्वानुप-20 पत्ते र्न भूप्रदेशो लिङ्गम्, अगृहीतसम्बन्धस्यापि तत्प्रतीतेः, अनैकान्तिकत्वाद् अपक्षधर्मत्वात्, तदधिकरणभावानन्त्येन सम्बन्धग्रहणासम्भवाच्च। नापि घटा-दर्शनं लिङ्गम्, अपक्षधर्मत्वाद्, घटादर्शनं घटस्य धर्मो न तदभावस्य। घटाभाव-

---

गृहीत्वा वस्तुसद्भावम्। वस्तुनः शुद्धस्य भूतलस्य सत्ताम्। स्मृत्वा च प्रति-योगिनं घटम्। निमीलिताक्षस्यापि भावात् सतोऽप्यक्षस्यानपेक्षणम्।

25 गौरमूलकमुपलब्धवत इति। गौरमूलकाख्यो ग्रन्थकृदभिजनग्रामः। अनैकान्ति-कत्वात् सत्यपि घटे भूतलस्योपलम्भा।

प्रतीतिं प्रति व्याप्रियमाणत्वात्तद्धर्मत्वमस्येति चेत् न, इतरेतराश्रयप्रसङ्गात्। तद्धर्मत्वे सति लिङ्गप्रतीतिजनकत्वम्, प्रतीतिजन्मनि सति तद्धर्मताज्ञानमदर्शनस्य दुर्घटमेव। सिद्धायान्तु किं पक्षधर्मताज्ञानेन, साध्यप्रतीतेः सिद्धत्वात्।

अपि चेदमदर्शनाख्यं लिङ्गमविदितव्याप्ति कथमभावस्यानुमापकं भवेत्? व्याप्तिग्रहणञ्च धूमाग्निवदुभयधर्मिग्रहणपूर्वकम्। तत्र व्याप्तिग्रहणवेलायामेव तावत् कुतस्त्यमभावाख्यधर्मिग्रहणमिति चिन्त्यम्। तत एवानुमानादिति यद्युच्यते तदितरेतराश्रयम्। अनुमानान्तरनिबन्धने तु तद्ग्रहणेऽनवस्था अदर्शनाख्य-लिङ्गमपि दर्शनाभावस्वभावमिति तत्स्वरूपपरिच्छेदचिन्तायामपि अयमेव पन्थाः। अतो दूरमपि गत्वा तदवगमसिद्धये प्रमाणान्तरमभावपरिच्छेदनिपुणमवगन्तव्य-मिति, तत एव तदवगमसिद्धेर्न तस्यानुमेयत्वम्। न चेदमिह घटो नास्तीति ज्ञानं शब्दोपमानार्थापत्त्यन्यतमनिमित्तमाशङ्कितुमपि युक्तमिति, सदुपलम्भकप्रमाणाती-तत्वादभावस्यैव भूमिरभाव इति युक्तम्,

अपि च प्रमेयमनुरूपेण प्रमाणेन प्रमातुमुचितम्।

भावात्मके प्रमेये हि नाभावस्य प्रमाणता।
अभावेऽपि प्रमेये स्यान्न भावस्य प्रमाणता॥
न प्रमेयमभावाख्यं निह्नुतं बोधयत्त्वया।
प्रमाणमपि तेनेदमभावात्मकमिष्यताम्॥

## अभावस्य प्रमाणान्तरतानिरासः

अत्राभिधीयते, सत्यम् अभावः प्रमेयमभ्युपगम्यते, प्रत्यक्षाद्यवसीयमानस्व-रूपत्वान् न प्रमाणान्तरमात्मपरिच्छित्तये मृगयते।

अदूरमेदिनीदेशवर्त्तिनस्तस्य चक्षुषः।
परिच्छेदः परोक्षस्य क्वचिन्मानान्तरैरपि॥

---

अनुमानान्तरनिबन्धने तु तद्ग्रहणेऽनवस्थेति। येनापि हि लिङ्गेन घटाभावं गृहीत्वा तस्य घटाभावस्य घटादर्शनेन सह सम्बन्धो गृह्यते, तेनापि घटाभावेन सह गृहीतसम्बन्धेनैव सता घटाभावः प्रतिपाद्यः, अतस्तस्याप्यनुमानान्तरगृहीतेनाभावेन सह सम्बन्धो ग्राह्यः, तस्याप्यनुमानान्तरगृहीतेनेत्यनवस्था।

तथा 'चेह घटो नास्ती'ति ज्ञानमेकमेवेदम्, 'इह कुण्डे दधी'ति ज्ञानवद् उभयालम्बनमनुपरतनयनव्यापारस्य भवति। तत्र भूप्रदेशमात्र एव नयनजं ज्ञान-मितरत्र प्रमाणान्तरजनितमिति कुतस्त्योऽयं विभागः? अत्राग्निरिति युक्तोऽयम-नक्षजः प्रतिभासः, धूमग्रहणानन्तरमविनाभावस्मरणादिबुद्धयन्तरव्यवधानसम्भ-
5 वात्। इह तु तथा नास्त्येव, अव्यवहितैव हि भूप्रदेशवद् घटनास्तितावगतिरविच्छे-देनानुभूयते। न च क्षितिधराधिकरणपरोक्षाशुशुक्षणिवदनीक्षणविषयता भवति, भावस्य तद्व्यापारान्वयव्यतिरेकानुविधानात्तत्प्रतीतेः। तत्र हि व्यापृताक्षोऽपि न पर्वतवर्त्तिनमनलमवलोकयितुमुत्सहते। इह तु घटाभावमपरिम्लाननयनव्यापार एव पश्यतीति चाक्षुषमभावज्ञानम्, तद्भावभावित्वविधानात्। न च दूरव्यवस्थितहुतवह-
10 रूपदर्शनपूर्वकस्पर्शानुमानवदिदमन्यथासिद्धं तद्भावभावित्वम्। तत्र हि बहुशः स्पर्शदर्शनकौशलशून्यत्वमवधारितं चक्षुषः, स्पर्शपरिच्छेदि च करणान्तरं त्वगि-न्द्रियमवगतम्। अविनाभाविता च पुरा तथाविधयो रूपस्पर्शयोरुपलब्धेत्यनुमेय एवासौ स्पर्श इति युक्तं तत्रान्यथासिद्धत्वं चक्षुर्व्यापारस्य। प्रकृते तु नेदृशः प्रकारः समस्ति। न चैकत्र तद्भावभावित्वमन्यथासिद्धमिति सर्वत्र तथा कल्प्यते। एवं हि
15 रूपमपि चाक्षुषतामवजह्यात्।

ननु नीरूपस्यासम्बद्धस्य च चाक्षुषत्वमभावस्य कथमभिधीयते? चक्षुर्ज-नितज्ञानविषयत्वाच्चाक्षुषत्वम्, न रूपवत्त्वेन, रूपवतामपि परमाणूनामचाक्षुष-त्वात्। सम्बद्धमपि न सर्वं चाक्षुषमाकाशस्य तथात्वेऽपि तदभावात्।

नन्वसम्बद्धस्य चक्षुषा ग्रहणे दूरव्यवहितस्य विभीषणादेरपि चाक्षुषत्व-
20 प्रसङ्गः? उच्यते, भावे खल्वयं नियमो यदसम्बद्धस्य चक्षुषा अग्रहणम्। अभावस्त्व-सम्बद्धोऽपि चक्षुषा ग्रहीष्यते। षट्प्रकारसन्निकर्षवर्णनमपि भावाभिप्रायमेव। सम्बद्धं हि यद् गृह्यते तत् षण्णां सन्निकर्षाणामन्यतमेन सन्निकर्षेणेति। प्राप्यकारित्वमपि इन्द्रियाणां वस्त्वभिप्रायमेवोच्यते। तस्मादवस्तुत्वादभावस्य तेन सन्निकर्षमलभ-मानमपि नयनमुपजनयति तद्विषयमवगममिति न दोषः। न चासम्बद्धत्वाविशेषाद्
25 देशान्तरादिषु सर्वाभावग्रहणमाशङ्कनीयम्, आश्रयग्रहणसापेक्षत्वादभावप्रतीतेः।

---

सम्बद्धमपि न सर्वं चाक्षुषमिति। चक्षूरश्मीनां मूर्तत्वादवश्यंभाव्याकाशेन संयोगः, सर्वमूर्तद्रव्यसंयोगित्वात् तस्य।

आश्रयस्य च सन्निहितस्यैव प्रत्यक्षत्वात् । अथवा संयुक्तविशेषणभावाख्यसन्निकर्षोपकृतं चक्षुरभावं ग्रहीष्यति, यथा समवायप्रत्यक्षत्ववादिनां पक्षे समवायमिति ।

ननु तदिदमसिद्धमसिद्धस्य दृष्टान्तीक्रियते । मैवम्, भवतापि द्रव्यगुणयोर्वृत्तेरपरिहार्यत्वात् । भेदबुद्ध्या सिद्धभेदयोरसम्बद्धयोश्च द्रव्यगुणयोरदर्शनादवश्यं काचिद् वृत्तिरेषितव्येत्यलमर्थान्तरचिन्तनेन । 5

यत्तूक्तं संयोगसमवाययोरभावादभावो न भूप्रदेशस्य विशेषणमिति, तदप्यसाधु । संयोगसमवायाभ्यामन्यस्यैव विशेषणविशेष्यभावनाम्नः सम्बन्धस्यादूर एव प्रतीतिबलेन दर्शयिष्यमाणत्वात् ।

यस्तु संयुक्तविशेषणभावे सन्निकर्षे रसादिभिरतिप्रसङ्ग उद्भावितः सोऽयं संयुक्तसमवायाख्ये चक्षूरूपसन्निकर्षेऽपि समानो दोषः । संयुक्तसमवायोऽपि तर्हि मा भूत् सन्निकर्षः ? किं नश्छिन्नम् । तत्किमसम्बद्धमेव रूपं गृह्णातु चक्षुः ? न हि संयुक्तसमवायादन्यश्चक्षूरूपयोः सम्बन्धः । 10

नन्वर्थग्रहणात्मको व्यापार एव चक्षुषः सन्निकर्षो योग्यता वा, तद्वशादेव रूपस्य तद्ग्राहकत्वमुपेयते न संयुक्तसमवायादिनेति । स तर्हि व्यापारः, सा वा योग्यता, कथमभावमपि प्रति तस्य न स्यात् ? प्राप्यकारीणि चेन्द्रियाणि कारकत्वादिष्यन्ते सन्निकर्षश्च निह्नुयते इति विप्रतिषिद्धम् । तस्मात् षट्प्रकारा सन्निकर्षानुगामिनी योग्यता वक्तव्या, न योग्यतामात्र एव विश्रम्य स्थातव्यम् । यत्र योग्यता तत्र सन्निकर्षोऽप्यस्ति, न तु यत्र सन्निकर्षस्तत्रावश्यं योग्यतेति । एवमभ्युप- 15

---

**तदिदमसिद्धमिति ।** मीमांसकानां हि समवायोऽसिद्धः, स कथं तेषां दृष्टान्तीभवेत् । तथाहि त आहुः 20

न चाप्ययुतसिद्धानां सम्बन्धित्वेन कल्पना ।
नानिष्पन्नस्य सम्बन्धो निष्पत्तौ युतसिद्धता ॥ इत्यादि ।

**चक्षूरूपसन्निकर्षेऽपि समानो दोषः ।** रसेनापि सह चक्षुषः संयुक्तसमवायसम्भवात् ।

**योग्यता वेति ।** नियतार्थविज्ञानहेतुरतीन्द्रियो नियतविज्ञानात्मककार्यानुमेयो योग्यतात्मकः सम्बन्धः । 25

गच्छतां न रसाद्यतिप्रसङ्गचोदना धुनोति । मनोरसादेः सत्यपि सन्निकर्षे योग्यत्वा-
भावादग्रहणम् ।

योग्यतामात्रवादेऽपि नाभावस्यास्त्ययोग्यता ।
भवद्भिर्वस्तुधर्मोऽस्य को वा नाभ्युपगम्यते ॥
5 सर्वोपाख्यावियुक्तत्वान्नास्त्येवेत्येष वोच्यताम् ।
अभावश्चाक्षुषज्ञानविषयो वाऽभ्युपेयताम् ॥

यदपि स्वरूपमात्रं दृष्टश्च पश्चात् किञ्चित्स्मरन्नपि ।
तत्रान्यनास्तितां पृष्टस्तदैव प्रतिपद्यते ॥

इत्युक्तं तदपि न युक्तम् । वस्त्वन्तरविविक्तगौरमूलकस्वरूपग्रहणसमय एव
10 तत्रासन्निहितसकलपदार्थाभावग्रहणस्य मेचकबुद्ध्या सिद्धत्वाद् इदानीं तद्गत-
गर्गाभावस्मरणं न तस्य परोक्षस्यानुभवः । तथा हि तदानीं गर्गस्तत्र नासीदित्येव-
मसौ स्मृत्वा सत्यवादी स्मरति, इदानीं त्वस्तित्वनास्तित्वे प्रति संशेते एवासौ,
गर्गस्य कुतश्चिदागतस्येदानीं तत्रास्तित्वसम्भवात् ।

ननु न पूर्वं सर्वाभावग्रहणमनुभूतवानसौ गौरमूलके, अननुभूयमानमपि
15 तदस्य बलात्कल्प्यते, अभ्यस्तविषयेऽविनाभावस्मरणवत् । तथा हि तेन तेनानुयुक्त-
स्तस्य तस्याभावं स्मृत्वोत्तरमसौ सर्वेभ्य आचष्टे ।

ननु मेचकबुद्ध्या सकलाभावग्रहणे सहसैव सकलाभावस्मृतिरुपजायेत ?
मैवम्, यत्रैव प्रश्नादिस्मरणकारणमस्य भवति तदेव स्मरति न सर्वमविद्यमान-
स्मरणनिमित्तम् । अन्यत्र तु युगपदुपलब्धेष्वपि वर्णेषु युगपदन्त्यवर्णानुभवसमनन्तरं
20 स्मरणम्, अन्यत्र तु युगपदुपलब्धेष्वपि क्रमेण स्मरणं भविष्यतीति न मेचक-
बुद्धावयं दोषः । किञ्च स्वरूपमात्रं दृष्टमिति वदता भवतापि मेचकज्ञानमभ्युपगत-
मेव, मात्रग्रहणेन तदन्याभावग्रहणसिद्धेः । एवं हि भवानेवाभ्यधात्

---

नास्त्येवेत्येष वोच्यताम् । नास्त्येवैष इति वोच्यतामिति सम्बन्धः ।

मेचकबुद्ध्येति । मयूरग्रीवाया वर्णे यथा व्यक्तितिरस्कृतानेकवर्णसम्भवे मेचक-
25 व्यवहार एवं व्यक्तितिरस्कृताखिलाभावग्राहिण्यामपि बुद्धौ मेचकतामात्रग्रहणेन तदन्या-
भावग्रहणसिद्धिरिति । यदि ह्यन्येऽपि पदार्था दृष्टाः स्युस्तदा कथं स्वरूपमात्रेण दृष्टः
स्यात् । न ह्यन्यैः सह दृष्टः स्वरूपमात्रेण दृष्टो भवति ।

अयमेवेति यो ह्येष भावे भवति निर्णयः ।
नैष वस्त्वन्तराभावसंवित्त्यनुगमाद् विना ॥

इति । तस्माद् गौरमूलकावेशसमय एव तत्रासन्निहितस्य गर्गादेरभावग्रहणान्नेदानीं परोक्षाभावग्रहणमभावकारणमभ्युपगन्तव्यमिति, प्रत्यक्षगम्य एवायमभावः । 5

यत्पुनरननुमेयत्वम् 'इह घटो नास्ती'ति प्रकृताभावविषयमभ्यधायि तदस्माकमभिमतम् । कश्चित्पुनरसन्निकृष्टदेशवृत्तिरनुमेयोऽपि भवत्यभावः । यथा सन्तमसे सलिलधाराविसरसिक्तसस्यमूलमभिवर्षति देवे घनपवनसंयोगाभावोऽनुमीयते । यथा वार्थापत्तावुदाहृतं गृहभावेन चैत्रस्य बहिरभावकल्पनमिति ।

आगमादप्यभावस्य क्वचिद्भवति निश्चयः । 10
चौरादिनास्तिताज्ञानमध्वगानामिवाप्ततः ॥

यत्पुनरुक्तमनुरूपेण प्रमाणेन प्रमेयं प्रमीयते प्रमेयत्वाद्भावात्मकप्रमेयवदिति, एतदप्यप्रयोजकं साधनम् ।

अभावः पटलादीनां प्रत्यक्षं प्रतिपद्यते ।
विपक्षे वृत्त्यभावश्च लिङ्गस्य सहकारिताम् ॥ 15
पुरुषोक्तिषु दोषाणामभावश्चोपयुज्यते ।
सामग्र्यन्तर्गतात्तस्मादभावादपि भावधीः ॥
अभावश्च क्वचिल्लिङ्गमिष्यते भावसंविदः ।
वृष्टयभावोऽपि वाय्वभ्रसंयोगस्यानुमापकः ॥
तस्माद्युक्तमभावस्य नाभावेनैव वेदनम् । 20
न नाम यादृशो यक्षो बलिरप्यस्य तादृशः ॥

## बौद्धमतेऽभावस्यावस्तुत्वम् ततश्चाप्रमाणत्वम्

अत्र रक्तपटाः प्राहुः प्रमेये सति चिन्तनम् ।
युक्तं नाम प्रमाणस्य तदेव त्वतिदुर्लभम् ॥

---

नैष वस्त्वन्तराभावसंवित्त्यनुगमाद् विनेति । यावद् वस्त्वन्तराभावसंवित्तिमसौ नानुगच्छति नापेक्षते तावदसौ न भवतीत्यर्थः । 25

अभावो नाम प्रतीयमानो न स्वतन्त्रतया घटाभावस्वरूपवदनुभूयतेऽपि तु देशकालप्रतियोगिविशिष्टत्वेन। तथा ह्येवं प्रतीतिरिदमिदानीमिह नास्तीति स चेत्थमवगम्यमानोऽपि यदि तैः सम्बद्ध एव भवेदभावः क एनं द्विष्यात् ? न त्वसौ तत्सम्बद्धः। न हि देशेन कालेन प्रतियोगिना सहास्य कश्चित्सम्बन्धः, संयोगसम-
5 वायादेरनुपपत्तेः। न च सम्बन्धरहितमेव विशेषणं भवति।

## प्रसङ्गात् विशेषणविशेष्यभावसम्बन्धस्वरूपविचारः

ननु विशेषणविशेष्यभाव एव सम्बन्धः, किं सम्बन्धान्तरापेक्षया ? मैवम् सम्बन्धान्तरमूलत्वेन तदवगमात्। संयुक्तं, समवेतं वा विशेषणं भवति दण्डी देवदत्तो नीलमुत्पलमिति। अतश्च न वास्तवः स्वतन्त्र एव विशेषणविशेष्यभावः सम्बन्धः
10 पुरुषेच्छया विपर्यस्यन्तमप्येनं पश्यामः। विशेषणमपि विशेष्यीभवति विशेष्यमपि विशेषणीभवतीति काल्पनिक एवायं सम्बन्धो न वस्तुधर्मः, प्रतियोगिना सह नतरामभावस्य सम्बन्धोऽसमानकालत्वात्। यदा हि घटो न तदा तदभावः, यदा वा तदभावो न तदा घट इति। विरोधाख्यसम्बन्धो भविष्यतीति चेत्, को विरोधार्थः ? यदि हि प्राक्सिद्धो घटाभाव आगत्य घटं विरुन्ध्याद् भवेदपि तद्विरोधो घटमुद्गर-
15 योरिव, न त्वेवमस्ति तयोरसमानकालत्वात्। अभ्युपगमे वा घटतदभावयोरिव वध्यघातकयोः साहचर्यमनुभूयते। घटाभावः किं कुर्वन् घटं विरुन्ध्याद् ? अकिञ्चित्करस्य विरोधित्वेऽतिप्रसक्तिः। अभावान्तरकरणेऽनवस्था। मुद्गरादयो घटस्य नाभावहेतवो भवितुमर्हन्ति, भावस्य स्वत एव भङ्गुरत्वेन विनाशहेत्वनपेक्षत्वात्।

भावो विनश्वरात्मासौ कृतं प्रलयहेतुभिः।
20 अथाप्यनश्वरात्मासौकृतं प्रलयहेतुभिः॥

तस्माद्विजातीयकपालादिसन्ततिजनन एव मुद्गरादिकारकव्यापारः। सामग्र्यन्तरानुप्रवेशे सति सन्तत्यन्तरोत्पादो, न पुनरभावस्य ततो निष्पत्तिः। स हि घटाद्वस्त्वन्तरं चेत् किमायातम् ? यदसौ न पूर्ववदुपलभ्यते, तद्विरोधित्वादिति चेत् प्रत्युक्तमेतत्। अनर्थान्तरत्वे तु घटस्यैव मुद्गरकार्यत्वं स्यात्।

---

25 अभावान्तरकरणे त्वनवस्थेति। तदपि ह्यभावान्तरं क्रियमाणं घटविरोधित्वात् किञ्चित्करमभ्युपेतव्यम्, तच्च यद्यभावान्तरं कुर्यात् तदानवस्थेति।

अथाप्यनश्वरात्मासौ कृतं प्रलयहेतुभिः, नित्यस्य नाशयितुमशक्यत्वात्।

ननु यानि मुद्गरेण कपालानि जन्यन्ते स एव घटाभावः। हन्त तर्हि कपाल-स्फोटने सति घटाभावस्य विनष्टत्वाद् घटस्योन्मज्जनं प्राप्नोति। किञ्चाकिञ्चि-त्कराणि कपालानि घटस्याभाव इति यद्युच्यते, पटस्यापि तथोच्येरन्। किञ्च कारकत्वं तेषां पूर्ववत् प्रतिक्षेप्तव्यम्। अपि चायमभावो भवनधर्मा वा स्याद् अभवनधर्मा वा? भवनधर्मत्वे भावोऽसौ भवेद्, घटादिवत्। अभवनधर्मा तु यद्य-भावोऽस्ति स नित्य एवासौ तर्हि भवेत्। स चायमेकपदार्थसम्बन्धी वा स्यात् सर्व-पदार्थसम्बन्धी वा? तत्रैकभावसम्बन्धित्वे न तस्य नियमकारणमुत्पश्यामः। सर्व-भावसम्बन्धित्वे तु सर्वपदार्थप्रतिकूलस्याभावस्य नित्यत्वान्नित्यः सन्नित्यो वा कश्चिदभावो नामास्ति।

नन्वभावानभ्युपगमे भावानामितरेतरसङ्करादखिलव्यवहारविप्लवः प्राप्नोति, यदाह

क्षीरे दधि भवेदेवं दध्नि क्षीरं घटे पटः।
शशे शृङ्गं पृथिव्यादौ चैतन्यं मूर्त्तिरात्मनि॥ इति।

अभावाभ्युपगमे तु भावानामितरेतराभावादसङ्कीर्णस्वभावत्वाद् अभाव-कारणकसङ्करपरिहारकथने तु सुतरां विप्लवः।

भावो भावादिवान्यस्मादभावांशादपि ध्रुवम्।
असङ्कीर्णोऽभ्युपेतव्यः स कथं वा भविष्यति॥
अन्योन्यमपि भावानां यद्यसङ्कीर्णता स्वतः।
भावैः किमपराद्धं वा परतश्चेत्कुतो नु सा॥

भावेभ्यो यद्युपेयेत भवेदन्योन्यसंश्रयम्।
अभावान्तरजन्या चेदनवस्था दुरुत्तरा॥

---

**मूर्तिरात्मनीति**। महत्परिमाणादन्यत् परिमाणान्तरम्।

**भावो भावादिवान्यस्मादिति**। यथा भावोऽन्यस्माद् भावादितरेतराभाववशाद् भिद्यते तथा इतरेतराभावाद्भिद्यतेऽभावो न वा? न भिद्यते चेद् भावाभावसङ्कर-प्रसङ्गः। अथ भिद्यते, स्वतः अभावान्तरवशाद् वा? स्वतश्चेद् भावानामपि स्वत एवास्तु भेदः। अभावान्तरवशाच्चेदनवस्था। असङ्कीर्णभाववशाद् भावा-नामसङ्करस्तद्वशाच्चाभावासङ्कर इत्याशङ्क्याह **भवेदन्योन्यसंश्रयमिति**। अभावान्तर-

अभावस्वभावतायाश्च सर्वान् प्रत्यविशेषात्प्रतिषेध्यनिबन्धन एव तद्भेदः। प्रतिषेध्याश्च भावाः परस्परेण भिद्यमानास्तं भिन्दन्तीति। प्रत्युत भावाधीनमभावानामसाङ्कर्यं वक्तुमुचितम्, न तु विपर्ययो युक्तः, तदखिलपदार्थव्यवस्थाविसंष्ठुलीभावभयादपि नाभावाभ्युपगमो युक्तः।

5 नन्वभावप्रतिक्षेपे नञः किं वाच्यमुच्यताम्।
न वै शब्दानुसारेण वस्तुस्थितिरुपेयते॥
बौद्धाः खलु वयं लोके सर्वत्र ख्यातकीर्त्तयः।
विकल्पमात्रशब्दार्थपरिकल्पनपण्डिताः॥
क्वचिन्नामपदप्राप्तवृत्तिना जन्यते नञा।
10 निषेधपर्युदस्तात्मविषयोल्लेखिनी मतिः॥
क्वचित्त्वाख्यातसम्बन्धमुपेत्य विदधात्यसौ।
तदुपात्तक्रियारम्भनिवृत्त्युल्लेखमात्रकम्।

## एकादशविधानुपलब्धिनिरूपणम्

ननु चानेन मार्गेण यदि भावो निरस्यते।
15 एकादशप्रकारैषानुपलब्धिः क्व गच्छतु॥

स्वभावानुपलब्धिर्यथा नेह घटोऽनुपलब्धेरिति। कारणानुपलब्धिर्यथा नात्र धूमो दहनानुपलब्धेरिति। कार्यानुपलब्धिर्यथा नात्र निरपवादा धूमहेतवः सन्ति धूमानुपलब्धेरिति। व्यापकानुपलब्धिर्यथा नात्र शीतस्पर्शः पावकोपलब्धेरिति।

---

जन्यत्वे च परस्परमन्यासङ्करस्य तस्याप्यभावान्तरजन्या असङ्करता चेदनवस्था
20 दुरुत्तरेति तदेवाह अभावान्तरजन्या चेदनवस्था दुरुत्तरेति।

न वै शब्दानुसारेण वस्तुस्थितिरुपेयते। शब्दानामर्थासंस्पर्शित्वात्।

स्वभावानुपलब्धिरिति। घटस्य प्रतिषेध्यस्य दृश्यस्य यः स्वभाव आत्मीयं रूपं तस्यानुपलब्धिः। अत्र च दृश्यस्येति विशेषणं कर्तव्यमन्यथा सन्तमसव्यवस्थितस्य घटादेरनुपलब्धिमात्रेणाभावव्यवहारः स्यात् स्वभावासिद्धेः। कार्यानुपलब्धिरिति।
25 ननु च नावश्यं कारणानि कार्यवन्ति भवन्तीति वह्निश्च स्याद् धूमश्च न भवेदिति तन्नेत्याह—निरपवादेति धूमजन्मन्यप्रतिहतसामर्थ्या इत्यर्थः।

तादृशश्च धूमानुपलम्भेनावश्यमभावसिद्धेः। व्यापकानुपलब्धिरिति। शिंशपा-

स्वभावविरुद्धोपलब्धिर्यथा नात्र शीतस्पर्शः पावकोपलब्धेरिति । स्वभाव-विरुद्धकार्योपलब्धिर्यथा नात्र शीतस्पर्शो धूमोपलब्धेरिति । विरुद्धव्याप्तोपलब्धि-र्यथा नाध्रुवभावी भूतस्यापि भावस्य विनाशो हेत्वन्तरापेक्षणादिति । कार्य-विरुद्धोपलब्धिर्यथा नात्र शीतकारणमप्रतिबद्धसामर्थ्यमस्ति ज्वलनोपलब्धेरिति । व्यापकविरुद्धोपलब्धिर्यथा नात्र तुहिनस्पर्शः कृशानुदर्शनादिति । कारणविरुद्धोप-लब्धिर्यथा नैतस्य रोमहर्षदन्तवीणादिविशेषाः सन्ति सन्निहितहुतवहाधिष्ठित-विशेषादिति । कारणविरुद्धकार्योपलब्धिर्यथा प्रवृत्तदन्तवीणादिविशेषपुरुषाधिष्ठित एष देशो न भवति धूमवत्त्वादिति । 5

सत्यमेकादशविधाऽनुपलब्धिरिहेष्यते ।
सा त्वसद्व्यवहारस्य हेतुर्नाभावसंविदः ।। 10

नन्वनुपलब्धेः स्वभावहेतावन्तर्भाव उक्तः । स्वभावहेतौ च साध्यसाधनयोर-व्यतिरेक इष्यते । असद्व्यवहारश्च ज्ञानाभिधानात्मकत्वात्तत एव पृथगिति कथं तद्विषयतां यायात् ? सत्यमेवम् । किन्तु नासद्व्यवहारस्तया साध्यतेऽपि तु तद्यो-ग्यता । योग्यता च न ततोऽर्थान्तरमिति न स्वभावहेतुत्वहानिः ।

ननु योग्यता भावात्मिकानुपलब्धिस्त्वभावस्वभावेति, कथमनर्थान्तरत्वम् । 15 नैतदेवम् । नह्युपलब्धिप्रतिषेधात्मिकामभावस्वभावामनुपलब्धिमनुपलब्धिविदो वदन्ति, किन्तु प्रतिषेधपर्युदस्तवस्त्वन्तरोपलब्धिमेवार्थाभावस्वभावामिति । अत

---

स्वरूप प्रतिबद्धो धर्मो तादृशश्च वृक्षत्वाख्यस्तस्य व्यापकस्तस्यानुपलम्भाच्छिंशपाया अभावः । स्वभावविरुद्धोपलब्धिरिति । प्रतिषेध्यस्य शीतस्पर्शस्य स्वभावेन स्वात्मना यो विरुद्धोऽग्निस्तस्योपलब्धेः शीतस्पर्शाभावः । स्वभावविरुद्धकार्योपलब्धिरिति । 20 निषेध्यस्य शीतस्पर्शस्य स्वभावेनात्मना यो विरुद्धोऽग्निस्तस्य कार्यं धूमस्तदुप-लम्भाच्छीतस्पर्शाभावः । विरुद्धव्याप्तोपलब्धिरिति । ध्रुवभावित्वस्य निषेध्यस्य विरुद्धं हेत्वन्तरापेक्षित्वम् तेन व्याप्तस्य नाशस्योपलम्भाद् ध्रुवभावित्वाभावः । ध्रुवभावित्वस्य हेत्वन्तरापेक्षित्वं विरुद्धम् । न हि लाक्षादिद्रव्यान्तरापेक्षो वर्णो ध्रुवो भवतीति । ध्रुवमवश्यं भवतीति ध्रुवभावी भूतस्यापि कृतकस्यापि यस्यावश्यं (अत्र टीकाग्रन्थो नष्टः) । 25

एवेदमपि न चोद्यम्, अनुपलब्धेरभावात्मकत्वादनुपलब्ध्यन्तरपरिच्छेद्यत्वादन-वस्थेति । यस्माद्वस्त्वन्तरोपलम्भात्मिकाऽनुपलब्धिः स्वसंवेद्यैवेति ।

नन्वनुपलब्धेरसद्व्यवहारसिद्धावदृष्टस्यापि तथात्वं सिध्येद् । न । दृश्यत्व-विशेषणोपादानादुपलब्धिलक्षणप्राप्तस्यानुपलब्धेरसद्व्यवहारो, न यस्य कस्य-
5 चिदिति । तत्र

घटादेः पूर्वदृष्टस्य दृश्यत्वपरिनिश्चयात् ।
असत्त्वव्यवहारो हि सिध्यत्यनुपलब्धितः ॥
एकान्तानुपलब्धेषु विहायःकुसुमादिषु ।
पिशाचादेस्तु दृश्यत्वयोग्यतानवधारणात् ॥
10 न शक्योऽनुपलम्भेन कर्तुं नास्तित्वनिश्चयः ।
तत्रापि त्वपिशाचोऽयं चैत्र इत्येवमादिषु ॥
तादात्म्यप्रतिषेधे च दृश्यत्वं नोपयुज्यते ।
पिशाचेतररूपो हि चैत्रः प्रत्यक्षगोचरः ॥

---

**अनुपलब्धेरभावात्मकत्वादिति** । यथा घटाभावोऽभावत्वादनुपलब्ध्या परिच्छि-
15 द्यते तथा अनुपलब्धिरप्यभावत्वादेवानुपलब्ध्यन्तरेण परिच्छेद्येति ।

**उपलब्धिलक्षणप्राप्तस्येति** । उपलब्धेर्लक्षणं जनिका सामग्री, तां प्राप्तो जनकत्वेन तदन्तःप्रविष्ट उपलब्धिलक्षणप्राप्तो दृश्य इत्यर्थः । तत्कालमदृश्यत्वेऽपि एकज्ञानसंसर्गिणो भूतलादेर्दृश्यत्वाद् योग्यतया च दृश्यत्वसमारोपः । यदि दृश्यस्यानुपलब्ध्या अभाव-निश्चयः, नादृश्यस्य, तदा नभःकुसुमादेरदृश्यत्वादनुपलब्ध्या अभावनिश्चयो न
20 स्यादित्याशङ्क्याह **एकान्तानुपलब्धेष्विति** । तेष्वपि दृश्यत्वयोग्यताया योगाद् युज्यमानत्वादितरकुसुमवदित्यर्थः । **पिशाचादेस्तु दृश्यत्वयोग्यतानवधारणादिति** । तदनवधारणन्तु स्वभावविप्रकृष्टत्वेन पिशाचादीनाम् । त्रिविधा चादृश्यता भवति स्वभावविप्रकर्षेण यथा पिशाचादीनाम्, देशविप्रकर्षेण यथा मेर्वादीनाम्, कालविप्रकर्षेण यथा रामादीनाम् । अतो नास्तित्वनिश्चयस्तत्र कर्तुमशक्यः, सन्देह एव तत्रेत्यर्थः । यदि
25 तर्हि अदृश्यस्यानुपलब्ध्या अभावनिश्चयो न सिद्ध्यति, तदा 'अपिशाचोऽयं चैत्रः' इत्यस्यामपि प्रतीतावभावनिश्चयो न स्यात्, अदृश्यत्वात् पिशाचस्य, ततश्च पिशाचा-पिशाचरूपतया चेत्रं प्रति सन्देह एव स्यादित्याशङ्क्याह **तत्रापि त्वपिशाचोऽयमिति** ।

ताद्रूप्यनिश्चये तस्य किं फलं तद्विशेषणम् ।
इत्यसद्व्यवहारस्य सिद्धेरनुपलब्धितः ॥
न भाववदभावाख्यं प्रमेयमवकल्पते ।

## अभावस्य वस्तुत्वसाधनम्

अत्राभिधीयते, इदं तावत्सकलप्राणिसाक्षिकं संवेदनद्वयमुपजायमानं दृष्टम्, इह घटोऽस्ति, इह नास्तीति । तत्र विकल्पमात्रसंवेदनमनालम्बनमात्मांशावलम्बनं वेत्यादि यदभिलप्यते, तन्नास्तिताज्ञान इवास्तित्वज्ञानेऽपि समानम् अतो द्वयोरपि प्रामाण्यं भवतु द्वयोरपि वा मा भूत् । यत्त्वस्तीति ज्ञानं प्रमाणमितरदप्रमाणमिति कथ्यते तदिच्छामात्रम् । अस्तीति ज्ञानसमानयोगक्षेमत्वे च नास्तीति ज्ञानस्य विषयश्चिन्तनीयः ।

ननु घटविविक्तभूतलोपलम्भभावे घटानुपलम्भ इत्युक्तं तदयुक्तम् । केयं घटविविक्तता ? सा भूप्रदेशादभिन्ना, भिन्ना वा । अभेदे भूप्रदेशाविशेषाद् घटसन्निधानेऽपि घटो नास्तीति प्रतिपत्तिर्जायेत । भेदे तु नाम्नि विवादः स्यात् ।

---

अयमाशयः—यत्र पदार्थस्य स्वरूपेणासत्त्वं साध्यते तत्रानुपलब्धिमात्रस्य व्यभिचारात् सविशेषणया तया साध्यम्, अन्यस्य मानान्तरस्य तथाविधासत्त्वसिद्धावव्यापारात् । यत्र तु पररूपेणासत्त्वं साध्यते तत्र यदेव प्रत्यक्षं प्रमाणं परस्य रूपं निश्चिनोति चैत्रादेस्तदेव पिशाचादिरूपतामपि तस्य व्यवच्छिनत्ति । यो हि पदार्थो येन रूपेणोपलभ्यते तदेव तस्य रूपम्, चैत्रश्च स्वेन रूपेणोपलभ्यमानः कथं पिशाचः स्यात् । अतः प्रत्यक्षमहिमत एव तस्यापिशाचरूपत्वसिद्धेः किं दृश्यत्वविशेषणापेक्षया । यत्र तु संयोगित्वेन विवक्षा 'चैत्राधिष्ठिते प्रदेशे पिशाचो नास्ति' इत्यादौ तत्र संदेह एव युक्तः, परमाण्वादिवददृश्यपदार्थसम्बन्धेऽपि प्रदेशप्रतिपत्तेरविशेषदर्शनात्, न त्विह तथा । यो ह्यतदात्मा प्रत्यक्षेणोपलभ्यते कथमसौ तदात्मा स्यात् । यथा नीलवस्तु पीतं न भवतीत्यत्र नानुपलब्धेर्व्यापारः, प्रत्यक्षत एव तत्सिद्धेः । पीतसम्बन्धाभावे तु तस्य निश्चयेऽनुपलब्धेरेव व्यापारः, तथा प्रकृतेऽपीति । **पिशाचेतररूप** इति । पिशाचादितरद्रूपं स्वभावो यस्य । **किंफलं तद्विशेषणम्** । तदनुपलब्धेर्विशेषणं दृश्यत्वं किंफलं न क्वचिदुपयुज्यत इत्यर्थः ।

**अनालम्बनम्** । असदाकारनिष्ठत्वाद् यथाह धर्मोत्तरः । **आत्मालम्बनम्** । स्वाकारालम्बनं यथाह धर्मकीर्तिः ।

भेदाभेदे न चिन्त्या च घटादपि विविक्तता ।
अभेदे घट एव स्याद्भेदे चाभाव एव सा ।।

तदिह घटो नास्तीति घटविविक्तभूतलालम्बनतायामस्याः स्वसंविद इहेति तावदस्मिन्संविदंशे देश आलम्बनमित्यविवाद एव। इह घटोऽस्तीति भावप्रतीति समयेऽपि तत्र तदवभासाभ्युपगमात् । घटो नास्तीत्यत्र तु यदवभासते तन्न भूतल-
5 मात्रमेव, भावप्रतीतिसमये तदतिरिक्तप्रतिभासस्यावश्यम्भावित्वात् । तदतिरिक्तन्तु प्रतिभासमानं घटविविक्ततेति वा कथ्यताम्, घटाभाव इति वा, नात्र वस्तुनि विशेषः ।

ननु घटो नास्तीति विकल्पमात्रमेतत् । न । दर्शनानन्तरप्रवृत्तत्वेन विधि-
10 विकल्पतुल्यत्वात् ।

यथानुभवमुत्पत्तुमर्हन्ति किल कल्पनाः ।
प्रतिषेधविकल्पस्तु न विध्यनुभवोचितः ।।

ननु नैव विकल्पानां वयं प्रामाण्यवादिनः ।
कामं विधिविकल्पानामपि मा भूत्प्रमाणता ।।

15 प्रामाण्यं दर्शनानाञ्चेत्स्वविकल्पानुसारतः ।
इहापि तेषामेवास्ति तद्विकल्पानुसारतः ।।

वस्तुप्राप्त्या विधिविकल्पानां प्रामाण्यव्यवहार इति चेद्, इहापि तत्प्राप्त्यैव निषेधविकल्पानामस्तु प्रामाण्यव्यवहारः । किमत्र वस्तु प्राप्यत इति चेत्त्रापि किं प्राप्यते ? नीलमिति चेत्, सेयमभावस्यापि प्राप्तिर्भवत्येव । नीलं हि प्राप्य-
20 माणं तदभावाविनाभूतपीतादिव्यवच्छिन्नरूपं प्राप्यते। सा चेयं तथाभूतनील-

---

भेदाभेदे न चिन्त्या चेति । यथा प्रदेशाद् घटविविक्तता किं भिन्ना आहोस्विद् अभिन्ना तद्वद् घटादपि सा किं भिन्ना विविक्तता आहोस्विद् अभिन्नेति ।

कामं विधिविकल्पानामपि मा भूत् प्रमाणतेति । दर्शनानां प्रामाण्यदायिनो विकल्पा न स्वतः प्रमाणमिति बौद्धाभिप्रायः । तत्राप्याह नैयायिकः प्रामाण्यं दर्शनानां
25 चेदिति ।

प्राप्तिर्भवन्तीतराभावप्राप्तिरपि भवत्यन्यथा हि नीलप्राप्तिरेव न स्यादिति। एतच्च लाक्षणिकं विरोधमाचक्षाणैर्भवद्भिरेवोपगतम्।

सुखदुःखसमुत्पत्तिरभावे शत्रुमित्रयोः।
कण्टकाभावमालक्ष्य पदं पथि निधीयते॥
प्रागुत्पत्तेर्घटाभावं बुद्ध्वा तत्कारणादरः। 5
व्याध्यभावपरिच्छेदाद्भैषज्यविनिवर्त्तनम्॥
इहाभावप्रतिष्ठानव्यवहारपरम्पराम्।
पश्यन्नभावं को नाम निह्णुवीत सचेतनः॥

ननु नाजनकमालम्बनं भवति, ज्ञानस्याभावस्तु सकलोपाख्याविनिर्मुक्तस्वरूप इति न ज्ञानजननपटुः। अतः कथं तदालम्बनम्? उच्यते सौगतानां तावन्न 10 किञ्चिज्जनकं वस्तु प्रतिभासते, द्वित्रिक्षणावस्थितिप्रसङ्गेन क्षणभङ्गव्रतविलोपप्रसङ्गात्। उत्पद्यते चार्थज्ञानञ्च जनयति, जातेन तेन गृह्यते चेत्यासां क्रियाणामेककालत्वाभावात्। तस्मादकारक एव भावः प्रतिभासते, आकारार्पणपक्षञ्च प्रतिक्षेप्स्यामः। एवं भाववदभावोऽप्यजनकः प्रतिभासताम्। अस्माभिस्तु भाववदभावोऽपि ज्ञानजननसमर्थ इष्यते। न हि निःशेषसामर्थ्यरहितत्वमभावलक्षणम्। अपितु नास्तीति ज्ञानगम्यत्वम्। सत्प्रत्ययगम्यो हि भाव इष्यते, असत्प्रत्ययगम्यस्त्वभाव इति। तदिदमुक्तं 'सदसती तत्त्वम्' इति। 15

ननु भाववदेष ज्ञानजनकः सन्नभावो न भावाद्विशिष्यते। अहो निपुणदर्शी देवानाम्प्रियः। प्रतीतिभेदश्चास्ति। तत्र प्रतीयमानौ भावाभावौ न भिद्येते इति कथमेवं भवेद्? अपि रे मूढ़! ज्ञानजनकत्वाविशेषेऽपि रूपरसौ कथं भिद्येते, 20 प्रतीतिभेदादिति चेद्? भावाभावावपि जनकत्वधर्मसामान्येऽपि प्रतीतिभेदादेव भिद्येयाताम्। न हि प्रतिभास्यभेदमन्तरेण प्रतिभासभेदो भवतीति भवताप्यभ्युपगतम्।

---

लाक्षणिकं विरोधमिति। लक्ष्यते व्यावृत्तत्वेन वस्तु वस्त्वन्तराद् येन तल्लक्षणमसाधारणं पदार्थानां स्वरूपम्, तत्प्रयोजनं यस्यासौ लाक्षणिकः परस्परपरिहारस्थितता- 25 लक्षणो विरोधः। तद्वशाद्धि पदार्थानां परस्परासंकीर्णस्वरूपलाभः।

'सदसती तत्त्वम्' इति सच्चासच्चेत्यविपरीतरूपेण गृह्यमाणं तत्त्वमित्यर्थः।

प्रामाण्यं वस्तुविषयं द्वयोरर्थभिदां जगौ ।
प्रतिभासस्य भिन्नत्वादेकस्मिंस्तदयोगतः ।। इति

तस्मादस्तीति प्रतीतेरेव भावः। नास्तीति प्रतीतेरभावो भूमिरित्यभ्युपगम्यताम्। अथ वा विज्ञानवाद एव सुस्पष्टमास्थीयताम्। अन्तरावस्थानन्तु न 5 साम्प्रतम्। अर्थक्रियासामर्थ्यमपि तस्य दर्शितमेव।

स्वज्ञानाख्यक्रियाशक्तिरमुष्य दुरपह्नवा ।
अर्थक्रियान्यजन्या तु न भावेनापि जन्यते ।।
एवञ्च सति यः पूर्वं शक्तिवादोऽत्र वर्णितः ।
स प्रत्यक्षविरुद्धत्वात् कण्ठशोषाय केवलम् ।।

10 तथा सम्बन्धाभावादिति यदुक्तं तत्र देशेन सह तावदभावस्य विशेषणविशेष्यभावः सम्बन्धः। स तु सम्बन्धान्तरमूल इति भावेऽयं नियमो, नाभावे। न च भावेऽप्येष नियमो। न ह्येवं भवति यत्सम्बद्धं तद्विशेषणमेव। पादपीडिते, शिरसि वा धार्यमाणे दण्डे, दण्डीति प्रत्ययानुत्पादात्। नाप्येवं यद्विशेषणं तत्सम्बद्धमेवेति, समवायस्य सत्यपि विशेषणत्वे सम्बन्धान्तराभावात्। तस्मात्स-15 म्बन्धान्तररहितोऽपि प्रतिबन्ध इव, वाच्यवाचकभाव इव, विशेषणविशेष्यभावः स्वतन्त्र एव सम्बन्धस्तथाप्रतीतेरवधार्यते । उभयोरुभयात्मकत्वात् कदाचित् कस्यचित्तथा प्रतिभासात् पुरुषेच्छानुवर्त्तनेन व्यत्ययप्रत्ययत्वेऽपि न दोषः। यस्माद्विशेषणविशेष्यभाव एव सम्बन्धो देशे भूतलादिना सहाभावस्य सम्बन्धः। एवं कालेनापि सह स एव वेदितव्यः। क्रियया कर्तृस्थया वा गमनादिकया कर्मस्थया

---

20 प्रामाण्यं वस्तुविषयमिति। द्वयोरपि प्रत्यक्षानुमानयोर्वस्तुप्राप्तिपर्यन्तप्रमाणव्यापारत्वाद् वस्तुविषयत्वम्। ग्राह्यभेदस्तर्हि कथमुक्तम्, आचार्यदिग्नागेनेत्याह अर्थभिदां ग्राह्यभेदं जगौ कथितवानाचार्यो दिङ्नागः। कथम्? प्रतिभासस्य भिन्नत्वादिति। प्रतिभासत इति प्रतिभास आकारस्तस्यार्थक्रियाकारित्वेनार्थक्रियाकारित्वाभावेन च प्रत्यक्षग्राह्यस्यानुमानग्राह्यस्य च स्फुटास्फुटत्वे भिन्नत्वात्। एकस्मिन् पुनर्ग्राह्ये तयोः 25 स्फुटास्फुटयोराकारयोरयोगात् असम्भवादिति। यद्यपि वस्तुनिष्ठत्वमुभयोस्तथापि ग्राह्याकारभेदाद् विषयभेदः; एकस्य हि स्वलक्षणं ग्राह्यमपरस्य सामान्यम्।

प्रतिबन्ध इवेति। प्रतिबन्धो गम्यस्य गमकायत्तता। क्रियया कर्तृस्थयेति। 'देवदत्तेन गम्योऽयं ग्रामः' इत्यादौ। 'कुशूलभेत्ताऽयं चैत्रः' इत्यादौ तु कर्मस्थया।

वा भेदनादिकया सह संयोगाद्यभावेऽपि विशेषणविशेष्यभाव एव सम्बन्धः। तद्वदभावस्यापि भविष्यतीति। प्रतियोगिना तु सह विरोधोऽस्य सम्बन्धः। अयमेव च विरोधार्थो यदेकत्रोभयोरसमावेशः। अतश्चैकविनाशे न सर्वविनाशो, घटाभावस्य घटैकप्रतियोगित्वात्।

यत्तु भवनधर्मा अभवनधर्मा वेति विकल्पितम्, तत्राभवनधर्मैवाभावोऽभ्युपगम्यते। भवनधर्मत्वेऽपि चाभावो न भावान्न भिद्यते, प्रतिभासभेदस्य रूपरसादिषूपदर्शित्वात्। भवनधर्मत्वञ्चास्य हेत्वन्वयव्यतिरेकित्वाद्भवति। घटो हि मृत्पिण्डदण्डादीनिव जन्मनि, विनाशेऽपि मुद्गरादीननुवर्त्तते हेतून्। विजातीयसन्ततिजननपक्षेऽपि सदृशसन्तानजनिकायाः शक्तेरभावः क्रियत एव, अन्यथा मुद्गराद्युपनिपातेऽपि विजातीयेव सजातीयसन्ततिरभिजायेत। सजातीयविजातीयोभयसन्ततिजननशक्तियुक्तो घट इति चेद्? मुद्गरादियोगात् पूर्वमपि कपालसन्ततिजननम्, तद्योगेऽपि वा सति घटसन्ततिजननम्, अनियमेन दृश्येतेति विजातीयक्षणोत्पादनस्वभावे च घटे मुद्गरादेर्वैयर्थ्यमेव स्यात्।

तदुत्पादस्वभावे हि न किञ्चिन्मुद्गरादिना।
अतदुत्पादकत्वेऽपि न किञ्चिन्मुद्गरादिना॥

मुद्गरोपनिपाताच्च यद्युत्पन्नं क्षणान्तरम्।
घटक्षणस्य किं वृत्तं येन नाभाति पूर्ववत्॥

नन्वस्याभवनं वृत्तं स एवार्थोऽयमुच्यते।
घञा किमपराद्धं वा किं वाप्युपकृतं ल्युटा॥

ननूक्तं 'न तस्य किञ्चिद्भवति न भवत्येव केवलमि'ति। तदयुक्तम्। यदसौ न भवति स एवास्याभावः।

ननु स न, न तु तस्याभावः। मैवम्। 'स नेति' शब्दयोर्ज्ञानयोश्च विषयभेदात्। स इति ज्ञानस्य स्मर्यमाणो घटादिर्विषयः। 'ने'ति तु ज्ञानस्याभावो भूमिरित्यलमलीकविदग्धविरचितविफलवक्रवचनविमर्देन।

तस्मादित्थमभावस्य प्रमेयत्वोपपादनात्।
न ह्यसद्व्यवहाराय कल्पन्तेऽनुपलब्धयः॥

न स्वभावानुमाने च तदन्तर्भावसम्भवः ।
मेयं पृथगभावाख्यममूषामुपपादितम् ॥
कारणानुपलब्ध्यादेर्बाढमस्त्वनुमानता ।
स्वभावानुपलब्धिस्तु प्रत्यक्षमिति साधितम् ॥

5 या चेयमेकादशानुपलब्धिवधूशुद्धान्तमध्ये विरुद्धव्याप्तोपलब्धिरुदाऽहृता नाध्रुवभावी भूतस्यापि भावस्य विनाशो हेत्वन्तरानपेक्षणादिति, सेयमिदानीमेव साध्वी दूषिता । विस्तरतस्तु क्षणभङ्गभङ्गे दूषयिष्यते ।

**अभावानभ्युपगन्तृप्रभाकरमतनिरासः**

यैस्तु मीमांसकैस्सद्भिरभावो नाभ्युपेयते ।
10 प्रमादेनामुना तेषां वयमप्यद्य लज्जिताः ॥

घटो हि न प्रतीयते, न तु तदभावः प्रतीयते, इत्येवं वदद्भिरेभिर्दर्शनादर्शने एव पदार्थानां सदसत्त्व इति कथितं स्यात् । एतच्चायुक्तम् । दर्शनादर्शनाभ्यां हि सदसत्त्वे निश्चीयेते । न तु दर्शनादर्शन एव सदसत्त्वे

---

यैस्तु मीमांसकैः सद्भिरिति । प्राभाकरान् निर्दिशति । ते हि ज्ञानञ्च सालम्बन-
15 मिच्छन्ति, शब्दञ्च बाह्यार्थविषयम् । अथ च नास्तीति प्रत्ययं शब्दञ्च निर्विषयमाहुः ।

घटो हि न प्रतीयत इति । घटस्यादर्शनमात्रमेव तत् केवलम्, न पुनर्घटाभावस्यात्र प्रतिभास इत्यर्थः । अदर्शनादेव चास्तित्वासिद्धिः । यैव चास्तित्वासिद्धिः सैव नास्तित्वसिद्धिः । कः पुनरस्य बौद्धपक्षाद् प्राभाकरस्य पक्षस्य विशेषः ? अयं विशेषः बौद्धपक्षेऽनुपलब्ध्या अभावव्यवहारः साध्यः, स च सविकल्पकज्ञानस्वभावः,
20 विकल्पप्रतिभासि च न बाह्यमिति तेषां मतम् । प्राभाकराणान्तु विकल्पस्य बाह्यवस्तुविषयत्वात् तथाविधे व्यवहारेऽनुपलब्ध्याभ्युपगम्यमाने बलाद् अभावालम्बनत्वमायातीति तेषां व्यवहारो भूतलघटयोर्वैविक्त्यस्थापनामयः, पुरुषेच्छाकृतः, केवलभूतलदर्शने घटस्मरणे च सति पश्चाद् 'भूतलमेव प्रत्यक्षेण गृहीतं न घटः' इत्येवंरूपो यो भवति, स एव विवक्षितः, न ज्ञानस्वभाव इति । दर्शनादर्शने एवेति । 'घटो हि न प्रतीयते, न तु तदभावः प्रतीयते' इत्येवं वदद्भिरेवमभ्युपगतं भवति 'घटानुपलम्भव्यति-
25 रेकेणान्यद् घटस्यासत्त्वं नास्ति, स एवासत्त्वम्' इति ।

न चाप्रतीतिमात्रेण तदभावनिबन्धनाः ।
व्यवहाराः प्रकल्पन्ते मृदन्तरिततोयवत् ॥
खपुष्पस्य पिशाचस्य मृदन्तरितवारिणः ।
न खल्वनुपलभ्यत्वे विशेषः प्रतिभाति नः ॥
सर्वदानुपलम्भोऽपि कुर्वन्नास्तित्वनिश्चयम् । 5
विशेष्यते मृदन्तःस्थसलिलानुपलब्धितः ॥
आगमाद् युक्तितश्चापि सत्त्वसम्भावनां गतः ।
सर्वदानुपलब्धोऽपि न पिशाचः खपुष्पवत् ॥

अतश्च यदुच्यते अनुपलब्धे पुनरनुपलब्धिरेवानुपलब्धिरिति तद्धूणिति-

---

**खपुष्पस्य पिशाचस्येति** । खपुष्पस्य दृश्यत्वाद् अनुपलब्ध्या अभावनिश्चयः, 10
पिशाचस्य मृदन्तरितवारिणश्च दृश्यत्वाभावान्नास्त्यभावनिश्चय इति व्यवस्था । सा
अनुपलब्धिमात्रान्नास्तिताव्यवहारिणां भवतां मते विघटते । मृदन्तरितवारिणः सर्व-
दानुपलम्भाभावात् कथमविशेष इत्याह—**सर्वदानुपलम्भोऽपीति** । एतदुक्तं भवति ;
किल भवतैवमुच्यते सर्वदा यो नोपलभ्यते तस्याप्रतीतिमात्रेण नास्तित्वनिश्चयो
भवति, मृदन्तरितवारिणश्च कदाचिदुपलम्भेन सर्वदानुपलम्भासिद्धेः । तस्याप्रतीतिमात्रा- 15
न्नास्तित्वनिश्चयः कथं सिध्येदित्यतः सर्वदानुपलम्भस्तस्य नास्तीति तस्य न नास्तिता-
निश्चयः' इति तदयुक्तम्, अनेन क्रमेण पिशाचस्यापि नास्तितानिश्चयप्रसक्तेरिति ।
भवत्विति चेत्, तन्नेत्याह **आगमाद् युक्तितश्चापीति** । आगमादवगतो नियत-
शरीरावच्छिन्नो यः पिशाचस्तेनावश्यमदृश्येन नियते क्वचिद् देशे भाव्यम् । अयमपि च
विवादास्पदं देशो नियतदेश एव, अत्रापि पक्षे तस्यावस्थितिः सम्भाव्यत इति 20
सम्भावनायुक्तिः ।

**अनुपलब्धे पुनरनुपलब्धिरेवेति** एवमस्याष्टीकाया अवतरणम्, सतोऽपि घटा-
देरनुपलब्धिदर्शनात् कथमीश्वरादेरनुपलब्धिमात्रान्नास्तितानिश्चयः, अतः सन्देह एव
युक्तः । न च 'इह घटो नास्ति' इतिवदुपलब्धिलक्षणप्राप्तत्वं तस्य, येन नास्तितानिश्चयः
स्यात्, तस्मान्नास्तितासन्देह एव तस्य प्राप्त इत्याशङ्क्याह 'उपलब्धिविषये ह्यनु- 25
पलब्धिः कारणान्तरमपेक्षते, अनुपलब्धे पुनरनुपलब्धिरेवानुपलब्धिः' इति । अस्यार्थः ।

मात्रम् । खपुष्पादेस्तु सविशेषणयानुपलब्ध्या अभाव एव निश्चीयते, न तस्यानुपलब्धिमात्रम् ।

अनिष्यमाणे चाभावे भावानां प्रतियोगिनि ।
नित्यतैषां प्रसज्येत न ह्येते क्षणिकास्तव ।।
मुद्गरादेश्च किं कार्यं कपालपटलीति चेत् ।
घटस्तर्ह्यविनष्टत्वात् स्वकार्यं न करोति किम् ।।

अदर्शनादिति चेत्,

तदानीमेव दृष्टस्य स्थिरस्यामुष्य किं कृतम् ।
सर्वेन्द्रियादिसामग्रीसन्निधानेऽप्यदर्शनम् ।।

10 तस्मात्तदभावकृतमेव तदानीं तस्यादर्शनम् ।

स्वप्रकाशा च नास्तीति संवित्तिर्भवतां मते ।
न निरालम्बना चेयमस्तीति प्रतिपत्तिवत् ।।
विकल्पविषयाः शब्दा यथा शौद्धोदनेर्गृहे ।
गीयन्ते भवता नैवमिति नञ्वाच्यमुच्यताम् ।।
15 प्रसिद्धिश्च परित्यक्ता न चाभावः पराकृतः ।
उपेक्षितश्च भाष्यार्थ इत्यहो नयनैपुणम् ।।
अलञ्च बहुनोक्तेन विमर्दोऽत्र न शोभते ।
महात्मनां प्रमादोऽपि मर्षणीयो हि मादृशैः ।।

तस्मान्नास्तीति प्रत्ययगम्योऽभाव इति सिद्धम् ।

---

20 सतोऽपि घटस्यानुपलब्धिदर्शनादुपलब्धघटादिविषयानुपलब्धिर्नास्तितानिश्चये कारणान्तरमुपलब्धिलक्षणप्राप्तत्वमपेक्षते, अनुपलब्धे पुनरीश्वरादौ यानुपलब्धिः सैवानुपलब्धिः, सैव नास्तिताव्यवहारसाधनी, न तत्र दृश्यत्वादेः कारणान्तरस्यापेक्षोपयुज्यत इति यावत् । ननु यदि सर्वदानुपलम्भादपि न नास्तितानिश्चयः पिशाचादेस्तर्हि खपुष्पादेरपि न प्राप्नोतीत्याशङ्क्याह खपुष्पादेस्त्विति । नानुपलब्धिमात्रं केवलं तत्र व्याप्रियत 25 इत्यर्थः ।

उपेक्षितश्च भाष्यार्थ इति । 'अभावोऽपि प्रमाणाभावो नास्तीत्यस्यासन्निकृष्टस्यार्थस्य' इति भाष्यस्याभावात्मकप्रमाणप्रमेयप्रतिपादकत्वात् ।

## वस्तुत्वेन सिद्धस्याभावस्य भेदाः

स च द्विविधः । प्रागभावः, प्रध्वंसाभावश्चेति । चतुर्विध इत्यन्ये । इतरेतराभावः, अत्यन्ताभावश्च तौ च द्वाविति । षट्प्रकार इत्यन्ये । अपेक्षाभावः सामर्थ्याभावः, ते च चत्वार इति । तत्र च

प्रागात्मलाभान्नास्तित्वं प्रागभावोऽभिधीयते । 5
उत्पन्नस्यात्महानन्तु प्रध्वंस इति कथ्यते ॥

न प्रागभावादन्ये तु भिद्यन्ते परमार्थतः ।
स हि वस्त्वन्तरोपाधिरन्योन्याभाव उच्यते ॥

स एवावधिशून्यत्वादत्यन्ताभावतां गतः ।
अपेक्षाभावता तस्य देशोपाधिनिबन्धना ॥ 10

सामर्थ्यं पूर्वसिद्धञ्चेत् प्रध्वंसे तदभावधीः ।
नो चेत्तर्हि विशेषोऽस्य दुर्लभः प्रागभावतः ॥

उत्पन्नस्य विनाशो वा तदनुत्पाद एव वा ।
अभावस्तत्त्वतोऽन्ये तु भेदास्त्वौपाधिका मताः ॥

तस्मादभावाख्यमिदं प्रमेयं तस्येन्द्रियेण ग्रहणञ्च सिद्धम् । 15
अतः प्रमाणेषु जगाद युक्तं चतुष्ट्वमेतन्मुनिरक्षपादः ॥

## सम्भवैतिह्ययोः प्रमाणान्तरत्वखण्डनम्

ननु नाद्यापि चतुष्ट्वमेवमवतिष्ठते सम्भवैतिह्य इति द्वयोः प्रमाणान्तरभावात् । सम्भवो नाम समुदायेन समुदायिनोऽवगमः । सम्भवति खार्यां द्रोणः, सम्भवति सहस्रे शतमिति । अनिर्दिष्टप्रवक्तृकं प्रवादपरम्परा चैतिह्यम् । इह 20 वटे यक्षः प्रतिवसतीति । न चायमागमः, आप्तस्योपदेष्टुरनिश्चयादिति । तदनुपपन्नम् ।

---

स हि वस्त्वन्तरोपाधिरिति । यदा स्वकारण एवानुत्पत्तिस्तदा प्रागभावः, यदा तु स्वकारणादन्यत्रानुत्पत्तिस्तदेतरेतराभावः, 'इह देशे काले वा इदं नास्ति' इत्यपेक्षाभावः । स्वकारणाद्धि वस्त्वन्तरमुपाधिरवच्छेदकमितरस्माद् यस्य । 25

भिन्नः सम्भव एष न ह्यनुमितेराख्यायि खार्यां खलु
द्रोणः सम्भवतीति सेयमविनाभावान्मतिर्लैङ्गिकी ।
ऐतिह्यन्तु न सत्यमत्र हि वटे यक्षोऽस्ति वा नेति वा
को जानाति कदा च केन कलितं यक्षस्य कीदृग्वपुः ॥

5 सत्यम् । अपि चागमात्पृथङ्नैतिह्यमुपदेशरूपत्वात् । आप्तग्रहणं सूत्रे न लक्षणायेति वक्ष्यामः ।

## प्रमाणसंख्याविषये चार्वाकमतसमालोचनम्

चार्वाकधूर्त्तस्तु 'अथातस्तत्त्वं व्याख्यास्यामः' इति प्रतिज्ञाय प्रमाण-प्रमेयसंख्यालक्षणनियमाशक्यकरणीयत्वमेव तत्त्वं व्याख्यातवान् । प्रमाण-
10 संख्यानियमाशक्यकरणीयत्वसिद्धये च प्रमितिभेदान् प्रत्यक्षादिप्रमाणानुपजन्यान् ईदृशानुपादर्शयत् ।

वक्राङ्गुलिः प्रविरलाङ्गुलिरेष पाणि-
रित्यस्ति धीस्तमसि मीलितचक्षुषो वा ।

---

आख्यायि 'खार्यां खलु द्रोणः सम्भवति' इति आख्यायि आख्यातं केनचित् ।
15 अत आगमात् सम्बन्धग्रहणमत्र ।

आप्तग्रहणं सूत्र इति । तत्र ह्युपदेश इत्युक्ते लक्षणमविनिश्चितं स्यात् । न ह्युप-देशमात्रस्याव्यभिचारादिविशिष्टप्रमाजनकत्वं सम्भवतीति कथं तस्यैवंरूपता निश्चीये-तेत्यविनिश्चितत्वमायातं लक्षणस्य, आप्तग्रहणन्तु तद्विनिश्चयाय कृतम्, अस्त्याप्तसम्बध्यु-पदेश एवंरूप इत्येवमर्थम्, न लक्षणायेति । चार्वाकधूर्तस्त्विवति । उद्भटः । स हि लोका-
20 यतसूत्रेषु विवृतिं कुर्वन् 'अथातस्तत्त्वं व्याख्यास्यामः' 'पृथिव्यापस्तेजोवायुरिति' सूत्रद्वयं यथाश्रुतार्थत्यागेनान्यथा वर्णयामास । प्रथमसूत्रे तत्त्वपदेन प्रमाणप्रमेयसङ्ख्यालक्षण-नियमाशक्यकरणीयतामाह, द्वितीयसूत्रमपि प्रमेयानियमप्रतिपादकं तेन व्याख्यातम् । तत्र हि 'पृथिव्यापस्तेजोवायुरिति' य 'इति'शब्दः स एवंप्रायप्रमेयान्तरोपलक्षणत्वेन तस्याभिमतः ।

नेयं त्वगिन्द्रियकृता न हि तत्करस्थं
तत्रैव हि प्रमितिमिन्द्रियमादधाति ॥
दूरात्करोति निशि दीपशिखा च दृष्टा
पर्यन्तदेशविसृतासु मतिं प्रभासु ।
धत्ते धियं पवनकम्पितपुण्डरीक-
षण्डोऽनुवातभुवि दूरगतेऽपि गन्धे ॥
स एवंप्रायसंवित्तिसमुत्प्रेक्षणपण्डितः ।
रूपं तपस्वी जानाति न प्रत्यक्षानुमानयोः ॥
प्रत्यक्षाद् विरलकराङ्गुलिप्रतीति-
व्यापित्वादकुशलमिन्द्रियं न तस्याम् । 10
आनाभेस्तुहिनजलं जनैः पिबद्भि-
स्तत्स्पर्शः शिशिरतरोऽनुभूयतेऽन्तः ॥
संयोगबुद्धिश्च यथा तदुत्था
तथैव तज्जा तदभावबुद्धिः । 15
क्रियाविशेषग्रहणाच्च तस्मा-
दाकुञ्चितत्वावगमोऽङ्गुलीनाम् ॥

---

न हि तत्करस्थं तत्रैवेति । न हि चक्षुः स्वगोलक एव प्रतीतिं जनयेदित्यभिप्रायः । व्यापित्वादकुशलमिन्द्रियमिति । अस्यार्थः न हि त्वग्गतमेवेन्द्रियं तत्रैव त्वचि प्रतीतिमादधाति इति ब्रूमो येन चक्षुषि तथा अदर्शनादयुक्ततोच्येत, किन्त्वन्तर्गतं व्यापि यदिन्द्रियं तद् बहिस्त्वग्गतस्य वक्राङ्गुलित्वादेः क्रियाविशेषावगमं जनयद् ग्राहकम् । 20 नन्वन्तर्गतस्य त्वगिन्द्रियस्य ग्राहकत्वं क्व दृष्टमित्याह आनाभेस्तुहिनजलमिति । ननु द्रव्यान्तरेण संयोगोऽङ्गुलीनामन्तस्त्वगिन्द्रियेण गृह्यतां नाम अन्तःप्रविष्टेनेवोदकेन, विरलाङ्गुलित्वन्तु संयोगाभावः कथं गृह्येतेत्याह संयोगबुद्धिश्चेति । यथा संयुक्ता अङ्गुल्य इमा इति चाक्षुषी बुद्धिरेवं विरला अङ्गुल्य इति, चक्षुष एव तत्रापि व्यापारा- 25 विशेषात् । एवं सन्तमसे यथा अङ्गुलिसंयोगग्राहि त्वगिन्द्रियं तथा तत्संयोगाभावरूप-विरलताग्राह्यपि तदेव भविष्यतीत्यर्थः । आकुञ्चितत्वस्य तर्हि वक्रत्वापरपर्यायस्य कथं तेन ग्रहणमिति । तत्राप्याह क्रियाविशेषग्रहणादिति । तस्मात् त्वगिन्द्रियादेव क्रिया-

पद्मामोदविदूरदीपकविभाबुद्धिः पुनर्लैङ्गिकी
व्याप्तिज्ञानकृतेति का खलु मतिर्मानान्तरापेक्षिणी ।
संख्याया नियमः प्रमाणविषये नास्तीत्यतो नास्तिकै-
स्तत्सामर्थ्यविवेकशून्यमतिभिर्मिथ्यैव विस्फूर्जितम् ।।
5 ईयत्त्वमविलक्षणं नियतमस्ति मानेषु नः
प्रमेयमपि लक्षणादिनियमान्वितं वक्ष्यते ।
अशक्यकरणीयतां कथयतान्तु तत्त्वं सतां
समक्षममुनात्मनो जडमतित्वमुक्तं भवेत् ।।

इति श्रीजयन्तभट्टकृतायां न्यायमञ्जर्यां प्रथममाह्निकम् ।

---

10 विशेषस्याङ्गुलिगतस्याकुञ्चनाख्यस्य कर्मविशेषस्य विशेषणभूतस्यावगमः । आकुञ्चिता अङ्गुल्य इति विशेष्यज्ञानं यत् तत् तज्जमेव । यथा चक्षुषा चैत्रगतं चलनमुपलभ्य चलत्ययं चैत्र इति विशेष्यज्ञानं चाक्षुषमेवमिदमपीति सिद्धम् ।

भट्टश्रीशङ्करात्मजश्रीचक्रधरकृते
न्यायमञ्जरीग्रन्थिभङ्गे प्रथममाह्निकम् ।।

## द्वितीयमाह्निकम्

### तत्र प्रत्यक्षलक्षणम्

एवं प्रमाणानां सामान्यलक्षणे विभागे च निर्णीते सति अधुना विशेष-लक्षणवर्णनावसर इति सकलप्रमाणमूलभूतत्वेन पूर्वपठितत्वेन च ज्येष्ठत्वात् प्रथमं प्रत्यक्षस्य लक्षणं प्रतिपादयितुमाह 5

**इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ॥ ४ ॥**

प्रत्यक्षमिति लक्ष्यनिर्देशः । इतरल्लक्षणम् । समानासमानजातीयव्यवच्छेदो लक्षणार्थः । समानजातीयं प्रमाणतया अनुमानादि, विजातीयं प्रमेयादि, ततो व्यवच्छिन्नं प्रत्यक्षस्य लक्षणमनेन सूत्रेणोपपाद्यते । 10

### प्रत्यक्षलक्षणे सूत्रितार्थविषये पूर्वपक्षः

अत्र चोदयन्ति इन्द्रियार्थसन्निकर्षोत्पन्नत्वादिविशेषणैः स्वरूपं वा विशि-ष्यते, सामग्री वा, फलं वा । तत्र स्वरूपविशेषणपक्षे यद् एवंस्वरूपं ज्ञानं तत्प्रत्यक्ष-मिति तत्स्वरूपस्य विशेषितत्वात् फलविशेषणानुपादानाच्च लक्षणमव्याप्त्यति-व्याप्तिभ्यामुपहतं स्यात् । अव्याप्तिस्तावद् अतथाविधस्वरूपस्य बोधस्येन्द्रियादेश्च 15

---

घोरे जगज्जलनिधौ भवतो ययामी
मज्जन्ति न स्मृतिपथप्रतिपन्नयापि ।
सा काप्यचिन्त्यचरितस्य विचित्ररूपा
शक्तिर्जयत्युडुपखण्डभृतो भवस्य ॥
प्रज्ञोन्मेषपटु प्रपञ्चय वचो बौद्ध, त्वमप्युद्भटा- 20
श्चार्वाक स्वविकल्पजालजटिलाः स्वैरं गिरः स्फारय ।
रे मीमांसक साङ्ख्य जैन भवतां यत् सम्मतं ब्रूहि तत्
स्वातन्त्र्यान्मम रोचते न हि न हि त्र्यक्षादृतेऽन्यः प्रभुः ॥

ॐ नमः शिवाय । अतथाविधस्वरूपस्येति । संशयविपर्ययात्मकस्येत्यर्थः ।

निर्मलफलजनकतया लब्धप्रमाणभावस्यापि प्रामाण्यं नोक्तं भवेत् । अतिव्याप्तिश्च तथाविधस्वरूपस्यापि ज्ञानस्याकारस्य वा, संस्कारकारिणो वा, स्मृतिं जनयतो वा, संशयमादधानस्य वा, विपर्ययमुत्पादयतो वा प्रमाणत्वं प्राप्नोति, फलस्याविशेषितत्वात् । तद्विशेषणाभिधाने पुनरश्रुतसूत्रान्तराध्याहारप्रसक्तिः । अव्याप्तिश्च 5 तदवस्थैवेति न स्वरूपविशेषणपक्षः । नापि सामग्रीविशेषणपक्षः । तत्र हीन्द्रियार्थसन्निकर्षोत्पन्नमिति इन्द्रियार्थसन्निकर्षोपपन्नं सामग्र्यमिति व्याख्यातव्यम् । अव्यपदेश्यमव्यभिचारि व्यवसायात्मकं ज्ञानमिति च तज्जनकत्वादुपचारेण तथा साकल्यं वर्णनीयमिति क्लिष्टकल्पना । फलविशेषणपक्षोऽपि न सङ्गच्छते । ज्ञानप्रत्यक्षयोः फलकरणवाचिनोः सामानाधिकरण्यप्रसङ्गात् । प्रमाणलक्षण- 10 प्रस्तावात् प्रत्यक्षं फलमिति कथमैकाधिकरण्यम् । तस्मात् पक्षत्रयस्याप्ययुक्तियुक्तत्वात् पक्षान्तरस्याप्यसम्भवादयुक्तं सूत्रमिति ।

## तत्र सिद्धान्तपक्षः

अत्रोच्यते । स्वरूपसामग्रीविशेषणपक्षौ तावद्यथोक्तदोषोपहतत्वान्नाभ्युपगम्येते । फलविशेषणपक्षमेव संमन्यामहे । तत्र च यद् वैयधिकरण्यं चोदितम् तद्यतः 15 शब्दाध्याहारेण परिहरिष्यामः । यत एवं यद्विशेषणविशिष्टं ज्ञानाख्यं फलं भवति तत्प्रत्यक्षमिति सूत्रार्थः । इत्थञ्च न क्वचिदव्याप्तिरतिव्याप्तिर्वा । न काचित् क्लिष्टकल्पना । यतःशब्दाध्याहारमात्रेण निरवद्यलक्षणोपवर्णनसमर्थसूत्रपदसङ्गतिसम्भवात् ।

## करणं फलं वा प्रत्यक्षपदार्थः ?

20 ननु समानाधिकरण एव ज्ञानप्रत्यक्षपदे कथं न व्याख्यायेते ? किं यतःशब्दाध्याहारेण ? उक्तमत्र करणस्य प्रमाणत्वाज्ज्ञानस्य च तत्फलत्वात् फलकरणयोश्च स्वरूपभेदस्य सिद्धत्वात् । तदत्र

प्रमाणतायां सामग्र्यास्तज्ज्ञानं फलमिष्यते ।
तस्य प्रमाणभावे तु फलहानादिबुद्धयः ॥

---

25 अव्याप्तिश्च तदवस्थैवेति । संशयादेस्तथाविधफलजनकत्वेऽप्यप्रामाण्यप्रसक्तेः ।

## आलोचनज्ञानस्य हानादिफलकत्वे शङ्का

ननु स्मृत्याद्यनेकबुद्धिव्यवधानसम्भवात् कथमिन्द्रियार्थसन्निकर्षोत्पन्नमालोचनाज्ञानं हानादिफलं भवेत्? तथा हि कपित्थादिजातीयमर्थमिन्द्रियादिसन्निकर्षादिसामग्रीत उपलभ्य तद्गतं सुखसाधनत्वमनुस्मरति 'एवञ्जातीयकेन मम पूर्वं सुखमुपजनितमभूदिति' ततः स्मृत्यन्तरं परामर्शज्ञानमस्योपजायते 'अयञ्च कपित्थजातीय' इति, परामर्शानन्तरं सुखसाधनत्वनिश्चयो भवति तस्मादेष सुखसाधनमिति, तत उपादेयज्ञानमुत्पद्यते, यत एष सुखसाधनं कपित्थादिजातीयः पदार्थस्तस्मादुपादेय इति। अत्रान्तरे प्रथमस्येन्द्रियार्थसन्निकर्षजन्मनः कपित्थालोचनज्ञानस्य नामापि नावशिष्यत इति कथमस्य तत्फलत्वमिति।

## तत्र न्यायवार्त्तिकटीकाकर्तृ रुचिकारप्रभृतीनां मतम्

अत्राचार्यास्तावदाचक्षते 'साधु चोदितम्'। सत्यम्, ईदृश एवायं ज्ञानानां क्रमः। न वयं प्रथमालोचनज्ञानस्य उपादानादिषु प्रमाणतां ब्रूमः। तथा हि प्रथममिन्द्रियार्थसन्निकर्षोत्पन्नमालोचनज्ञानमिन्द्रियार्थसन्निकर्षादिसामग्रीस्वभावस्य प्रत्यक्षस्य प्रमाणस्य फलमेव, न तु स्वयं प्रमाणतां प्रतिलभते, स्मृतिजनकत्वात्। तदनन्तरं हि सुखसाधनत्वस्मृतिर्भवतीति, सेयमनुस्मृतिरप्रमाणफलमपि सती प्रत्यक्षप्रमाणं सम्पद्यते। तथा 'अयं कपित्थादिजातीय' इतीन्द्रियविशेषपरामर्शोत्पत्तौ इन्द्रियार्थसन्निकर्षेण सह व्याप्रियमाणत्वात् स पुनः परामर्शप्रत्ययः प्रत्यक्षजनितो धूमज्ञानवदनुमानं प्रमाणमुच्यते, परोक्षस्याग्नेरिव सुखसाधने सामर्थ्यस्य ततोऽवगतेः। यद्यपि न काचिदतीन्द्रिया शक्तिरस्मन्मते विद्यते, तथापि स्वरूपसहकार्यादिदृष्टकारणसमूहसन्निधानस्वभावमपि सामर्थ्यमतीन्द्रियमेव। तस्मादेष कपित्थादिजातीयोऽर्थः सुखसाधनमिति वह्निमत्पर्वतप्रतीतिवत्तज्जातीयलिङ्गकमानुमानिकमिदं ज्ञानम्। तदिदमनुमानफलमपि सुखसाधनत्वनिश्चयात्मकं ज्ञानमिन्द्रियविषये कपित्थादावुपादेयज्ञानमिन्द्रियार्थसन्निकर्षेण सह

---

अत्राचार्यास्तावदिति। वक्ष्यमाणव्याख्यातृमतापेक्षया तावच्छब्दप्रयोगः। इह च सर्वत्राचार्यशब्देन उद्द्योतकरविवृतिकृतो रुचिकारप्रभृतयो विवक्षिताः, व्याख्यातृ-

जनयत्प्रत्यक्षं प्रमाणं भवति। तदेव च हृदि व्यवस्थाप्य भाष्यकृद् बभाषे 'यदा ज्ञानं वृत्तिस्तदा हानोपादानोपेक्षाबुद्धयः प्रमितिरिति'।

## तत्रैव वात्स्यायनभाष्यविवरणकाराणां प्रवरप्रभृतीनां मतम्

व्याख्यातारस्तु ब्रुवते, नायमीदृशो ज्ञानानां क्रमः। आद्यम्, आलोचनाज्ञानं-
5 सुखसाधनत्वानुस्मृतिमुपजनयतीति सत्यम्। स्मृत्या च तस्य विनश्यत्ता। विनश्य-दवस्थश्चेन्द्रियविषये कपित्थादौ सुखसाधनत्वनिश्चयमादधाति। सुखसाधनत्व-ज्ञानमेव चोपादेयज्ञानमुच्यते नान्यत्, परामर्शस्तु न कश्चिदन्तराले इति किमसंवे-द्यमानज्ञानकन्थाकल्पनेनेति।

## हानादिफलके प्रत्यक्षे चक्षुःसन्निकृष्टे उपादेयतास्मरणात्मकपरामर्शस्या-
10 प्रत्याख्येयत्वम्

ननु परामर्शज्ञानमनुभूयत एव, न तु कल्प्यते। धूमज्ञानानन्तरमविनाभावं यत्र धूमस्तत्राग्निरित्यनुस्मृत्य परामृशति तथा चायं धूम इति। असति तु परा-मर्शे न लिङ्गज्ञानं लिङ्गिनि प्रमाणतां प्रतिपद्येत। स्मरणजनकं हि तत्। न च स्मृतिजनकं प्रमाणमिष्यते। स्मरणानन्तरश्च लिङ्गप्रतीतिर्भवन्ती नोपलभ्यानु-
15 वादेन भवेद् अयमग्निमानिति। अपि च तथा च कृतकः शब्द इति यदुपनयवचन-मवयवेषु पठ्यते तस्य किं वाच्यं भविष्यति परामर्शापलापवादिनाम्? स्वप्रति-

---

शब्देन च भाष्यविवरणकृतः प्रवरप्रभृतय इति। **यदा ज्ञानं वृत्तिरिति**। भाष्यकृता हि "अक्षस्याक्षस्य प्रतिविषयं या वृत्तिः सा प्रत्यक्षम्" इत्यभिधाय "वृत्तिस्तु सन्निकर्षो ज्ञानं वा" इत्युक्तम्, "यदा ज्ञानं वृत्तिः" इत्याद्यभिहितम्। इन्द्रियस्य हि विषयं प्रति
20 वृत्तिर्व्यापारः, कदाचित् तेन सन्निकर्षोऽथवा तद्विषयज्ञानजननमिति।

**स्मृत्या च तस्य विनश्यत्ता**। स्मृतेर्ज्ञानरूपत्वाज्ज्ञानस्य च ज्ञानान्तरविरोधित्वात्

**उपलभ्यानुवादेनेति**। स्मरणानन्तरं परामर्शाभ्युपगमे धूमज्ञानस्य विनष्टत्वात् स धूमोऽग्निमानित्युपलब्धधूमानुवादेन प्रतीतिः स्यात् नत्वयं धूमोऽग्निमानित्युपलभ्य-मानधूमानुवादेनेत्यर्थः। यदा धूम एवाग्निमत्तया साध्यते तदैवम्, यदा तु पर्वतस्तदापि
25 स धूमवान् प्रदेशोऽग्निमानिति स्यान्न त्वयमिति।

पत्तिवच्च परप्रतिपत्तिरवयवैर्जन्यत इति वक्ष्यामः। तस्मादप्रत्याख्येयः परामर्श इति।

## तत्र सिद्धान्तः

अत्र वदन्ति

न तावदन्तरा कश्चित् परामर्शोऽनुसूयते ।
अनुमेयमितेः पूर्वमूर्ध्वञ्च निगमे स्मृतेः ॥
अत एवार्थमालोक्य विनैव हि दवीयसा ।
बिलम्बेन व्यवस्यन्ति ग्रहणादिषु लौकिकाः ॥ 5

लिङ्गज्ञानञ्च विनश्यदवस्थमनुमेयप्रतीतौ व्याप्रियमाणं प्रमाणतां प्रतिपत्स्यते। तत्कृतैवोपलभ्यानुवादेन लिङ्गिबुद्धिर्भविष्यति। तस्मात् कपित्थादिपदार्थ- 10 दर्शनस्य परामर्शसोपानमनारोहत एवोपादेयज्ञानफलता वक्तुं युक्तेति।

अपि च अनुमेयविषये वह्न्यादौ सुखसाधनत्वानुस्मृतिकृतमुपादेयताज्ञानं तव न समस्त्येव। ततश्च तत्रापि 'तथा चायं ज्वलनजातीय' इति परामर्शो भवताऽभ्युपेय एव। स च किंकरणक इति निरूपणीयम्। न तावदिन्द्रियद्वारकः, पावकस्य परोक्षत्वात्, शब्दोपमाने त्वाशङ्कितुमपि तत्र न युक्ते। धूमाख्याल्लि- 15 ङ्गादेव स उत्पद्यत इति चेन्न। लिङ्गस्य परामर्शाविषयीकृतस्यानुमेयमितिजनननैपुणानभ्युपगमात्। धूमावमर्शस्य च तदानीमतिक्रान्तत्वात्। तथा हि प्रथमं लिङ्गज्ञानम्, ततो व्याप्तिस्मरणम्, ततो धूमपरामर्शः, ततो बह्निज्ञानम्, तेन धूमपरामर्शस्य विनश्यत्ता, ततोऽग्नौ सुखसाधनत्वानुस्मरणम्, तदा च धूमपरामर्शस्य विनाश एवेति। तस्मिन् विनष्टे न केवलो धूमस्तदानीमनलपरामर्शं जनयितुमुत्सहते। 20

अग्नौ सुखसाधनत्वानुस्मरणानन्तरं पुनर्धूमज्ञानमिन्द्रियादुत्पद्यत इति चेन् मैवम् अननुभवात्। भवतु वा धूमज्ञानं तथापि धूमज्ञानानन्तरं पुनर्व्याप्तिस्मृतिः, पुनर्धूमपरामर्शश्चावश्यं भवेद् इत्यत्रान्तरे हुतभुजि सुखसाधनत्वानु-

---

ननु वह्निज्ञानानन्तरं धूमपरामर्शस्मरणम्, ततोऽग्नौ सुखसाधनत्वस्मरणम्, तेन धूमपरामर्शस्मरणस्य विनश्यत्ता, ततो विनश्यदवस्थपरामर्शसहितात् सुखसाधनत्व- 25 स्मरणादग्नौ तज्जातीयत्वपरामर्शः, तस्माद् विनश्यदवस्थाच्च सुखसाधनत्वानुस्मरणात्

स्मृतिरतिक्रान्तेति तत्सहायपरामर्शज्ञानजन्यसुखसाधनत्वनिश्चयोत्पादो न स्यात्। सुखसाधनत्वानुस्मरणेन हि विनश्यदवस्थेन जन्यमानः प्रत्यक्षविषयेऽसौ दृष्ट इति।

अथ मन्यसे, न तदानीं पुनर्धूमज्ञानव्याप्तिस्मरणतत्परामर्शोत्पादादिज्ञान-
5 शृङ्खलाभ्युपेयते, किं तु प्राक्तन एव धूमपरामर्शः कृशानौ सुखसाधनत्वानुस्मरणान्तरं स्मरिष्यते, तेन स्मृतिविषयवर्त्तिना सता 'तथा चायमग्निजातीय' इति ज्वलनपरामर्शो जनयिष्यत इति, एतदप्ययुक्तम्। अग्निज्ञानानन्तरं युगपत् स्मरणद्वयोदयप्रसङ्गात् तदैव सुखसाधनतानुस्मृतिः तदैव धूमपरामर्शस्मृतिरिति। न हि क्रमोत्पादे कश्चित् कारणमस्ति, ज्ञानयौगपद्यञ्च
10 शास्त्रे प्रतिषिद्धम्। भवतु वा क्रमोत्पादः, तदापि स्मरणद्वयसमनन्तरमुपजायमानः पावकपरामर्शो नोपलभ्यानुवादेन जायते। क्रमपक्षेऽपि च वह्निज्ञानानन्तरं तद्गतसुखसाधनत्वानुस्मरणमेव पूर्वं भवेत्, ततो धूमपरामर्शस्मरणम्, तेन तस्य विनश्यत्ता, ततोऽग्नौ तज्जातीयत्वपरामर्शः, तेन सुखसाधनत्वस्मृतेर्विनाश एवेति पुनरपि सा विनष्टा सती सुखसाधनत्वानुस्मृतेर्निश्चयजन्मनि न
15 व्याप्रियेतेति। न च धूमलिङ्गानुमितवह्निज्ञानानन्तरं धूमस्मरणमुचितम्, अनलमुपलभ्य हि तद्गतसुखसाधनत्वमनुस्मरति लोको न धूममिति।

तेनानुमानविषये परामर्शोऽतिदुर्घटः।
प्रत्यक्षविषयेऽप्येवं किमनेन शिखण्डिना॥

यत्पुनरुपनयवचनमभिधेयरहितमप्रयोज्यं प्रसज्यत इति परिचोदितम्, तद-
20 वयवप्रसङ्ग एव निरूपयिष्यामः। तस्मादन्तरावर्त्तिनः परामर्शज्ञानस्याभावादाद्यमालोचनाज्ञानमेव हेयादिज्ञानफलं यथोक्तरीत्या भविष्यतीति।

---

सुखसाधनत्वनिश्चयो भविष्यतीत्याशङ्क्याह न च धूमलिङ्गानुमितवह्निज्ञानानन्तरमिति।

किमनेन शिखण्डिनेति। अकिञ्चित्करत्वं परामर्शस्याह। यथा भीष्मवधः
25 किरीटिनैव सम्पादितो मध्ये त्वकिञ्चित्करः शिखण्डी कृत इति।

ननु च प्रत्यक्षफलमिह मीमांस्यं वर्त्तते। स चायं सुखसाधनत्वनिश्चयः तज्जातीयत्वाल्लिङ्गादुद्गम्यमान आनुमानिक इति न प्रत्यक्षफलतामवलम्बते। सत्यमेतत्, किन्तु सम्बन्धग्रहणसमये सुखसाधनत्वनिश्चयः प्रत्यक्षजनितोऽपि समस्ति यतोऽनुमानं प्रवर्त्तते, महानसादौ धूमाग्निदर्शनवत्। अतः सम्बन्धग्रहण-कालभाविनं सुखसाधनत्वनिश्चयं चेतसि निधाय भाष्यकारस्तत्फलं प्रत्यक्ष-ज्ञानस्य वर्णितवानिति।

### शक्तेः प्रत्यक्षग्राह्यत्वम्

ननु सम्बन्धग्रहणकालेऽपि सुखसाधनत्वशक्तेरतीन्द्रियत्वात् कथं प्रत्यक्ष-गम्यता ? तज्जातीयत्वाल्लिङ्गादेव तदापि तद्ग्रहणे इष्यमाणे, ततः पुनः सम्बन्ध-ग्रहणापेक्षणादनवस्था। सुखादेव कार्यात् तदा तदवगम इति चेत् तदापि नाज्ञातसम्ब-न्धमवगतिजननसमर्थमिति तत्सम्बन्धग्रहणवेलायामपि शक्तिग्रहणे प्रत्यक्षस्या-क्षमत्वादनुमानान्तरापेक्षायामनवस्था तदवस्था। उच्यते

न खल्वतीन्द्रिया शक्तिरस्माभिरुपगम्यते।
यया सह न कार्यस्य सम्बन्धज्ञानसम्भवः॥

स्वरूपसहकारिसन्निधानमेव शक्तिः। सा च सुगमैव।

ननु सहकारिणां मध्येऽदृष्टमप्यनुप्रविष्टम्, न च तत्प्रत्यक्षगम्यम्, अतीन्द्रि-यत्वाद्धर्मस्येति, सापि न सुगमा शक्तिः नैतत् न धर्मादेः शक्तित्वादतीन्द्रियत्वम् अपि तु तन्नैसर्गिकमेव, जगद्वैचित्र्येण च तदनुमानं वक्ष्यामः। तदेवं तदितर-सहकारिस्वरूपसन्निधानात्मिकायाः शक्तेः प्रत्यक्षग्राह्यत्वसम्भवादुपपन्नं तज्जाती-यत्वलिङ्गस्य सम्बन्धग्रहणम्।

---

पुनः सम्बन्धग्रहणापेक्षणादनवस्थेति। तज्जातीयत्वस्य लिङ्गस्य ते। सह गृहीत-सम्बन्धस्य तद्गमकत्वम्। न च सुखसाधनत्वस्यान्यथाग्रहणं सम्भवतीति पुनस्तस्मादेव लिङ्गात् तदवगमे तावत्सम्बन्धग्रहणापेक्षित्वं यावज्जातमात्रस्य सुखहेतुत्वावगमः। तत्रापि जन्मान्तरे लिङ्गलिङ्गिनोरविनाभावग्रहणे जातमात्रस्यापि तस्मादेव लिङ्गादवगतिः, जन्मान्तरेऽप्येवमेवेत्यनवस्था।

न खल्वतीन्द्रिया शक्तिरिति। ननु यद्यतीन्द्रिया नाभ्युपगम्यते शक्तिः कथं तर्ह्यदृष्टस्य शक्तित्वमिति। तत्राह न धर्मादेः शक्तित्वादतीन्द्रियत्वमिति।

## सम्बन्धस्य प्रत्यक्षगम्यत्वविचारः

ननु कपित्थादिकार्यस्य सुखस्येदानीं न चक्षुर्ग्राह्यत्वमिति सम्बन्धिग्रहणाभावात् कथं चाक्षुषप्रत्ययगम्यः सम्बन्धः ? न चाक्षुषप्रत्यक्षगम्यः सम्बन्धः, किन्तु मानसप्रत्यक्षगम्यः ।

5 सुखादि मनसा बुद्ध्वा कपित्थादि च चक्षुषा ।
तस्य कारणता तत्र मनसैवावगम्यते ।।

ननु च मनसा कपित्थादेः सुखसाधनत्वग्रहणाभ्युपगमे बाह्यविषयप्रमितिषु मन एव निरङ्कुशं करणमिदानीं संवृत्तमिति कृतं चक्षुरादिभिः, अतश्च न कश्चिदन्धो बधिरो वा स्यात् ?

10 नैष दोषः प्रथमप्रवृत्तसमनस्कबाह्येन्द्रियजनितविज्ञानविषयीकृतवपुषा बाह्यस्य वस्तुनो मनोग्राह्यत्वाभ्युपगमात् तस्यैव नियामकत्वान्नाश्रृङ्खलमन्तःकरणं बाह्यविषये प्रवर्त्तते ।

ननु च सम्बन्धग्रहणकाले यदि मानसेन प्रत्यक्षेण सुखसाधनत्वावधारणम्, तर्हि तत्काल इव व्यवहारकालेऽपि मानसप्रत्यक्ष एव सुखसाधनत्वनिश्चयोऽस्तु, किं तज्जातीयत्वलिङ्गापेक्षणेनेति ? मैवम् । शब्दलिङ्गेन्द्रियाद्युपरतौ केवलमन्तः-

15 करणं करणं कल्प्यते, परिदृश्यमानायाः प्रतीतेरपह्नोतुमशक्यत्वात् । लिङ्गाद्युपायान्तरसम्भवे तु यदि मन एव केवलं कारणमुच्यते, तन्मानसमेवैकं प्रमाणं स्यात् न चत्वारि प्रमाणानि भवेयुरित्यलं प्रसङ्गेन ।

तस्मात्सम्बन्धग्रहणकाले यत्तत्कपित्थादिविषयमक्षजं ज्ञानं तदुपादेयादिज्ञानफलमिति, भाष्यकृतश्चेतसि स्थितम् । सुखसाधनत्वज्ञानमेवोपादेयादि-

20 ज्ञानमित्युक्तम् ।

## प्रमाणतत्फलयोरभेदशङ्कानिरासः

आह किमर्थमयमीदृशः क्लेश आश्रीयते ? प्रमाणादभिन्नमेव फलमस्तु । तदेव चक्षुरादिजनितं कपित्थादिपदार्थदर्शनं विषयप्रकाशेन व्याप्रियमाणमिवाभातीति करणमुच्यताम् । तदेव विषयानुभवस्वभावत्वात् फलमिति कथ्यताम् । इत्थञ्च प्रमाणफले न भिन्नाधिकरणे भविष्यतः, अन्यत्र प्रमाणमन्यत्र फल-

---

25 इत्थञ्च प्रमाणफले न भिन्नाधिकरणे भविष्यत इति । अनेन लोकप्रसिद्ध्यानुगुण्यमस्य पक्षस्य दर्शयति । लोके हि परशुनिपातस्य करणस्य छिदेश्च फलस्यैकवृक्षगत-

मिति । तदुक्तम् 'सव्यापारप्रतीतत्वात् प्रमाणं फलमेव सत्' इति ।

तदिदमनुपपन्नम्, प्रमाणस्य स्वरूपहानिप्रसङ्गात् । करणं हि प्रमाणमुच्यते प्रमीयते चानेनेति । न च क्रियैव क्वचित् करणं भवति । क्रियायां साध्यायां कारक किमपि करणमुच्यते । तत्र यथा दात्रेण चैत्रः शालिस्तम्बं लुनातीति कर्तृकर्मकरणानि क्रियातो भिन्नान्युपलभ्यन्ते, तथेहापि चक्षुषा घटं पश्यतीति दर्शनक्रियातः 5 पृथग्भाव एव तेषां युक्तो न दर्शनं करणमेवेति । प्रमा प्रमाणमिति तु फले प्रमाणशब्दस्य साधुत्वाख्यानमात्रं कृतिः करणमितिवत् ।

यत्तु न भिन्नाधिकरणे प्रमाणफले इत्थं भविष्यत इति सेयमपूर्ववाचोयुक्तिः । किमत्राधिकरणं विवक्षितम् ? यदि तावद्विषयस्तदस्त्येवैकविषयत्वम् । यद्विषयं हि दर्शनं स एव चक्षुरादेः करणस्य विषयः । आश्रयोऽस्त्वधिकरणमिति बौद्ध- 10 गृहे तावदवाचको ग्रन्थः, क्षणिकत्वेन सर्वकार्याणां निराधारत्वात् । अस्मत्पक्षे तु भिन्नाश्रययोरपि फलकरणभावः पाककाष्ठयोर्दृष्टः । तथा चक्षुर्ज्ञानयोरपि भविष्यतीति । क्वचित्तु भिन्नयोरपि ज्ञानयोः फलकरणत्वेन स्थितयोर्लिङ्गलिङ्गिज्ञानयोरिव विशेषणविशेष्यज्ञानयोरिव चैकात्माश्रयत्वमस्ति । नत्वनेन समाना-

---

त्वेन दर्शनात्, इहापि तत्रैव ज्ञाने करणत्वं फलत्वञ्चेति । सव्यापारप्रतीतत्वादिति । 15 नियतार्थाधिगमे सव्यापारस्य नियतार्थपरिच्छेदाख्यव्यापारवतः प्रतीतत्वादुपलब्धत्वात् फलमेव सत् प्रमाणमिति भण्यते । इदमेव हि दात्रादेः करणस्य करणत्वं यत् क्रियायां व्यापृतत्वम् । नन्वर्थपरिच्छेदात्मकत्वाज्ज्ञानस्य कथं स्वात्मन्येव व्यापृतत्वोक्तिः ? अस्त्येतत्, किन्तु यदा अर्थाकारानुकारि ज्ञानमुत्पद्यते तदैवमुपचर्यते । यथा पितृसदृशमपत्यमुपलभ्य पितुरनेन रूपं गृहीतमिति लोको व्यपदिशति, अथ च नानेन किञ्चिद्रूपं 20 गृहीतम्; एवं नियतार्थाकारं ज्ञानमुपलभ्यार्थग्रहणे व्यापृतवमर्थोऽनेन गृहीतम् इत्येवं कल्पयति । यदाह

यथा फलस्य हेतूनां सदृशात्मतयोद्भवात् ।
हेतुरूपग्रहो लोकेऽक्रियावत्त्वेऽपि दृश्यते ॥ इति ॥

कृतिः करणमिति । यथा भावे सिद्ध्यतोऽपि करणशब्दस्य, न कारकस्या- 25 धिकारे ग्रहणमिति भावः ।

श्रयत्वेन प्रयोजनं चक्षुरादावनिर्वहणात्। अथैकफलनिष्पत्तौ व्यापारः समानाश्रयत्वमुच्यते, तदपि भवतु कारकान्तराणाम्, न तु फलस्वभावस्य ज्ञानस्य फलनिष्पत्तौ सव्यापारत्वमुपपद्यते, अपि तु पृथग्भूतफलनिर्वृत्तावेवेति।

ननु वस्तुस्थित्या फलमेव ज्ञानमुच्यते, न तु विषयानुभवः, विषयानुभवे स व्यापारो भवति। अथ मनुषे विषयाधिगमाभिमानस्तस्मिन् सति भवतीति, कोऽयमभिमानो नाम? विषयानुभवाद्भिन्नः, अभिन्नो वा। अभेदे सति तस्मिन् सति भवतीत्यसङ्गता वाचोयुक्तिः। भेदे त्वस्मन्मतानुप्रवेशः। अपि च ज्ञानं विषयाधिगमे व्यापृतमिति कृत्वा विषयाधिगमाभिमानमुपजनयत्युत विषयाधिगमस्वभावत्वादेवेति विचारे विषयाधिगमात् पृथग्भूतस्य तत्र व्याप्रियमाणस्यानुपलम्भाद्विषयाधिगमस्वभावमेव ज्ञानमवधार्यते तत्कृतश्चाभिमान इति, फलमेव ज्ञानमवकल्पते न करणमिति। तथा च लोकः फलत्वमेव ज्ञानस्यानुमन्यते न करणत्वम्। तथा ह्येवं वदति 'चक्षुषा पश्यामि' 'लिङ्गेन जानामी'ति न तु ज्ञानेन जानामीत्येवं व्यपदिशन् कश्चिद् दृश्यते।

ननु च सत्स्वपि चक्षुरादिषु विषयज्ञानमनुपजनयत्सु न करणतां व्यपदिशति लोको, जनयत्सु च व्यपदिशतीति, लोके करणोत्पादकत्वादेव तेषां करणत्वव्यपदेशो न साक्षात्करणत्वादिति।

तदयुक्तम्। चक्षुराद्येव करणम्, न तु तेनान्यत्करणमुपजन्यते। किं हि तदन्यत्करणम्? ज्ञानमिति चेत्, कस्यां क्रियायां तत्करणमिति परीक्ष्यतामेतत्। न ह्यात्मन्येव किञ्चित् करणं करणं भवतीति। यत्तु ज्ञानमजनयति चक्षुरादौ न करणतामाचष्टे लोकस्तद्युक्तमेव। न हि क्रियोत्पत्तावव्याप्रियमाणं करणं कारकं भवति। तेन चक्षुरादेर्ज्ञानक्रियामुपजनयतः करणत्वम्, ज्ञानस्य फलत्वमेवेति युक्तस्तथाव्यपदेशः।

> प्रमाणस्य प्रमाणत्वं तस्मादभ्युपगम्यताम्।
> भिन्नं फलमुपेतव्यमेकत्वे तदसम्भवात्॥

---

विषयाधिगमाभिमान इति। अधिगतोऽयं मया घट इत्येवंरूपोऽत्राभिमानो विवक्षितः।

यस्तु मूढतरः प्रमाणप्रमेयफलव्यवहारमेकत्रैव ज्ञानात्मनि निर्वाहयितु-मुद्यच्छति

यदाभासं प्रमेयं तत्प्रमाणफलते पुनः ।
ग्राहकाकारसंवित्त्योस्त्रयं नातः पृथक् कृतम् ।। इति ।

तमपवर्गाह्निके ज्ञानाद्वैतदलनप्रसङ्गेन दुराचारं निर्भर्त्सयिष्यामह इत्यलं विस्तरेण । 5

तस्मात् सुष्ठूक्तं 'यदा ज्ञानं प्रमाणं तदा हानादिबुद्धयः फलमि'ति, तदेवं फलविशेषणपक्षे 'यतः' शब्दाध्याहारेण वाचकं सूत्रम्, यत इन्द्रियार्थसन्निकर्षोत्पन्न-त्वादिविशेषणविशेषितं ज्ञानाख्यं फलं भवति तत्प्रत्यक्षमिति । तत्रेन्द्रियार्थसन्नि-कर्षोत्पन्नपदमर्थानपेक्षजन्मनः स्मृत्यादिज्ञानस्य, अर्थजनितस्यापि च परोक्षविषय- 10
स्यानुमानादिज्ञानस्य व्यवच्छेदार्थम् । अतस्तज्जनकस्य न प्रत्यक्षता प्रसज्यते ।

### प्रत्यक्षलक्षणेऽतिव्याप्तिनिरासः

नन्विन्द्रियार्थसन्निकर्षोत्पन्नमिन्द्रियगत्यनुमानमप्यस्ति, तद्धीन्द्रियार्थसन्नि-कर्षेण लिङ्गभूतेन जन्यते देशान्तरप्राप्त्येव तपनगमनानुमानम् इति कथमनेन 15
पदेनानुमानमपाक्रियते ?

नैतदेवम् । इन्द्रियेण स्वविषयसन्निकृष्टेन सता तत्रैव यद्विज्ञानमुत्पद्यते तदिन्द्रियार्थसन्निकर्षोत्पन्नमिह ब्रूमहे, न चेदृशमिन्द्रियगत्यनुमानम् । कुतो विशेष-प्रतिलम्भ इति चेद्, उत्पन्नग्रहणादिति ब्रूमः । उत्पन्नग्रहणेन हि सन्निकर्षस्य कार-कत्वं ख्याप्यते, तच्चापीन्द्रियविषयेऽर्थे ज्ञानमुत्पादयतो निर्वहति, इन्द्रियगत्यनुमाने 20
तु न सन्निकर्षं कारकमाहुरपि तु ज्ञापकम् । अत एव स्वग्रहणसापेक्षस्तदनुमानेऽसौ व्याप्रियते न रूपादिप्रमिताविव इतरनिरपेक्ष इति ।

---

यदाभासं प्रमेयं तदिति । आभासत इत्याभासो ग्राह्याकारः । य आभासो यस्मिंस्तद् यदाभासम्; यस्तत्र ज्ञाने ग्राह्याकारः प्रतिभाति तत् प्रमेयमित्यर्थः ।

इन्द्रियगत्यनुमानमप्यस्तीति । न हि गोलकस्थस्येन्द्रियस्यासत्यां गतौ बाह्येन 25
विषयेण सन्निकर्ष उपपद्यत इति सन्निकर्षात् तद्गत्यनुमानम् ।

## प्रत्यक्षलक्षणघटकपदार्थनिर्वचनम्

इन्द्रियाणि घ्राणरसननयनस्पर्शनश्रोत्राणि पृथिव्यादिभूतपञ्चकप्रकृतीनि वक्ष्यन्ते।

अर्थास्तु गन्धरूपरसस्पर्शशब्दगन्धत्वादिस्वजात्यवच्छिन्नाः, तदधिकरणानि पृथिव्यप्तेजांसि द्रव्याणि, तदधिष्ठानाः संख्यादयो गुणाः, उत्क्षेपणादीनि कर्माणि, तद्वृत्तीनि सामान्यानि, येषां स्पर्शनेन चक्षुषा ग्रहणं कणव्रतमते निरूपितं तेऽर्थाः, प्रागुक्तश्चाभावोऽप्यर्थ एव, विचार्यं गम्यमानत्वात्।

सन्निकर्षस्त्विन्द्रियाणामर्थैः सह षट्प्रकारः। तत्र द्रव्यं चक्षुषा, त्वगिन्द्रियेण वा संयोगाद् गृह्यते। तद्गतो रूपादिर्गुणः संयुक्तसमवायात्। रूपत्वादिसामान्यानि संयुक्तसमवेतसमवायाद् गृह्यन्ते। चक्षुषा संयुक्तं द्रव्यम्, तत्र समवेतं रूपम्, रूपे च समवेतं रूपत्वमिति। समवायाच्छब्दो गृह्यते। श्रोत्रमाकाशद्रव्यम्, तत्र समवेतः शब्दः। शब्दत्वं समवेतसमवायाद् गृह्यते, श्रोत्राकाशसमवेते शब्दे तद्धि समवेतमिति। संयुक्तविशेषणभावादभावग्रहणं व्याख्यातम्। इह घटो नास्तीति चक्षुषा संयुक्तो भूप्रदेशस्तद्विशेषणीभूतश्चाभाव इति।

## सन्निकर्षस्यावश्यकत्वम्

ननु सन्निकर्षावगमे किं प्रमाणम्? व्यवहितानुपलब्धिरिति ब्रूमः। यदि ह्यसन्निकृष्टमपि चक्षुरादीन्द्रियमर्थं गृह्णीयाद् व्यवहितोऽपि ततोऽर्थ उपलभ्येत, न चोपलभ्यते, तस्मादस्ति सन्निकर्षः।

नन्वव्यवधानमेवास्तु किं सन्निकर्षेण? मैवम्। इन्द्रियाणां कारकत्वेन प्राप्यकारित्वात्, संसृष्टञ्च कारकं फलाय कल्पत इति कल्पनीयः संसर्गः। एतच्चेन्द्रियपरीक्षाप्रसङ्गे निपुणं निर्णेष्यत इति नेह विविच्यते। रसनस्पर्शनयोश्च स्पष्टं प्राप्यकारित्वमुपलभ्यत इति तत्सामान्यादिन्द्रियान्तरेष्वपि कल्पनीयमिति।

नन्वेवं सत्यर्थाक्षिप्तः कारकत्वादेव सन्निकर्ष इति स्वकण्ठेन कस्मादुच्यते? षड्विधत्वज्ञापनार्थमित्युक्तम्। उत्पन्नग्रहणेन इन्द्रियार्थयोर्ज्ञानजनकत्वम् अर्थस्य कर्मत्वेन।

नन्वर्थस्य ज्ञानजनकत्वं कुतोऽवगम्यते? तद्विषयज्ञानोत्पादाद्। एवमाकारस्य निराकृतत्वात् प्रकारान्तरेण प्रतिकर्मव्यवस्थाया असिद्धेः।

ननु प्रयोजनमेतत्, प्रमाणं पृष्टोऽसि, तद् ब्रूहि । उच्यते । एतदेव प्रमाणम्, अन्यस्यापि वीरणादेः कर्मकारकस्य कटादिकार्योत्पत्तौ प्रत्यक्षानुपलम्भप्रतिपन्नाभ्यामन्वयव्यतिरेकाभ्यां यथा कारणत्वमवधार्यते तथार्थस्यापि ज्ञानोत्पत्तौ । यथा हि देवदत्तार्थी कश्चित् तद्गृहं गतस्तत्रासन्निहितं न पश्यति देवदत्तं क्षणान्तरे चैनमायातं पश्यति तत्रान्वयव्यतिरेकाभ्यां देवदत्तसदसत्त्वानुवर्तिनौ ज्ञानो- 5 त्पादानुत्पादाववधार्य मानसेन प्रत्यक्षेण चन्दनसुखवदस्य तत्कारणतां प्रतिपद्यते ।

ननु वीरणकटयोः पृथगुपलम्भाद्युक्त एष न्यायः । अर्थो ज्ञानात् पृथङ् न कदाचिदुपलभ्यत इति दुर्गमौ तत्रान्वयव्यतिरेकौ । उच्यते । अयमेव पृथगुपलम्भो यदसन्निहितेऽर्थे न तद्विषयमबाधितं ज्ञानमुत्पद्यत इति । तदलमस्मिन्नवसरे ज्ञानवादगर्भचोद्योद्विभावयिषया, भविष्यत्येतदवसर इति । यथा चेन्द्रियाणां 10 करणानामन्वयव्यतिरेकाभ्यां ज्ञानकारणत्वम् एवमर्थस्य करणेऽपीत्युपपन्नग्रहणेन दर्शितम् ।

### प्रत्यक्षलक्षणेऽव्याप्तिनिरासः

नन्विन्द्रियार्थसन्निकर्षोत्पन्नपदेन सुखादिविषयं प्रत्यक्षं न संगृहीतम् ? न न संगृहीतम्, मनस इन्द्रियत्वात् सुखादेरर्थस्य तद्ग्राह्यत्वात्, भौतिकघ्राणादीन्द्रिय- 15 धर्मवैलक्षण्यात्तु मनसस्तद्वर्गे परिगणनं न कृतमिति ।

### प्रत्यक्षप्रवृत्तिप्रकारः

तच्चेदं प्रत्यक्षं चतुष्टयत्रयद्वयसन्निकर्षात् प्रवर्त्तते । तत्र बाह्ये रूपादौ विषये चतुष्टयसन्निकर्षाज् ज्ञानमुत्पद्यते, आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेनेति । सुखादौ तु त्रयसन्निकर्षाज्ज्ञानमुत्पद्यते, तत्र चक्षुरादिव्यापाराभावात् । 20 आत्मनि तु योगिनो द्वयोरात्ममनसोरेव संयोगाज्ज्ञानमुपजायते, तृतीयस्य ग्राह्यस्य ग्राहकस्य तत्राभावात् । तस्मात् सुखाविज्ञानसंग्रहादिन्द्रियार्थसन्निकर्षोत्पन्नमिति युक्तमुक्तम् । आत्ममनसोस्तु सदपि ज्ञानजनकत्वमिह न सूत्रितं सर्वप्रमाणसाधारणत्वादिति ।

---

घ्राणादीन्द्रियधर्मवैलक्षण्यादिति । नित्यत्वानियतविषयत्वादिना वैलक्षण्यम् । 25

## प्रत्यक्षलक्षणे ज्ञानपदसार्थक्यम

ज्ञानग्रहणं विशेष्यनिर्देशार्थम्, तस्य हीन्द्रियार्थसन्निकर्षोत्पन्नत्वादीनि विशेषणानि । तानि असति विशेष्ये कस्य विशेषणानि स्युरिति ।

अथ वा सुखादिव्यावृत्त्यर्थं ज्ञानपदोपादानम् । इन्द्रियार्थसन्निकर्षोत्पन्नं 5 हि सुखमपि भवति तत्र तज्जनकं कारकचक्रं प्रमाणं मा भूत्, ज्ञानजनकमेव प्रमाणं यथा स्यादिति ज्ञानग्रहणम् ।

## शाक्यमते सुखादेरपि ज्ञानरूपत्वम्

अत्र शाक्याश्चोदयन्ति न ज्ञानपदेन सुखादिव्यवच्छेदः कर्त्तुं युक्तः, शक्यो वा, सुखादिनामपि ज्ञानस्वभावत्वात् । ज्ञानस्यैवामी भेदाः सुखं दुःखमिच्छा द्वेषः 10 प्रयत्न इति । कारणाधीनो हि भावानां भेदो भवितुमर्हति । समानकारणानामपि तु भेदेऽभिधीयमाने न कारणकृतं पदार्थानां नियतं रूपमिति तदाकस्मिकत्वप्रसङ्गः । तदुक्तम्

तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः ।
तत्सुखादि किमज्ञानं विज्ञानाभिन्नहेतुजम् ।। इति ।

15 तस्माज् ज्ञानरूपाः सुखादयः, तदभिन्नहेतुजत्वादिति ।

## सुखादेर्ज्ञानातिरिक्तत्वम्

तदिदमनुपपन्नम् प्रत्यक्षविरुद्धत्वाद्धेतोः । सुखादि संवेद्यमानमानन्दादिरूपतयाऽनुभूयते, ज्ञानं विषयानुभवस्वभावतयेति, प्रत्यक्षसिद्धभेदत्वात् कथमभेदेऽनुमानं क्रमते । अत एव इदमपि न वचनीयम् 'एकमेवेदं संविद्रूपं हर्षविषादाद्यनेका- 20 कारविवर्त्तं पश्यामस्तत्र यथेष्टं सञ्ज्ञाः क्रियन्तामि'ति । संविदो विषयानुभवस्वभावतयैव प्रतिभासात्, सुखादेश्च विषयानुभवस्वभावानुस्यूतस्याप्रतिभासात्,

---

तदतद्रूपिणो भावा इति । तद्रूपिणस्तद्रूपवन्तः शाल्यङ्कुराः, अतद्रूपिणश्चातद्रूपवन्तो यवाङ्कुराः । शाल्यङ्कुरा यवाङ्कुराश्च कथमेकरूपा अनेकरूपाश्चेत्यर्थः । एवं गूढाशयेन पृष्टे स्पष्टमुत्तरमाह तदतद्रूपहेतुजाः । तद्रूपैरेकरूपैः शालिबीजैरतद्रूपैर्भिन्नरूपैश्च यव- 25 बीजैर्जनिता इति । परः स्वाभिप्रायमाह तत्सुखादि किमज्ञानं विज्ञानाभिन्नहेतुजमिति ।

एकमेवेदमिति । हर्षविषादादिरनेकाकारो विवर्तः परिणामो यस्य ।

ज्ञानमेव विषयग्रहणरूपं प्रकाशते, न सुखं दुःखं वा। यस्तु सुखज्ञानं दुःखज्ञानमिति प्रतिभासः स ज्ञानस्वभावभेदकृत एव संशयज्ञानं विपर्ययज्ञानमितिवत्, उक्तमत्र संशयविपर्ययादौ विषयानुभवस्वभावत्वमनुस्यूतमवभाति। संशयो हि विषयग्रहणात्मकोऽनुभूयते, अनिश्चितं तु विषयं गृह्णाति। विपर्ययोऽपि विषयग्रहणात्मक एव विपरीतमसन्तं वा विषयं गृह्णाति। न तु विषयग्रहणस्वभावं सुखं दुःखञ्चानुभूयते। अन्य एवायं ग्राह्यैकस्वभाव आन्तरो धर्मः सुखदुःखादिरिति, घटज्ञानवद् विषयतयैव ज्ञानं भिनत्ति, न स्वभावभेदेन संशयवदिति। तत्रैतत्स्यात्।

स्वप्रकाशत्वात् सुखादेर्न ग्राह्यैकस्वभावत्वम्, अतश्च ग्राह्यग्रहणोभयस्वभावत्वाज् ज्ञानमेव तदिति। मैवं वोचः। प्रकाशत्वं ज्ञानेऽपि प्रतिक्षिप्तं प्रतिक्षेप्स्यते, तत्कुतः सुखादौ भविष्यति? न हि ग्रहणस्वभावं कश्चित् सुखमनुभवति ज्ञानवदिति। 10

नन्वस्य प्रकाशत्वानभ्युपगमे सुखादेरुत्पादानुत्पादयोरविशेषात् सर्वदा सुखित्वं न कदाचिद्वा स्यादिति। नैतदेवम्। उत्पन्नमेव सपदि सुखं गृह्यते ज्ञानेनेति कथमनुत्पन्नाम्न विशिष्यते? प्रत्युत स्वप्रकाशसुखवादिनामेष दोषः, स्वप्रकाशस्य दीपादेः सर्वान् प्रत्यविशिष्टत्वात्। क्वचित् सन्ताने स्वप्रकाशसुखोत्पादात् तेनैव स्वप्रकाशेन सुखेनान्योऽपि सुखी स्याद् यस्यापि सुखं नोत्पन्नमिति। किञ्च किमेकमेव 15 ज्ञानं सर्वसुखदुःखाद्यशेषाकारभूषितमिष्यते, उत किञ्चित्सुखात्मकं, किञ्चिद् दुःखात्मकं ज्ञानमिति? आद्ये पक्षे सर्वाकारखचितज्ञानोपजननादेकस्मिन्नेव क्षणे परस्परविरुद्धसुखदुःखादिधर्मप्रबन्धवेदनप्रसङ्गः, उत्तरस्मिंस्तु किञ्चित् सुखज्ञानं किञ्चिद्दुःखज्ञानमिति यत् किञ्चित्सुखदुःखचितं विषयानुभवस्वभावमपि ज्ञानमनुभूयमानमेषितव्यमेव। तच्च न स्वच्छम्, अपि तु केनचिद्घटादिनाविषयेणोपरक्त- 20 मन्वयव्यतिरेकाभ्याञ्च घटाद्युपजननापायेऽपि बोधस्वभावमनुवर्त्तमानं प्रतीयते।

---

**न स्वभावभेदेन संशयवदिति।** यथा संशयरूपत्वेनोभयकोटिस्पृश्यस्वभावेनानुभयकोटिस्पृशो ज्ञानान्तराद् विशिष्यते 'संशयात्मकमेतज्ज्ञानं न व्यवसायात्मकम्' इति तथा न सुखज्ञानम्, अपि तु विषयकृत एव तस्य भेदः 'सुखस्य ज्ञानम्' इति।

**तच्च न स्वच्छमिति।** यदि हि विषयानुरागरहितस्य बोधमात्रस्यानुभवनं 25 स्यात् तदा आत्मीयेन सुखात्मनापि स्वरूपेण तस्यानुभवो युज्येतेत्यभिप्रायः। **अन्वयव्यतिरेकाभ्याञ्चेति।** अयं भावः। सुखादयो ग्राह्याः, न च ग्राह्यरूपमेव ग्राहकम्।

तदिदानीं सुखज्ञानमप्यनुभूयमानं सुखेन विषयभावजुषा घटादिनेवोपरज्यत इति गम्यते, न स्वरूपेणैव सुखात्मकम्, ततो भिन्नरूपस्य बोधमात्रस्वभावस्य ज्ञानस्यान्यदा अदृष्टत्वादिति। तस्मान्न बोधरूपाः सुखादयः। अभिन्नहेतुजत्वादिति चायमसिद्धो हेतुः, समवायिकारणस्यात्मनोऽसमवायिकारणस्यात्ममनःसंयोगस्याभेदेऽपि निमित्तकारणस्य सुखत्वज्ञानत्वादेर्भिन्नत्वात्।

## कार्योत्पत्तेः पूर्वमाश्रयाभावान्निराश्रयं सुखत्वादि न कारकं स्यात्

ननु सुखोत्पादात् पूर्वमनाश्रयं सुखत्वसामान्यं कथं तत्र स्यात्? कश्चापि सुखहेतुभिः कारकैः संसर्गः? असंसृष्टञ्च कथं कारकं स्यात्?

उच्यते। सर्वसर्वगतानि सामान्यानि साधयिष्यन्त इति सन्ति तत्रापि सुखत्वादीनि। योग्यतालक्षण एव चैषां सुखहेतुभिः कारकैः संसर्गः धर्माधर्मवत्। धर्माधर्मौ हि सर्वस्य प्राणिनां सुखदुःखहेतोर्जायमानस्य शाल्यादेः कार्यस्य कारणम्। तयोश्च तत्कारणैर्बीजक्षितिजलादिभिः सह योग्यतैव संसर्गः। एवं सुखत्वादीनामपि स्यात्। तस्मान्निमित्तकारणभेदाद्भिन्नानि ज्ञानसुखादीनि कार्याणि।

> निमित्तकारणन्यत्वमपि कार्यस्य भेदकम्।
> विलक्षणा हि दृश्यन्ते घटादौ पाकजा गुणाः॥

---

यदि हि ग्राह्यरूपमेव ग्राहकं स्यात् तदा 'घटो मया ज्ञातोऽधुना पटं जानामि' इत्यादौ ग्राह्यरूपानुवृत्तिवद् ग्राहकरूपानुवृत्तिरपि नोपलभ्येत, उपलभ्यते च बोधरूपोऽनुवर्तमानो ग्राहकाकारः, ततोऽवसीयते ग्राह्येणोपरक्तमेव ज्ञानं न ग्राह्यरूपमिति। सत्यपि घटे कदाचिदभावाद्, असत्यपि च तस्मिन् पटादौ भावात्, ततो व्यावृत्तरूपादन्यैव विलक्षणबोधरूपता प्रतीयत इति। अन्यदा अदृष्टत्वादिति। यदि सुखमेव ज्ञानं स्यान्न सुखस्य ज्ञानम्, तदा तदनन्तरभाविनि ज्ञाने बोधरूपतावत् सुखरूपताप्यनुवर्तेत। 'अन्यदा वा दृष्टत्वात्' प्राङ्नीत्या यदा ग्राह्याद् भिन्नं बोधस्वभावं ज्ञानमुपलब्धं तद्वदत्रापि भवतु, अस्यापि ग्राह्यत्वात्।

योग्यतालक्षण एवेति। नियतसुखादिकार्यगम्यः कश्चित् सम्बन्धविशेषो योग्यताख्यः।

विलक्षणा हि दृश्यन्त इति। समवायिकारणानां परमाणूनामग्निसंयोगस्य

अपि च ज्ञानमिच्छन्ति न सर्वे ज्ञानपूर्वकम् ।
सुखदुःखादि सर्वन्तु विषयज्ञानपूर्वकम् ॥
विषयानुभवोत्पाद्या यत्रापि न सुखादयः ।
तत्रापि तेषामुत्पत्तौ कारणं विषयस्मृतिः ॥

क्वचित्तु सङ्कल्पोऽपि सुखस्य कारणतां प्रतिपद्यते । तस्मात् सर्वं सुखादि ज्ञानपूर्वकमेव । ज्ञानमपि ज्ञानपूर्वकमेवेति चेद्, उपरिष्टान्निराकरिष्यमाणत्वात् । न हि गर्भादौ, मदमूर्च्छाद्यनन्तरं वा ज्ञानमुपजायमानं ज्ञानान्तरपूर्वकं भवतीति । वक्ष्यामः । तेन सुखादीनां वैलक्षण्योपपादनात् सुखादिव्यवच्छेदस्य सिद्धत्वात् ।

## अव्यभिचारिपदादेव ज्ञानव्यवच्छेदः ?

व्यभिचाराव्यभिचारौ हि ज्ञानस्य धर्मौ न सुखादेरतस्तदुपादानात्तद्धर्मयोगि ज्ञानं लभ्यत एव, किं ज्ञानग्रहणेन ? नैतदेवम्, सुखस्यापि सव्यभिचारस्य दृष्टत्वात् । किं पुनः सुखं व्यभिचारवद् दृष्टम् ? यदेतत् परदाराभिमर्शादिनिषिद्धाचरणसम्भवं सुखं तद् व्यभिचारि ।

ननु सुखस्य कीदृशो व्यभिचारः ? ज्ञानस्यापि कीदृशो व्यभिचारः ? अतस्मिंस्तथाभावः । सुखस्यापि अतस्मिंस्तथाभाव एव । किं परपुरन्ध्रिपरिरम्भसम्भवं सुखं सुखं न भवति ? किं शुक्तिकायां रजतज्ञानं ज्ञानं न भवति ? ज्ञानं तद्भवति किं तु मिथ्या । इदमपि सुखं भवति किं तु मिथ्या ।

ननु न सुखं मिथ्या, तदपि ह्यानन्दस्वभावमेव । यद्येवं शुक्तिकायां रजतज्ञानमपि न मिथ्या, तदपि हि विषयानुभवस्वभावमेव ।

ननु विषयानुभवस्भावमपि तज्ज्ञानं विषयं व्यभिचरति । सुखमपि तर्हि इदमानन्दस्वभावमपि विषयं व्यभिचरत्येव । किमसुखसाधनेन तज्जनितम् ? ज्ञानमपि किमज्ञानसाधनेन जनितम् ?

---

चासमवायिकारणस्याभेदेऽपि रूपत्वरसत्वादिनिमित्तकारणभेदात् पाकजानां रूपरसादीनां वैलक्षण्यं भेदः ।

क्वचित्तु सङ्कल्पोऽपीति । यत्र भाविनं स्त्र्यादिसङ्गमं चित्ते सङ्कल्पयति ।

आनन्दस्वभावमपि विषयं व्यभिचरत्येवेति । सुखजनकमत्र विषयत्वेन विवक्षितम्, सुखस्य तदालम्बनत्वेनोत्पादात् ।

ननु ज्ञानं ज्ञानसाधनेन जनितम् असत्येन प्रत्यक्षबाधितेन रजतादिना। सुखमपि सुखसाधनेन जनितम् असत्येन तु शास्त्रबाधितेन परवनितादिना। किं परवनितादि न सत्यम्। तत्रापि ज्ञानजनकं सत्यम्, असत्यं प्रत्यक्षबाधितत्वात्? परवनिताद्यपि सुखसाधनम् असत्यं शास्त्रबाधितत्वात्।

5 ननु शास्त्रेण किमत्र बाध्यते? ज्ञानेऽपि प्रत्यक्षेण किं बाध्यते? विषयो मिथ्येति ख्याप्यते। शास्त्रेणापि सुखस्य हेतुर्मिथ्येति ख्याप्यते। किं स विषयः सुखहेतुर्न भवति? यथा त्वेष विषयः कलुषस्य ज्ञानस्य हेतुस्तथा सोऽपि कलुषस्य कटुविपाकस्य सुखस्य हेतुरिति तथाविधं सुखमपि व्यभिचारि भवत्येवेत्यलमतिकेलिना। तस्मात् समानन्यायत्वात् सुखेऽव्यभिचारितास्तीत्यव्यभिचारि-
10 पदाज्ज्ञानं न लभ्यते।

## व्यवसायपदेनैव ज्ञानलाभसम्भवे तद्ग्रहणे हेतुप्रदर्शनम्

अपर आह। किमनेन डिम्भकलहेन। मा भूदव्यभिचारिपदाज्ज्ञानस्य लाभस्तथापि व्यवसायात्मकपदाल्लभ्यत एव ज्ञानम्। न हि सुखदुःखादयो व्यवसायात्मका भवन्ति, किन्तु ज्ञानमेव तथाविधमिति। संशयव्यवच्छेदार्थञ्च तत्पद-
15 मिति चेत्। सत्यम्। सुखादिव्यवच्छेदमपि कर्तुमलमेव भवति व्यवसायात्मकत्वस्य सुखादिष्वसम्भवादिति। तदेवं सिद्धेऽपि सुखादिव्यवच्छेदे कर्त्तव्यमेव ज्ञानग्रहणम्, विशेष्यनिर्देशार्थत्वात्। तस्य हि सर्वाण्यमूनि विशेषणान्युपात्तानि तदनुपादाने निरालम्बनानि भवेयुः, श्रोतुश्च बुद्धिर्न समाधीयेतेति। तेन बलाद् गम्यमानमेव कर्त्तव्यमेव ज्ञानग्रहणम्। अर्थाक्षिप्तस्यावचने प्रत्यक्षं प्रत्यक्षमित्येतावन्मात्रमभिधेयं
20 स्याद्, अन्यदर्थाल्लभ्यत एव। तस्माद्धर्मिनिर्देशार्थं युक्तं ज्ञानपदम्।

## अव्यपदेश्यपदसार्थक्यविचारः

शब्दानामर्थसंस्पर्शित्वं शाक्यमतनिरासेन साधयिष्यत इति शब्दानुप्रवेशवशेन व्यपदेश्यं नाम ज्ञानमुपपद्यत इति तद्व्यवच्छेदार्थमव्यपदेश्यपदम्।

---

प्रत्यक्षं प्रत्यक्षमित्येतावन्मात्रमभिधेयमिति। सामान्यलक्षणापेक्षित्वाद् विशेष-
25 लक्षणस्य। अक्षं प्रति गतं जन्यत्वेन प्रत्यक्षम्। तत्र यतः प्रमाणात् फलमुत्पद्यते तत् प्रमाणं प्रत्यक्षम्। तच्च फलं ज्ञानमव्यभिचारि व्यवसायात्मकञ्च भविष्यति; तथाविधफलजनकस्यैव प्रमाणत्वस्य सामान्यलक्षणे प्रतिपादितत्वात्।

## तत्र वृद्धनैयायिकमतनिरासेन रुचिकारादिमतम्

तत्र वृद्धनैयायिकास्तावदाचक्षते, व्यपदिश्यत इति व्यपदेश्यं शब्दकर्मतापन्नं ज्ञानमुच्यते। यदिन्द्रियार्थसन्निकर्षादुत्पन्नं सद्विषयनामधेयेन व्यपदिश्यते रूपज्ञानं रसज्ञानमिति तद्व्यपदेश्यं ज्ञानं प्रत्यक्षफलं मा भूदित्यव्यपदेश्यग्रहणम्।

तदिदमनुपपन्नम्, न हि नामधेयव्यपदेश्यत्वमप्रामाण्यकारणं भवति, यदि हि तद्रूपज्ञानं रसाज्ञानञ्च विषयाव्यभिचारि निःसंशयञ्च तत्कथमप्रमाणफलमुच्यते? 5 व्यभिचारादिदोषयोगे वा पदान्तरेण तत्प्रतिक्षेपात् किमव्यपदेश्यपदेन? प्रमाणफलञ्च तद्विज्ञानमिदानीं किं प्रमाणप्रभवं भवन् न प्रत्यक्षफलम्, एतत्पदप्रक्षिप्तत्वात्? नानुमानादिजन्यं तद्वैलक्षण्यात्, नास्ति किञ्चित् पञ्चमं प्रमाणम्। असङ्ग्रहोऽस्य लक्ष्यस्य लक्षणेनेति प्रज्ञाप्रमादः। तस्मादपव्याख्यानमेतदिति व्यवच्छेद्यान्तरमव्यपदेश्यपदस्य वर्णयाञ्चक्रुराचार्याः, शब्दार्थेषु स्थविरव्यवहारतो 10 व्युत्पद्यमानो जनः संशयापगमसमये संज्ञोपदेशकाद् 'अयं पनस उच्यते' इति वृद्धोदीरिताद्वाक्यात् पुरोऽवस्थितशाखादिमन्तमर्थं पनसशब्दवाच्यतया जानाति। तदस्यज्ञानमिन्द्रियजमपि न केवलेन्द्रियकरणकं भवितुमुचितम्, असति संज्ञोपदेशिनि शब्दे तदनुत्पादात्, तेन शब्देन्द्रियाभ्यां सम्भूय जनितत्वादुभयजमिदं ज्ञानं व्यपदेशाज्जातमिति व्यपदेश्यमुच्यते। तदव्यपदेश्यपदेन व्युदस्यते। न चेदं पञ्चमं 15 प्रमाणमवतरति किन्तु शाब्दमेवैतदनुमन्यते लोकः। तथा च 'कथं पुनर्जानीते भवान् पनसोऽयमि'ति पृष्टः प्रतिवक्ति 'मम देवदत्तेनाख्यातं पनसोऽयमि'ति। पुनरेवं विस्मृत्यापि ब्रवीति 'चक्षुषा मया प्रतिपन्नं पनसोऽयमुच्यते' इति। तदिन्द्रियान्वयव्यतिरेकानुविधाने सत्यपि शब्द एवात्र करणम्। अत एव सूत्रकृता शब्दलक्षणं वर्णयता नेन्द्रियानुप्रवेशप्रतिषेधाय किमपि विशेषण- 20 मुपरचितम्। 'उपदेशः शब्द' इत्येतावदेव लक्षणमभिहितम्। अतश्चेन्द्रियानुप्रवेशेऽपि शाब्दतामस्य मन्यते सूत्रकारः। इह पुनरव्यपदेश्यविशेषणपदोपादानेन शब्दानुप्रवेशप्रतिषेधान्न प्रत्यक्षफलमेतज् ज्ञानम्। तस्मादेवंविधव्यपदेश्यविज्ञानव्यवच्छेदार्थमव्यपदेश्यपदमिति।

---

शब्दकर्मतापन्नं ज्ञानमिति। 'रूपज्ञानम्' इत्यादेः शब्दस्य कर्मतामभिधेयतामापन्नम्। 25

## रुचिकारादिमते प्रवरादीनामरुचिप्रदर्शनम्

तदेतद् व्याख्यातारो नानुमन्यन्ते । यत्तूभयजं ज्ञानमव्यपदेश्यपदेन व्युदस्यते तदपि नाप्रमाणम् अप्रमाणलक्षणातीतत्वादिति । प्रमाणं भवत् कस्मिन्ननुनिविशतामिति चिन्त्यम् ।

5 ननु शाब्दमिदं ज्ञानं तद्भावानुविधानतः ।
भवत्वक्षजमप्येतत् तद्भावानुविधानतः ॥
शाब्दञ्चोभयजञ्चेति विरुद्धमभिधीयते ।
प्रमाणान्तरमेव स्यादित्थं तदपि पूर्ववत् ॥

ननु लोकः शाब्दतामस्य व्यपदिशति 'देवदत्तेनाख्यातं पनसोऽयमि'ति 10 व्यवहारादित्युक्तम् । अहो लोकवत् सः श्रद्दधानो महानुभावः । न खलु लोकस्य व्यपदेशैकशरणा वस्तुस्थितयो भवन्ति । लोको हि यथारुचि व्यपदिशति नानामुनिजनसाधारणमपि तीर्थं नन्दिकुण्डमिति किं न श्रुतवान् भवान् ? हन्त तर्हि सूत्रकाराशयमनुसरन्तः शाब्दमिदं ज्ञानं प्रतिपद्यामहे, यदयं सूत्रकारः प्रत्यक्षे शब्दानुप्रवेशव्यवच्छेदाय विशेषमिदमुपदिशति, शब्दे तु नेन्द्रियव्युदासाय 15 किञ्चिद्विशेषणमुपादत्ते । स पश्यति करणान्तरानुप्रवेशेऽपि शाब्दमेतज् ज्ञानमिति । उच्यते

मनुवत्सूत्रकारोऽपि न धर्मस्योपदेशकः ।
येनैतदनुरोधेन तस्य ब्रूयाम शाब्दताम् ॥

वस्तुस्थित्या तु निरूप्यमाणमिन्द्रियान्वयव्यतिरेकानुविधायित्वादिदं विज्ञानं 20 न प्रत्यक्षफलतामतिवर्त्तते । ततश्च व्युदस्यमानं प्रमाणान्तरमेव स्पृशेत् ।

तस्मादुभयजज्ञानव्युदासानुपपत्तितः ।
व्याख्याभङ्ग्यन्तरेणास्य पदस्येयं विधीयते ॥

## संज्ञोल्लेखिप्रत्यक्षस्य शाब्दत्वम्

असम्भवदोषव्यवच्छेदार्थमव्यपदेश्यपदोपादानम् । एवं हि परो मन्यते सति 25 लक्ष्ये लक्षणवर्णनमुचितम्, इह तु लक्ष्यमाणं प्रत्यक्षमिन्द्रियार्थसन्निकर्षोत्पन्नं नाम

---

नन्दिकुण्डमिति । तीर्थविशेषाख्या ।

न किञ्चिदस्ति, गौरित्यादिज्ञानानां शब्दावच्छिन्नवाच्यविषयत्वेन शाब्दत्वात्, इह हि विषयव्यतिरेकेण ज्ञानानामतिशयो दुरुपपादः, बोधस्वभावस्य सर्वान् प्रत्यविशिष्टत्वात्। तत्र यथा 'दण्डी'ति 'शुक्लः' इति वा प्रत्ययो विशेषणावच्छिन्नविशेष्यविषयतया सातिशयत्वमश्नुते तथा गौरित्यादिप्रत्ययोऽपि वाचकावच्छिन्नवाच्यविषयत्वात् सातिशयत्वं भजते। शब्दावच्छिन्नवाच्यविषयत्वाच्च शाब्द एष प्रत्ययः, 5 तद्व्यतिरिक्तकरणकार्यत्वानुपपत्तेः। न हीन्द्रियकरणमिदं ज्ञानं भवितुमर्हति, चक्षुषो विशेषणाविषयत्वाद् विशेष्ये च श्रोत्रस्यासामर्थ्यात्। न च युगपदिन्द्रियद्वयद्वारकमेकमुत्पद्यमानं ज्ञानं क्वचिद् दृष्टम्, तत्रैतत् स्यात्। मानसमिदं ज्ञानं सुगन्धिबन्धूकबोधवद् भविष्यति, उक्तमत्र शब्दलिङ्गादिकरणान्तरव्यापारविरतौ कार्यमुपजायमानं केवलमनःकरणमिति कल्प्यते। न। तत्सम्भवेऽपि तथा हि सति मानसमेवैकं प्रमाणं 10 स्यादिति। अस्ति चात्र शब्द एव करणम्। स हि सहस्रकिरणवदात्मानञ्च विषयञ्च प्रकाशत इति, तस्मादिन्द्रियविषयेऽपि गौरित्यादिज्ञानमुत्पद्यमानं शाब्दमेवेत्यवधार्यते।

## शाब्दिकसिद्धान्तबलेन प्रत्ययमात्रस्य शाब्दत्वसमर्थनम्

ननु सङ्केतावगमसमये गौरित्यादिशब्दः श्रुत आसीत्, स इदानीमतिक्रान्त 15 इति कथं तत्कृत एष प्रत्ययः स्यात्? उच्यते। तदानीमश्रूयमाणस्य शब्दस्य स्मृत्यारूढस्य तत्प्रत्ययहेतुत्वात्,

तच्छ्रुतावपि किं सर्वे वर्णाः प्रत्यक्षगोचराः।
विशेषः कोऽन्त्यवर्णेन गृहीतेन स्मृतेन वा॥

तदेवं स्मृतिविषयीकृतशब्दजनित एष प्रत्यय इत्यभ्युपेतव्यः। यथा परोक्षेऽ- 20 पि शब्द उच्चरित आत्मानं प्रकाशयत्यर्थञ्च तथा प्रत्यक्षे विषये स एव स्मर्यमाण आत्मानमर्थञ्च प्रकाशयतीति वाचकावच्छिन्नवाच्यप्रतिभासश्चैवंविधासु

---

यथा दण्डीति शुक्ल इति। केवलपुरुषपटप्रत्ययापेक्षयात्र सातिशयत्वम्।

ननु वाचकः स उच्यते यो वाचकत्वेन गृहीतः। सङ्केतकालभावी च वाचकत्वेन गृहीतः। स चेदानीं नास्तीत्याह ननु सङ्केतावगमसमय इति। 25

बुद्धिषु नूनमेषितव्यः, यथाह वृद्धः 'सञ्ज्ञित्वं केवलं परम्' इति। सञ्ज्ञित्वमिति-मत्वर्थीयप्रत्ययान्तादुत्पन्नो भावप्रत्ययः सम्बन्धमाचष्टे सञ्ज्ञासञ्ज्ञिसम्बन्धः सञ्ज्ञित्वमिति, कृत्तद्धितसमासेषु सम्बन्धाभिधानमित्यभियुक्तस्मरणात्, सञ्ज्ञा च शब्दः, सोऽयं शब्दविशिष्टार्थप्रतिभास उक्तो भवति। न च शब्दानुसन्धानरहितः कश्चित् प्रत्ययो दृश्यते, अनुल्लिखितशब्दकेष्वपि प्रत्ययेष्वन्ततः सामान्यशब्दसमुन्मेषसम्भवात् तदुल्लेखव्यतिरेकेण प्रकाशात्मिकायाः प्रतीतेरनुत्पादात्। तथाह भर्तृहरिः

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गृह्यते॥

## निर्विकल्पकस्य शब्दानुगमशून्यत्वादव्यपदेश्यत्वम्

तस्मात् प्रत्यक्षस्य लक्ष्यस्यासद्भावात् कस्येदं लक्षणमुपक्रान्तमिति असम्भवदोषमाशङ्क्याह सूत्रकारः अव्यपदेश्यमिति। यदिदमविदितपदपदार्थसम्बन्धस्य

---

'संज्ञित्वं केवलं परम्' इति।

'यथा रूपादयो भिन्नाः प्राक्छब्दात् स्वात्मनैव तु।
गम्यन्ते तद्वदेवेदं संज्ञित्वं केवलं परम्॥' इति परिपूर्णं वार्त्तिकम्। यद्वद्रूपादयः सम्बन्धग्रहणात् पूर्वं विविक्ततया शब्दविविक्तेन रूपेणोपलभ्यन्ते तद्वद् गोत्वाद्यपि, सविकल्पकज्ञाने केवलं संज्ञित्वं प्रतिभासत इति वार्तिकार्थः। अनेन तु 'संज्ञित्वमिति वदता 'वाचकविशिष्टवाच्यप्रतिभासः सविकल्पकज्ञानजन्य' इत्यभ्युपगतं बलाद् भवति' इत्यभिप्रायेण ज्ञापकतयोपन्यस्तम्। कृत्तद्धितसमासेषु सम्बन्धाभिधानम्। 'पाचकत्वौपगवत्वराजपुरुषत्वादौ कृत्तद्धितसमासेषु सम्बन्धाभिधानमन्यत्र रूढ्यभिन्नरूपाव्यभिचरितसम्बन्धेभ्यः' इति परिपूर्णं वार्तिकम्। तेन सत्यपि कृच्छब्दत्वे कुम्भकारत्वमित्यादौ न सम्बन्धाभिधानम्, जातिरेव तत्र 'त्व'प्रत्ययाभिधेया; रूढिशब्दत्वात् संज्ञाशब्दत्वादस्य। शुक्लगुणव्याप्तः शुक्ल इति मत्वर्थीयप्रत्ययलोपपक्षे शुक्लस्य भावः शुक्लत्वमिति न गुणसम्बन्धाभिधानम्, अपि तु द्रव्यादभेदरूपेणास्य शुक्लशब्दस्य प्रवृत्तेर्गुणमात्रवाचित्वमेव। एवं सतो भावः सत्तेत्यत्र पदार्थानां सत्तासम्बन्धेनाव्यभिचारान्न तत्सम्बन्धोऽभिधेयोऽपि तु सत्तैव।

ज्ञानमुत्पद्यते, विदितसम्बन्धस्यापि वा यत् प्रथमाक्षसन्निपातसमय एव ज्ञानमनुल्लिखितशब्दकं शब्दानुस्मरणे हेतुभूतमुपजायते तदशाब्दम्, अशब्दावच्छिन्नविषयमव्यपदेश्यमिन्द्रियार्थसन्निकर्षैककरणमविकल्पं प्रत्यक्षम्। न च शब्दकृता बुद्धीनां प्रकाशस्वभावता, स्वत एव तासामेवंरूपत्वात्, न च निर्विकल्पकसमये यत् 'किञ्चिदिदमि'त्यादिसामान्यशब्दोल्लेखः कोऽपि कैश्चिदनुभूयते। तस्माद् गौरित्यादिज्ञानानां शाब्दत्वेऽपि तथाविधस्य ज्ञानस्य लक्ष्यस्य सद्भावान्न व्यर्थं लक्षणमित्येवमसम्भवदोषनिराकरणार्थमव्यपदेश्यपदमिति,

### प्रत्यक्षस्याशाब्दत्वे रुचिकारादिसम्मतिः

तदेतद् आचार्या न क्षमन्ते। न गौरित्यादिज्ञानमिन्द्रियार्थसन्निकर्षोत्पन्नमपीदं शाब्दमिति वक्तुं युक्तम्। न चात्र शब्दावच्छिन्नार्थः प्रकाशते, तथाविधार्थग्रहणे करणाभावाद्। विशेषार्थप्रमितौ तावच्छब्दः करणम्, विशेषणभूतस्य तु शब्दस्य ग्रहणे किं करणमिति निरूप्यताम्। न श्रोत्रं, विरम्य व्यापारसंवेदनात्, सम्बन्धग्रहणादूर्ध्वञ्च स्मर्यमाणशब्दयोजनया जायमाने गौरित्यादिज्ञाने श्रोत्रंकरणमाशङ्कितुमपि न युक्तम्, नापि मनो बाह्यकरणनिरपेक्षं बाह्ये विषये धियमाधातुमलम् अन्धाद्यभावप्रसङ्गात्।

### प्रत्यक्षे शब्दस्य न करणत्वम्

ननु शब्द एव करणमित्युक्तं तत् किमपरकरणाशङ्कनेन ? मैवम् एकस्य कारकस्यैकस्यामेव क्रियायां कर्मकरणभावानुपपत्तेः। सवितृप्रकाशवदिति चेन् न। क्रियाभेदाद् यत्रासौ करणं न तत्र कर्म, यत्र वा कर्म न तत्र करणमिति। घटादिविषयप्रमितिजन्मनि करणमेव तरणिप्रकाशो न कर्म। तद्ग्रहणकाले तु कर्मैवासौ न करणम्। किं तर्हि तत्र करणमिति चेत् ? केवलमेव चक्षुरिति ब्रूमः, आलोकग्रहणे चक्षुषः प्रकाशान्तरनिरपेक्षत्वात्। कथमेवमिति चेद्। अपर्यनुयोज्या हि वस्तुशक्तिः। घटादिग्रहणे चक्षुरुद्द्योतमपेक्षते न उद्द्योतग्रहण इति कमनुयुञ्ज्महे। सोऽयं सूर्यप्रकाशः प्रकाशान्तरनिरपेक्षचक्षुरिन्द्रियप्रथमगृहीतः चिरमवतिष्ठमानस्तदिन्द्रियग्राह्य एकविषये गृह्यमाणे करणतामुपयातीति युक्तम्। शब्दस्तु क्षणिकः श्रोत्रेन्द्रियग्राह्यस्तदितरपरिच्छेद्ये विषये तदवगमक्रियायां करणीभूय भूयस्तस्यामेव क्रियायां कथमिव कर्मभावमनुभवेत्। शब्दो हि धूमादिवदुपाय एव नोपेयः। स

उपायत्वात् प्रथमं गृह्यतां नाम न उपेयग्रहणकाले पुनर्ग्रहणमर्हति धूमवदेवेति । एवं स्मर्यमाणोऽपि शब्दो यत्रार्थप्रतीतिकारणम्, तत्रापि प्रथमं शब्दस्मरणं ततः शब्दार्थ-सम्प्रत्ययो भवति, नतरां तत्रार्थप्रतीतिवेलायां शब्दग्रहणं सम्भाव्यते । तस्मान्नास्ति वाचकविशेषितवाच्यप्रतिभासः । अपि च गौरित्यादिज्ञानमिन्द्रियार्थसन्निकर्षा-
5 न्वयव्यतिरेकानुविधायि प्रसभं तत्कथं शाब्दमित्युच्यते ?

शब्दस्मरणसापेक्षं यस्योत्पादकमिन्द्रियम् ।
तदेव यदि ते शाब्दमहो नैयायिको भवान् ॥

ननु शब्दावच्छिन्नमर्थं न चक्षुःश्रोत्रयोरन्यतरदपि करणं ग्रहीतुमल-मित्युक्तम्, भोः साधो चक्षुरेवैनं ग्रहीष्यतीति कथं न ब्रूषे ?

10 ननु नाविषये युक्तमिन्द्रियस्य प्रवर्त्तनम् ।
तेन शब्दविशिष्टार्थज्ञानं नेन्द्रियजं ब्रुवे ॥

मरीचिषु जलज्ञानं कथमिन्द्रियजं तव ।
तत्रापि हि न तोयेन सन्निकर्षोऽस्ति चक्षुषः ॥

ननु च स्मृत्युपारूढमुदकं तत्र गृह्यते ।
15 इहापि स्मृत्युपारूढः शब्दः कस्मान्न गृह्यते ॥

ननु शब्दो न नेत्रस्य कदाचिदपि गोचरः ।
असन्निहितमप्यम्बु किं वा भवति गोचरः ॥

नन्वेकेन्द्रियवादः स्याच्चक्षुषा शब्दवेदने ।
अत्रापि सर्वबोधः स्यादसन्निहितवेदने ॥

20 ननु च मरीचिजलज्ञानं भ्रान्तमिति कथमिह दृष्टान्तीक्रियते ? कथमस्य भ्रान्तत्वम् ? किमनिन्द्रियजत्वादुत व्यभिचारित्वात् । तत्रानिन्द्रियजत्वेनास्य भ्रान्त-तायामिन्द्रियार्थसन्निकर्षोत्पन्नपदेनैव निरासादव्यभिचारिपदमनुपादेयमिति । तदु-

---

भोः साधो चक्षुरेवैनं ग्रहीष्यतीति कथं न ब्रूष इति । अनेन वरं चाक्षुषत्व-मस्याभ्युपगम्यतां न त्वत्यन्तासम्बध्यमानं शाब्दत्वमिति । प्रौढवादितया स्वयं शब्द-
25 विशिष्टार्थप्रतिभासम्—अभ्युपगमेनापि प्रतिपादयति ।

पादानात्तु व्यभिचारित्वेनास्य भ्रान्तत्वमिति नूनमिदमिन्द्रियजमसन्निहितसलिलज्ञानमभ्युपगन्तव्यम् ।

यथा चाविषये तस्मिन्नीरे नयनजा मतिः ।
तथा वाचकसंस्पृष्टे वाच्ये किमिति नेष्यते ॥
यथा च तव कालादि नीरूपमपि चाक्षुषम् । 5
तथा शब्दानुरक्तोऽपि किमित्यर्थो न चाक्षुषः ॥

एवं हीन्द्रियव्यतिरेकानुविधानमत्र न बाधितं भविष्यति ।

ननु चाक्षुषतां शब्दे न जीवन् वक्तुमुत्सहे ।
त्यजैनं वाचकोपेतवाच्यावगमदुर्ग्रहम् ॥
अपि चामुष्य शाब्दत्वे सम्बन्धग्रहणं कथम् । 10
न चागृहीतसम्बन्धः शब्दो भवति वाचकः ॥
निर्विकल्पकविज्ञानविषये न च तद्ग्रहः ।

## सविकल्पकस्यापि शाब्दत्वखण्डनम्

शाब्दपक्षे तु निक्षिप्तं भवता सविकल्पकम् ॥
सम्बन्धः शक्यते बोद्धुं न च मानान्तराद् विना । 15
शाब्दज्ञानेन तद्बोधे भवेदन्योन्यसंश्रयम् ॥
न च शब्दोपरक्तेऽर्थे सम्बन्धं बुध्यते जनः ।
गोशब्दवाच्यो गोशब्द इति हि ग्रहणं भवेत् ॥

वाच्यस्य हि गवादेर्गोशब्दविशेषितस्य वाच्यत्वाद् वाच्योऽर्थ इव गोशब्दोऽपि वाच्यतामवलम्बते । 20

यदि च स्वानुरागेण वाचकाद् वाच्यवेदनम् ।
लिङ्गादपि भवेद् बुद्धिः स्वावच्छेदेन लिङ्गिनि ॥

---

निर्विकल्पकविज्ञानविषये न च तद्ग्रहः। निर्विकल्पके शब्दविशिष्टस्यार्थस्य तद्वाच्यस्य अप्रतिभासात्, चक्षुषः शब्दाविषयत्वात्। शाब्दज्ञानेन तद्बोध इति। शब्दात् तदनुरक्तार्थप्रत्यये तेनार्थेन शब्दस्य सम्बन्धग्रहणम्, गृहीतसम्बन्धश्च शब्दोऽर्थं प्रत्याययतीतीतरेतराश्रयता। 25

अथ धूमान्वितत्वेन न वह्निरवगम्यते ।
इहापि शब्दयोगेन गवादिर्नैव गम्यते ।।
न चास्ति वस्तुनो धर्मो वाच्यता नाम कश्चन ।
यदि स्यान्निर्विकल्पेऽपि प्रतिभासेत रूपवत् ।।
अर्थासंस्पर्शिनः शब्दान् कथयन् दुष्टसौगतः ।
प्रत्यक्षास्त्रेण हन्तव्यः स कथं हन्यते त्वया ।।
प्रत्यक्षविषये वृत्तिः शब्दानां भवतः कुतः ।
तेषां यद्विषये वृत्तिस्तद्धि शाब्दीकृतं त्वया ।।

अपि च विषयभेदेन प्रतिभासभेदो भवतीति दुराशया शब्दविशिष्टमर्थं निर्विकल्पात् सविकल्पस्य विषयमधिकं पश्यति। भवान् अनेन वर्त्मना अवतरन् परं शब्दाध्यासं न पश्यतीति कोऽयं व्यामोहः ? स त्वं वचनीयोऽसि संवृत्तः 'मधु पश्यसि दुर्बुद्धे प्रपातं नैव पश्यसि' इति ।

तस्माद्गौरिति विज्ञानं प्रत्यक्षमवधार्यताम् ।
शब्दस्मरणसापेक्षचक्षुरिन्द्रियनिर्मितम् ।।
मानसत्वं तु यत्तस्य नेष्यते युक्तमेव तत् ।
तद्भावानुविधायित्वाद् बाह्येन्द्रियजमेव तत् ।।

---

**प्रत्यक्षास्त्रेण हन्तव्य** इति । अयं भावः । 'यदि अर्थासंस्पर्शिनः शब्दास्तत्प्रत्यक्षमप्यर्थासंस्पर्शि प्राप्तम्, तत्समानविषयत्वाच्छब्दानाम्' इत्युक्ते प्रत्यक्षस्यार्थासंस्पर्शित्वानभ्युपगमान्निवर्तेत बौद्धः । तत्र निर्विकल्पकं तावत् समानविषयं न भवति वाच्यताविशिष्टार्थप्रतिभासस्य भवन्मते शब्दजत्वात्, तादृशस्य चार्थस्य निर्विकल्पकाविषयत्वात्; सविकल्पकञ्च न प्रत्यक्षं तवेति ।

**अनेन वर्त्मना अवतरन्तं शब्दाध्यासमिति**। विलसति गौरयमित्यादिके शब्दोल्लेखेनोत्पद्यमाने ज्ञाने सामान्यादयोऽवभासन्ते, असति तु शब्दोल्लेखेन ज्ञाने नावभासन्ते । अतः शब्दवशादवभासमानास्ते कथं न शब्दाकाराः स्युः । अतः शब्दाकारा एवामी सामान्यादयोऽर्था अध्यस्ताः प्रतिभासन्ते न पुनर्बहिः सन्ति । यथा रक्तः स्फटिकमणिरिति प्रतीतिः सति लाक्षासन्निधाने समुत्पद्यतेऽन्यथा नेति तद्वशाल्लाक्षा-

## विषयभेदेन प्रतिभासभेदे भाष्यविवरणकर्तृप्रवरसम्मतिः

अत्र पुनः प्रवराः प्राहुः, नन्वेवं गौरित्यादिबोधेषु वाचकावच्छिन्नवाच्यप्रतिभासे सर्वप्रकारमपाक्रियमाणे प्रथमाक्षसंन्निपातसमयमासादितसद्भावनिर्विकल्पकवेदनवैलक्षण्यं कथमेषां भवेत् ? न हि विषयातिशयमन्तरेण प्रतिभासातिशयो भवितुमर्हति, 'दण्डी'ति दण्डविशिष्टः पुरुषः प्रतिभासते, इतरथा न केवलपुरुषप्रतीतेरेषा प्रतीतिर्विशिष्यते, उभयप्रतिभासेऽपि न दण्डपुरुषाविति प्रतीतेः, विशेषणविशेष्यभावस्य नियामकत्वात् । 5

पूर्वापरचिरक्षिप्रक्रमाद्यवगमेष्वपि ।
दिक्कालादिविशिष्टोऽर्थः स्फुरत्यतिशयग्रहात् ॥
प्रत्यक्षः किं स कालादिः प्रतीतिं पृच्छ किं मया । 10
गृह्यते तद्विशिष्टोऽर्थः स च नेत्येतदद्भुतम् ॥
एतेन समवायेऽपि प्रत्यक्षत्वं प्रकाशितम् ।
इहेति तन्तुसम्बद्धपटप्रत्ययदर्शनात् ॥

'अयं पटः' इति प्रत्ययाद् 'इह तन्तुषु पटः' इति विलक्षण एष प्रत्ययस्तन्तुपटसम्बन्धस्य विशेषणस्याप्रत्यक्षतायां न केवलपटप्रत्ययाद् विशिष्येतेति । अथ मतम् 15 उपायभेदात् प्रतीतिभेदो भवति दूराविदूरदेशव्यवस्थितस्थाण्वादिपदार्थप्रतीतिवत् संस्कृतासंस्कृताक्षकरणविषयबोधवद्वेति । तदसाम्प्रतम्, उपायभेदेऽपि तद्भेदासिद्धेः । उपायो बुद्धावतिशयमादधाति न विषये, विषयावगतिसमये च न बुद्धिरवभातीति नैयायिकाः । तदयमतिशयो यदधिकरणः सा न प्रतिभासते बुद्धिः, यच्च तदानीमव-

---

रूपाध्यारोपः स्फटिके कल्प्यते । एवं शब्दवशात् समुत्पद्यमानानां सामान्यादिप्रत्ययानां 20 शब्दाकारसामान्यादिरूपाध्यारोपोऽर्थे कल्प्यतामिति पर्यनुयुक्तैर्भवद्भिरिदमेवोत्तरं वक्तुम् शक्यम्, सविकल्पके ज्ञाने शब्दरहितस्यार्थस्यावभासनम्, शब्दस्तु तत्र चक्षुरादिवदुपाय एव, न तु सोऽपि तत्र प्रतिभासतेऽतः प्रतिभासमानानां सामान्यादीनां कथमप्रतिभासमानशब्दाकारताकल्पना सम्भवतीति । तदिदानीमित्थं शब्दविशिष्टार्थप्रतिभासेऽङ्गीक्रियमाणे विघटते । कथम् ? अर्थवच्छब्दस्यापि यदि प्रतिभासोऽभ्युपगम्यते तदानीं 25 शब्दस्याप्रतिभासमानत्वे यत् शब्दाकारत्वनिराकरणं सामान्यादीनां कृतं तन्नैव कर्तुं

भासते विषयस्तत्रातिशयो नास्ति, दृश्यते चातिशयसंवेदनमिति सङ्कटः पन्थाः। न च दूरान्निदूरदेशवर्त्तिनि पदार्थे प्रतीतिरुपायभेदाद् भिद्यते, सापि हि विषय-भेदादेव भिद्यते।

दूराद्धि वस्तुसामान्यं धर्ममात्रोपलक्षितम्।
5 अदूरतस्तु विस्पष्टविशेषमवसीयते॥

यथा माघेन वर्णितम्

चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम्।
विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः॥

## रुचिकारादिमते उपायभेदात् प्रतिभासभेदसमर्थनम्

10 क्रियान्तराणां वैचित्र्ये यद्वा तद्वाऽस्तु कारणम्।
भेदो ज्ञानक्रियायास्तु कर्मभेदनिबन्धनः॥

तदेतदाचार्याः प्रतिसमादधते न विषयभेदादेव प्रतिभासभेदः। किन्तूपाय-भेदाद्भवत्येव। यच्च चोदितं विषयप्रतिभासकाले तत्प्रतिभासाप्रतिभासादतिशय-वचने सङ्कटः पन्था इति तदविदितनैयायिकदर्शनस्यैव चोद्यम्। ज्ञानोत्पाद एव
15 विषयस्य प्रत्यक्षतेति नो दर्शनम्, न ज्ञानग्रहणमिति। तत्र यथा पुरुष इति निरति-शयज्ञानमात्रोत्पादे तावन्मात्रविषयप्रत्यक्षता भवति न तत्र ज्ञानं प्रकाशते, अगृह्य-माणेऽपि ज्ञाने विषय एव प्रतिभासते, एवं 'दण्डी'ति 'शुक्लवासा' इति विशेषण-

---

शक्यत इति। पुनरनेन मार्गेणावतरन् केन वार्यते शब्दाध्यास इति। एवञ्चेदं शब्दा-ध्यासपक्षावतरणं विश्वरूपटीकातो व्यपदेश्यपदं व्याचक्षाणैः भट्टश्रीशशाङ्कधरपादै-
20 र्व्याख्यातम्। ग्रन्थकारस्त्वपवर्गाह्निके स्वाभिप्रायेण शब्दाध्यासस्वरूपं प्रपञ्चयिष्यति। शब्दाकारस्य सामान्यादेरर्थे न्यासः समारोपः शब्दाध्यासः।

चयस्त्विषामिति। विभुर्हरिरम्बरात् खादवतरन्तं मुनिं क्रमान्नारद इत्यनेन विशेषेणाबोधि बुद्धवान्। यः पूर्वं दूरतया स्पष्टग्रहणाभावे सति त्विषां चयस्तेजसां पिण्ड इत्यवधारितः, पुनः किञ्चिन्निकटतया शरीरितया ज्ञाताकारम्, ततोऽपि नैकट्यादवयव-

ज्ञानाभ्युपायातिशयवशात् सातिशयप्रत्ययजनने तद्ग्रहणे स एव विषयोऽवभासत इति कियानेष सङ्कटः पन्थाः ? तथा च 'दण्डीति' पुरुषप्रवणैव मतिः, को दण्डी ? पुरुषः, कः पुरुषः ? दण्डीति, सामानाधिकरण्येन निःसन्धिबन्धनस्य पुंस एव प्रतिभासात् । एवं दण्डिनं भोजय, दण्डिने देहीति भोजनादिकार्ययोगित्वं न दण्डे, अपि तु पुंस्येव । 5

ननु 'दण्डी पर्वतमारोहती'ति दण्डेऽपि कार्यान्वयो दृश्यते लोके, वेदेऽपि 'दण्डी मैत्रावरुणः प्रैषानन्वाहेति' प्रैषानुवचनस्य वचनान्तरतः प्राप्तेर्दण्डविधानार्थमेतद्वाक्यं भवति । यथा 'लोहितोष्णीषा ऋत्विजः प्रचरन्ती'ति श्येनादौ ऋत्विजां प्रकृतिवद्भावेन प्राप्तानां लोहितोष्णीषविधानमात्रमेतद्भवति ? उच्यते । भवत्वेवं, किन्तु दण्डमवलम्ब्य पुरुषः पर्वतमारोहति, न दण्डो निश्चेतनः । वेदेऽपि दण्डपाणिः पुरुषः प्रैषाननुभाषते न दण्डः । न लोहिता उष्णीषाः प्रचरन्ति किन्तु अन्यपदार्थीभूता ऋत्विज एवेति सर्वत्र विशेष्यप्रवणैव मतिः । उभयप्रतिभाने तु दण्डपुरुषाविति स्यान्न दण्डीति, विशेषणविशेष्यभावस्य नियामकत्वादिति चेत् ? सेयं विशेष्यप्रवणा मतिरुक्तैव भवति, विशेषणस्य विशेषणत्वेनैवोपसर्जनत्वाद् दण्डोऽस्यास्तीति पुरुष एवोच्यते न दण्डपुरुषौ । एवं पूर्वापरादिप्रत्ययाश्चिरक्षिप्रादिप्रत्यया इह तन्तुषु पट इत्यादिप्रत्ययाश्च दिक्कालसमवायग्राहिणः, त इमे दिक्कालसमवायाः सामग्र्यन्तर्गताः सन्तः प्रत्ययातिशयमादधति, न तद्विषये भवन्ति पटादिद्रव्यवत् । 15

---

विभागावबोधात् पुंस्त्वेन निर्ज्ञातम्, ततोऽप्यतिनैकट्यान्नारद इत्येवमबोधि । स एव विषयोऽवभासते अविशिष्ट एव भासत इत्यर्थः । निःसन्धिबन्धनस्य शुद्धपुरुषप्रत्ययप्रतिभास्यादविभक्तस्वरूपस्य । 20

प्रैषानुवचनस्य वचनान्तरतः प्राप्तेरिति । 'मैत्रावरुणः प्रैष्यति चानु चाऽऽह' इति वचनान्तरेण यत् प्राप्तं प्रैषानुवचनं तदनूद्य दण्डित्वं विधीयते, यत् प्रैषानुवचनं मैत्रावरुणेनर्त्विजा कर्तव्यं तद् दण्डिना यजमानतः प्राप्तदण्डहस्तेन कर्तव्यम् । पशुयागेऽध्वर्युणा अग्नये छागस्य वपाया मेदसः प्रेष्येति, एवं प्रेषितो मैत्रावरुणो यत् 'होतर्यज' इति प्रतिप्रेषणं करोति तत् प्रैषानुवचनम्, तदेव 'प्रैष्यति चानु चाऽऽह' इत्यत्र प्रैष्यतीत्यनेन विहितम्, न केवलमेवंभूतं प्रैषानुवचनमसौ करोतीति यावदनु चाह अन्वाह च अनुवाक्यमप्यसावेव पठतीत्यर्थः । प्रकृतिवद्भावेन प्राप्तानामिति । 25

एवं पतनाद्यनुमेयगुरुत्वादिकारणभेदजनिता 'गुरुः पाषाण' इत्यादिप्रत्ययाः परोक्ष-विशेषणं विशेष्यमवलम्बन्त इत्यलं विस्तरेण।

तस्माद् गौरित्यादिज्ञानं न वाचकावच्छिन्नवाक्यविषयम्। अतश्च न शाब्दं तत्, अपि तु सुस्पष्टं प्रत्यक्षमेव। तस्मिंश्च लक्षिते सति लक्षणवैयर्थ्यशङ्काकर-णाभावान्नासम्भवदोषनिराकारणार्थमव्यपदेश्यपदम्।

## रुचिकारादिमतेऽव्यपदेश्यपदावश्यकता

किमर्थं तर्हीदमस्तु ? उक्तमाचार्यैः उभयजज्ञानव्यवच्छेदार्थमिति। ननु तदपि प्रत्यक्षमेवेति अनपोह्यमुक्तम्। पुरोऽवस्थितगवादिपदार्थस्वरूपमात्रग्रहण-निष्ठितसामर्थ्यमत्र प्रत्यक्षम्, गोशब्दवाच्यतायान्तु संज्ञाकर्मोपदेशी शब्द एव प्रमाणम्। यद्यपि शब्दार्थसम्बन्धपरिच्छेदे गत्यन्तरमपि सम्भवति तथापि यत्र तावत् संज्ञिनं निर्दिश्य सञ्ज्ञा वृद्धैरुपदिश्यते 'गोशब्दवाच्योऽयं' 'पनसशब्दवाच्योऽ-यमि'ति तत्र तद्वाच्यतापरिच्छेदे स एव कारणम्।

अत एव च लोकोऽपि शाब्दत्वमभिमन्यते।
शब्दोपरचितापूर्वज्ञानातिशयतोषितः॥
तच्छब्दवाच्यताज्ञप्तिर्विना संज्ञोपदेशिनः।
शब्दान्नेति स एवात्र सत्यप्यक्षे प्रकर्षभाक्॥
अतः सूत्रकृताप्यत्र शब्दातिशयदर्शनाद्।
व्यधायि तद्व्यवच्छेदो न तु धर्मोपदेशिना॥

तस्मादुभयजज्ञानव्यवच्छेदार्थमेवेदं पदमिति।

## तत्र केषाञ्चित् पूर्वपक्षः

अन्ये मन्यन्ते यदि सङ्केतग्रहणकाले भाविनः संज्ञोपदेशकवचनजनित-स्योभयजज्ञानस्य व्यवच्छेदकमिदं वर्ण्यते पदम्, तदा तद्व्यवहारकालेऽपिः

---

सोमप्रकृतित्वाद् एवंभूतानामव्यक्तयागानां श्येनादीनां प्रकृति वद्भावात् षोडश ऋत्विज प्राप्ता एव; तान् प्राप्ताननूद्य लोहितोष्णीषता तेषां विधीयत इति।

संज्ञाकर्मोपदेशीति। संज्ञासंज्ञिसम्बन्धक्रिया संज्ञाकर्म। गत्यन्तरमपि सम्भ-वतीति। यत्र वृद्धोक्तं वाक्यमुपलभ्य परः प्रवर्ततेऽन्यश्च तटस्थ एव शब्दार्थे व्युत्पद्यते 'अमुष्माच्छब्दादवगतादत्रायं प्रवृत्तः, तन्नूनमस्यायमर्थ' इत्यादिप्रकारेण।

यदयं गौरिति सङ्केतग्रहणकालानुभूतदेवदत्ताद्युदीरितसंज्ञोपदेशकवचनस्मरणपूर्वकं विज्ञानमुत्पद्यते तदप्युभयजमेवेति कथमनेन न व्युदस्यते ?

ननु तत्र शब्दस्मरणं कारणं न शब्दः, सङ्केतकालेऽपि शब्दस्मरणमेव कारणम्। न हि क्रमभाविनो वर्णा युगपदनुभवितुं पार्यन्ते, अन्त्यवर्णे तु गृह्यमाणे स्मर्यमाणे वा किं शब्दव्यापारो विशिष्यते ? 5

ननु व्यवहारकाले गवादिनामधेयपदमात्रमेव स्मर्यमाणमिन्द्रियेण सह सविकल्पप्रत्ययोदये व्याप्रियते। सङ्केतकाले तु संज्ञोपदेशिवृद्धवाक्यमिति चेत्, मैवम्। व्यवहारकालेऽपि संज्ञोपदेशकं वृद्धवाक्यमेव स्मर्यते तदस्मरणे तच्छब्दवाच्यतानवगमात्। 'अस्य गौरिति नाम देवदत्तेनोपदिष्टमासीदि' त्येवमनुस्मृत्य गोशब्दवाच्यतयैवं व्यवहरतीति वाक्यस्मरणजमेवेदं ज्ञानम्। 10

तस्मादस्यापि तद्वाक्यं संज्ञाकर्मोपदेशकम्।
हेतुतामुपयातीति शाब्दमेतदपीष्यताम्॥
एवमस्त्विति चेच्छान्तमेवं सति तपस्विनाम्।
नैयायिकानामुत्पन्नं प्रत्यक्षं सविकल्पकम्॥
यत्र मार्गान्तरेणापि सङ्केतज्ञानसम्भवः। 15
तत्राप्यनेन न्यायेन शाब्दता न निवर्तते॥

नैयायिकानाञ्च सविकल्पप्रत्यक्षमयाः प्राणाः, तस्मान्नोभयजस्य शाब्दत्वं ज्ञानस्य वक्तव्यम्। सम्बन्धाधिगमस्तु नानाप्रमाणकः। तत्र स्वे स्वे विषये तत्तत् प्रमाणं प्रवर्तते, यथाह भट्टः "सम्बन्धस्त्रिप्रमाणक" इति। तस्मान्नैकस्य शब्दस्य भार आरोपणीयः। प्रत्यक्षन्तु सङ्केतग्रहणकालेऽपि स्वविषयग्राहकम्। इदानीमपि 20 व्यवहारकालेऽपि तत्स्वविषयग्राहकमिति नोभयजज्ञानं व्यवच्छेदपक्षो निरवद्यः।

---

एवमस्त्विति चेच्छान्तमिति। शान्तम्, मा भूदेवम्, अमङ्गलमेतदित्यर्थः। तत्राप्यनेन न्यायेन शाब्दता न निवर्तत इति। तत्रापि यस्मादन्यं वृद्धं प्रत्युदीरिताद् वृद्धवाक्याद् यत्रार्थे तस्य व्युत्पत्तिर्ज्ञाता, तदर्थग्रहणकाले तस्य वाक्यस्य स्मरणात्।

सम्बन्धस्त्रिप्रमाणक इति। 25

शब्दवृद्धाभिधेयांस्तु प्रत्यक्षेणैव पश्यति।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया॥

तस्माद् वरं जरन्नैयायिककथितशब्दकर्मतापन्नज्ञानव्यवच्छेद एवाश्रीयताम्, तत्र तावत्कर्मणि कृत्ये कृते व्यपदेश्यशब्दो यथार्थतरो भवति ।

ननु तत्र चोदितं न तादृशं ज्ञानमप्रमाणम्, न पञ्चमं प्रमाणमिति । सत्यम् । अयन्तु तेषामाशयः, रूपादिविषयग्रहणाभिमुखं हि तदक्षजं ज्ञानं प्रमाणं वा 5 फलं वोच्यते । यदा तु तदेव शब्देनोच्यते रूपज्ञानं रसज्ञानमिति तदा रूपादिज्ञानविषयग्रहणव्यापारलभ्यां प्रमाणतामपहाय शब्दकर्मतापत्तिकृतां प्रमेयतामेवावलम्बत इति न तस्यां दशायां तत्प्रमाणमिति कुतः पञ्चमप्रमाणप्रसङ्ग इति ।

## केषाञ्चिदपरेषां मतेऽव्यपदेश्यपदसार्थक्यम्

अपर आह, सविकल्पकस्य शब्दसङ्कल्पकस्य शब्दसंसर्गसापेक्षजन्मनः 10 प्रत्यक्षज्ञानस्य शाब्दतां पूर्ववदाशङ्क्य तस्यैवाशाब्दतां दर्शयति अव्यपदेश्यपदेन सूत्रकारः, प्रत्यक्षमेव तज्ज्ञानमिन्द्रियान्वयव्यतिरेकानुविधायित्वादव्यपदेश्यमशाब्दमित्यर्थः ।

स्पष्टत्वाद् वाचकाभावादिन्द्रियानुविधानतः ।
लोकस्य सम्मतत्वाच्च प्रत्यक्षमिदमिष्यते ॥

15 शब्दानुस्मृतिजत्वेऽपि न शाब्दं ज्ञानमीदृशम् ।
शब्दस्मृतिः सहायः स्यादिन्द्रियस्य प्रदीपवत् ॥

नन्वेवं सविकल्पस्य प्रत्यक्षत्वे प्रसाधिते ।
नेदानीं संगृहीतं स्यात्प्रत्यक्षं निर्विकल्पकम् ॥

यत्तु शब्दानुवेधेन शाब्दत्वं सविकल्पके ।
20 कश्चिदाशङ्कते तस्य प्रतिशब्दोऽयमुच्यते ॥

---

अन्यथानुपपत्त्या च वेत्ति शक्तिं द्वयाश्रिताम् ।
अर्थापत्त्यावबुध्यन्ते सम्बन्धं त्रिप्रमाणकम् ॥ इति ॥

चेष्टया प्रवृत्तिनिवृत्तिलक्षणया । अनुमानेनानुमानभूतया । प्रमाणत्रयावगम्यत्वेऽपि सम्बन्धस्यार्थापत्तेः साक्षाद् व्यापारादितरयोस्तदुपकारत्वेन 'अर्थापत्त्यावबुध्यन्ते' 25 इत्युक्तम् ।

यत्र शब्दानुवेधेऽपि प्रत्यक्षं ज्ञानमिष्यते ।
तत्र तत्स्पर्शशून्यस्य तथात्वे का विचारणा ॥
निर्विकल्पकवत्तस्मात् प्रत्यक्षं सविकल्पकम् ।
समग्रहीच्च तदिदं पदेनानेन सूत्रकृत् ॥
इत्याचार्यमतानीह दर्शितानि यथागमम् । 5
यदेभ्यः सत्यमाभाति सभ्यास्तदवलम्ब्यताम् ॥

## अव्यभिचारिपदसार्थक्यम्

अव्यभिचारिग्रहणं व्यभिचारिज्ञानव्यवच्छेदार्थम् । यथा ग्रीष्मे तपति ललाटन्तपे तपने तन्मरीचिषु चतुरमूषरभुवमभिहत्य समुत्फलितेषु तरङ्गाकार-धारिषु यद् वारिधिज्ञानं तदतस्मिंस्तदिति ग्रहणाद् व्यभिचारि भवति तदनेन 10 पदेन व्यवच्छिद्यते न तत्प्रत्यक्षमिति । तत्र च निर्विकल्पकमपि प्रथमनयनसन्नि-पातजज्ञानमुदकसविकल्पकज्ञानजनकमुदकग्राह्येव न यथा, तथा तथागताः कथ यन्ति मरीचिविषयमविकल्पकं ज्ञानमुदकसविकल्पकजननादप्रमाणमिति निर्वि-कल्पावस्थायामविचारयत एवं प्रथमोन्मीलितचक्षुषो झगिति सलिलप्रतिभासात्- । अथवा वाचकोल्लेखपूर्विका अपि संविदः नैवेन्द्रियार्थजन्यत्वं जहतीत्युपपादितम्, 15 तस्मात् सविकल्पकमविकल्पकं वा यदतस्मिंस्तदिति ज्ञानमुत्पद्यते तद्व्यभिचारि, तच्चेह व्यावर्त्यमिति ।

ननु मरीचिषु जलज्ञानमविद्यमानसलिलावभासित्वादनिन्द्रियार्थसन्निकर्ष-जमतश्चेन्द्रियार्थसन्निकर्षोत्पन्नपदेन तद्व्युदाससिद्धेः, किमव्यभिचारिपदेन ? नैतदेवम्, 20

तस्येन्द्रियार्थजन्यत्वं सिद्धं तद्भावभावतः ।
न ह्यनुन्मीलिताक्षस्य मरौ सलिलवेदनम् ॥
अर्थोऽपि जनकस्तस्य विद्यते नासतः प्रथा ।
तदालम्बनचिन्तां तु त्रिधाचार्याः प्रचक्रिरे ॥
कैश्चिदालम्बनं तस्मिन्नुक्तं सूर्य्यमरीचयः । 25
निगूहितनिजाकाराः सलिलाकारधारिणः ॥

तत्र तरङ्गादिसामान्यधर्मग्रहणे सति न स्थाणुपुरुषवदुभयविशेषाः, न च सन्निहितमरीचिविशेषाः स्मरणपथमवतरन्ति किन्तु पूर्वोपलब्धविरुद्धसलिलवर्तिनो

विशेषाः, तत्स्मरणाच्च स्थगितेषु स्वविशेषेषु मरीचयः स्वरूपमुपदर्शयितुमशक्नुवन्तस्तोयरूपेणावभासन्त ।

### आलम्बनपदार्थविचारः

अन्ये त्वालम्बनं प्राहुः पुरोऽवस्थितधर्मिणः ।
5 सादृश्यदर्शनोद्भूतस्मृत्युपस्थापितं पयः ।।

यत्र किल ज्ञाने यद्रूपमुपप्लवते तत्तस्यालम्बनमुच्यते, न सन्निहितम् । न चैकान्तासतः खपुष्पादेः ख्यातिरवकल्पत इति देशान्तरादौ विद्यमानमेव सलिलं सदृशदर्शनप्रबुद्धसंस्कारोपजनितस्मरणोपारूढम् इहावलम्बनी भवति ।

अन्यदालम्बनञ्चान्यत् प्रतिभातीति केचन ।
10 आलम्बनं दीधितयस्तोयञ्च प्रतिभासते ।।

कर्तृकरणव्यतिरिक्तं ज्ञानजनकमालम्बनमुच्यत इति न परमाण्वादौ प्रसक्तिरिति । तदिदं पक्षत्रयमप्युपरिष्टान्निपुणतरं निरूपयिष्यते । तदेवं बाह्येन्द्रियार्थान्वयव्यतिरेकानुविधायिनां विभ्रमाणामिन्द्रियार्थसन्निकर्षोत्पन्नपदेन निरसितुमशक्यत्वाद् युक्तमव्यभिचारिपदोपादानम् ।

### 15 विभ्रमवारणार्थमव्यभिचारिपदमिति शङ्कायाः समाधानम्

यत्तु मानसा विभ्रमा बाह्येन्द्रियानपेक्षजन्मानः, तेषां सत्यमिष्यत एवेन्द्रियार्थसन्निकर्षपदेन पर्युदसनमिति न तदर्थमव्यभिचारिपदोपादानम् । तद्यथा

विरहोद्दीपितोद्दामकामाकुलितदृष्टयः ।
दूरस्थामपि पश्यन्ति कान्तामन्तिकवर्त्तिनीम् ।।

20 नन्वेवम्प्रायेषु निरालम्बनेषु विभ्रमेषु कुतस्त्य आकारः प्रतिभाति ? उच्यते

आकारः स्मृत्युपारूढः प्रायेण स्फुरति भ्रमे ।
स्मृतेस्तु कारणं किञ्चित् कदाचिद्भवति क्वचित् ।।

---

कर्तृकरणव्यतिरिक्तं ज्ञानजनकमिति । ज्ञानजन्मनि कारकत्रयव्यापारोपलम्भाच्छुक्तिकायाः कर्तृकरणरूपतानन्वयादवश्यं कर्मतया विषयत्वेनालम्बनत्वेनान्वयो
25 वाच्य इति ।

क्वचित् सदृशविज्ञानं कामशोकादयः क्वचित्।
क्वचित् कुदर्शनाभ्यासश्चक्षुषस्तिमिरं क्वचित्॥
क्वचिन्निद्रा क्वचिच्चिन्ता धातूनां विकृतिः क्वचित्।
अलक्ष्यमाणे तद्धेतावदृष्टं स्मृतिकारणम्॥
बालस्येन्दुद्वयज्ञानमस्ति नास्तीति वेत्ति कः। 5
अस्तित्वेऽपि स्मृतौ हेतुमदृष्टं तस्य मन्वते॥
नूनं नियमसिद्ध्यर्थं जनकस्यावशासनम्।
न चैकान्तासतो दृष्टा ज्ञानोत्पादनयोग्यता॥

---

**क्वचित् सदृशविज्ञानम्** इति। यथा मरीचिषु जलज्ञाने। **कामशोकादयः** पुरोऽवस्थितस्त्र्यादिदर्शने। 10

**कुदर्शनाभ्यासो** बौद्धादिदर्शनाभ्यास आत्मादौ नास्तिताज्ञाने। **चक्षुषस्तिमिरं** द्विचन्द्रादिज्ञाने। **निद्रा** स्वप्नज्ञाने। **चिन्ता** यमर्थं चिन्तयति तत् प्रत्यक्षतया पुरोऽवस्थितमिव गृह्णाति। **धातूनां** पित्तादीनां **विकृतिः** शर्करादेस्तिक्ततादिज्ञाने। ननु जाततैमिरिकस्येहजन्मनि घटादिगतस्य द्वित्वस्याऽननुभवात् स्मरणाभावाद् द्विचन्द्रादिज्ञानानुत्पाद इत्याशङ्क्याह—**अलक्ष्यमाणे तद्धेताव्** इति। इदमेवोत्तरश्लोकेन 'बालस्येन्दुद्वयज्ञानमस्ति नास्ति' इत्यादिना व्यनक्ति। 15 यद्यपीहजन्मनि नानुभवस्तथापि जन्मान्तरानुभूतस्य अदृष्टवशादनुस्मरणमिति तात्पर्यम्। अलक्ष्यमाणे वा स्वशिरश्छेदादावनुभवाभावाददृष्टस्य कारणता। ननु जाततैमिरिकस्यापि तिमिरमेव मिथ्याज्ञाने हेतुः। सत्यम्, तत्तु तिमिरं द्वित्वस्मरणद्वारेण जनकम्, तस्य स्मरणं चानुभूते भवति, न च जातमात्रस्येहजन्मन्यनुभवोऽस्ति। अथ तिमिरमेव जन्मान्तरानुभूतस्मरणहेतुः 20 कस्मान्न कल्प्यते। न, दृष्टस्य हेतोर्जन्मान्तरानुभूतस्मरणसामर्थ्यकल्पनायामननुभूतरजतस्यापीहजन्मनि शुक्तिकायां सादृश्यजनितजन्मान्तरानुभूतरजतस्मरणे सति रजतज्ञानं स्यात्, न च दृश्यते। अतोऽदृष्टमेव जन्मान्तरानुभूतस्मरणजनकत्वेन कारणं कल्प्यम्, यत्र कार्यञ्च दृश्यते न च तदनुगुणकारणं तत्र सर्वत्राऽदृष्टस्यैव कारणत्वात्, अग्नेरूर्ध्वज्वलनादौ। नन्विदमत्र कारणमिदं चात्रेत्यत्र किं प्रमाणम्? तदाह—**नूनं नियमसिद्ध्यर्थम्** इति। 25 यदि हि अजनकं प्रतिभासेत तदजनकत्वाविशेषाद् यत्किञ्चित् प्रतिभासेत; शुक्तिकायां घटोऽपि प्रतिभासेत, रजतवत् तस्याप्यजनकत्वादिति।

न च सन्निहितं वस्तु तत्रास्ति वनितादिकम् ।
तेनेदं स्मृत्युपारूढमवभातीति मन्वते ॥
तत्राद्येन पदेनैताः स्वान्तःकरणसम्भवाः ।
निरस्ता भ्रान्तयोऽक्षादिसंसर्गरहितोदयाः ॥
5 याः पुनः पीतशङ्खादिमरुनीरादिबुद्धयः ।
अक्षजास्तद्व्युदासाय सूत्रे पदमिदं कृतम् ॥

## व्यवसायपदसार्थक्यम्

दूरात् स्थाणुपुरुषसाधारणं धर्ममारोहपरिणाहरूपमुपलभमानस्य तयोरन्यतरत्र वर्त्तमानान् वक्रकोटरादीन् करचरणान् वा विशेषानपश्यतः समानधर्मप्रबुद्धसंस्कारतया चोभयवर्तिनोऽपि विशेषाननुस्मरतः पुरोऽवस्थितार्थविषयं स्थाणुर्वा पुरुषो वेति संशयज्ञानमुपजायते तद् इन्द्रियार्थसन्निकर्षोत्पन्नत्वादिविशेषणयुक्तमपि न प्रत्यक्षफलम् । अतस्तद्व्यवच्छेदाय व्यवसायात्मकग्रहणम् ।

## संशयमानसत्ववादिमते शङ्का तत्समाधानञ्च

ननु मानसत्वात् संशयज्ञानस्य इन्द्रियार्थसन्निकर्षोत्पन्नग्रहणेन निरासः सिद्ध्यत्येवेति किं पदान्तरेण ? तथा च भाष्यकारः स्मृत्यनुमानागमसंशयप्रतिभास्वप्नज्ञानोहसुखादिप्रत्यक्षमिच्छादयश्च मनसो लिङ्गानीति वक्ष्यति ।

मैवम्, स्थाण्वादिसंशयस्य बाह्येन्द्रियान्वयव्यतिरेकानुविधायित्वात् । कश्चिद्धि मानसः संशयः समस्त्येव यथा आदेशिकस्य ज्योतिर्गणकादेरेकदा अन्यदा चासम्यगादिश्य तृतीये पदे पुनरादिशतः संशयो भवति 'किमयमस्मदादेशः संवदेदुत विसंवदेदि'ति स भाष्यकृतश्चेतसि केवलमनःकरण इति स्थितिः । यस्तु विस्फारिताक्षस्य स्थाणुर्वा पुरुषो वेत्यादिः संपद्यते संशयस्तम्, अनिन्द्रियार्थसन्निकर्षजं को नामाचक्षीत ।

---

स्मृत्यनुमानागमेति । स्मृत्यादीनां बाह्यकरणव्यापारोपरमेऽप्युपलम्भात्, अकरणस्य चात्मनस्तज्जन्मनि बाह्यविषयज्ञान इव सामर्थ्यादर्शनात् करणं कल्प्यम्, तच्च मन इति ।

## संशयविपर्ययोरपाकरणार्थमव्यभिचारिपदमितिविचारः

नन्वतस्मिंस्तदिति ज्ञानं व्यभिचारि व्याख्यातम्। एकरूपश्च पुरोऽवस्थितमर्थमनेकरूपतया स्पृशति संशयः स्थाणुर्वा पुरुषो वेति सोऽयमतस्मिंस्तथाभावाद्विपर्यय एवेति पूर्वपदव्युदस्तत्वान्न पदान्तरव्यवच्छेद्यतामर्हतीति। नैतदेवम्, स्वरूपभेदात् कारणभेदाच्च। एवमेव विरुद्धमाकारमुल्लिखन् विपर्ययो 5 जायते स्थाणौ पुरुष इति पुंसि वा स्थाणुरिति, अनियताकारद्वयोल्लेखी तु संशयो भवति स्थाणुर्वा स्यात्पुरुषो वेति। सोऽयं स्वरूपभेदः प्रत्यात्मसंवेद्यः। कारणभेदात्तु विरुद्धविशेषस्मरणप्रभवो विपर्ययः, शुक्तिकायां सन्निहितायां रजतविशेषानुस्मरणान्मरीचिषु सलिलगतविशेषाननुस्मरतो विपर्ययो भवति। उभयविशेषस्मरणजन्मा तु संशय इति पदान्तरनिरसनीय एवायम। 10

## तत्रैव प्रवरपक्षीयाशङ्का तत् समाधानञ्च

ननु संशयविपर्ययोरपि निर्विकल्पयोरसम्भवादव्यपदेश्यपदेनैव प्रवरपक्षे प्रतिक्षेपः सिद्धचेत्, पुरोऽवस्थितस्थाण्वादिधर्मिदर्शनमात्रमेव निर्विकल्पकमिन्द्रियव्यापारजम्, अनन्तरन्तूभयान्यतरविशेषस्मरणजन्मनोरुल्लिखितशब्दयोरेव संशयविपर्ययोरुत्पादः, तत्र विशेषस्मृत्यैव शब्दानुवेधस्याक्षेपात्, अतः पदद्वयमपि 15 तद्व्युदासाय न कर्त्तव्यम्। अत्र तदेव तावद्वक्तव्यम् प्रवरपक्षः प्रतिक्षिप्त एव यतः शब्दानुवेधजातमस्ति प्रत्यक्षमुपपादितम्।

## संशयविपर्ययोरपि अव्यपदेश्यत्वमेव

ननु भवतु प्रवरपक्षः प्रतिक्षिप्तः सदृशदर्शननिष्ठिते तु नयनव्यापारे विशेषस्मृतेरूर्ध्वमुपजायमानौ संशयविपर्ययौ नेन्द्रियजाविति प्रथमपदेनैव निरस्तौ 20 भवतः। तदसत् स्मृतेरूर्ध्वमपीन्द्रियव्यापारानुवृत्तेरित्युक्तत्वात्, एतच्चान्वयव्यतिरेकाभ्यामवगम्यते निमीलितचक्षुषस्तदनुत्पादात्, न च तदानीमन्तःसङ्कल्परूपेणापि शब्दोल्लेखः, उत्पन्ने तु संशये विपर्यये च वाचकस्मरणं भविष्यतीति सम्यग्ज्ञानवत् संशयविपर्ययावपि शब्दोल्लेखशून्यौ संवेद्येते, विशेषस्मृतिस्तु विशेषविषयत्वात् तानेवाक्षिपतु शब्दस्य किं वर्त्तते वाचकशब्दस्मृतिस्तु शब्दमुपस्थापयति, सा च न तावदुपपन्नेति। 25

सम्यक्प्रत्ययवत्तस्माद्वाचकोल्लेखवर्जितौ ।
अक्षव्यापारजन्मानौ स्तः संशयविपर्ययौ ॥

ईदृशयोः कथमनयोराद्यपदव्युदसनीयता, तस्मात् तदपाकृतये युक्तं पद-द्वयस्याप्युपादानम्, एवं लक्षणपदानि व्याख्यातानि ।

5 **प्रत्यक्षपदस्य यौगिकत्वादिविचारः**

लक्ष्यपदन्तु प्रत्यक्षमिति ज्ञानविशेषे रूढ्यैव प्रवर्त्तते, योगस्य व्यभिचारात् । प्रतिगतमक्षं प्रत्यक्षमित्यक्षरार्थः, स चायं सुखादावपि सम्भवतीति रूढिरेव साधीयसी । अथवा ज्ञानपदस्य सूत्रे निर्देशाद् योगपक्षोऽप्यस्तु न चासौ दृश्यमानो निह्नोतुं युक्तः । योगरूढिस्तु न सम्मतैव विदुषाम् । यत्रापि हि द्वयं दृश्यते तत्रापि
10 शब्दप्रवृत्तौ प्रयोजकमेव भवति, कथं पुनरक्षं प्रतिगतं ज्ञानमिष्यते, न संयोगित्वेन अञ्जनादेः प्रत्यक्षप्रसङ्गात्, न समवायित्वेन अक्षवर्तिनां रूपादीनां तथात्वप्रसङ्गात्, न जनकत्वेन अक्षारम्भकाणां परमाणूनामपि तथाभावप्रसक्तेः, तस्माज्जन्यत्वेनैव ज्ञानमक्षं प्रतिगतमिति व्याख्येयम् । अव्ययीभावव्याख्यानन्तु न युक्तं प्रत्यक्षः पुरुषः प्रत्यक्षा स्त्रीत्यादिव्यवहारदर्शनादित्यलं प्रसङ्गेन ।

15 तेनेन्द्रियार्थजत्वादिविशेषणगणान्वितम् ।
यतो भवति विज्ञानं तत्प्रत्यक्षमिति स्थितम् ॥

---

योगरूढिस्तु न सम्मतैवेति । या पङ्कजादिषु कैश्चिदभ्युपगता तस्या दूषणं स्वयमप्याह—यत्रापि हि द्वयं दृश्यत इत्यादिना । अव्ययीभावव्याख्यानमिति । अक्षमक्षं गतं प्रत्यक्षमिति वीप्सायामव्ययीभावः । 'प्रत्यक्षेण प्रत्यक्षादिति
20 दर्शनात्' इति नापपाठः, एतयोरव्ययीभावेऽपि सम्भवात् । 'अपञ्चम्याः' इति पञ्चम्यां अमादेशप्रतिषेधात्, 'तृतीयासप्तम्योर्बहुलम्' इति च तृतीयासप्तम्योर्बहुलवचनात् । अतः 'प्रत्यक्षस्य प्रत्यक्षयोः' इत्यादि पठनीयम् । ननु च प्रतिगतमक्षं प्रत्यक्षम् 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति तत्पुरुषाश्रयणात् परवल्लिङ्गतायां प्रत्यक्षो बोध इत्यादि न स्यात् । उच्यते, 'द्विगुप्राप्तापन्नालंगतिसमासेषु' परवल्लिङ्गतानिषेधादभिधेयलिङ्गतैव
25 भवति, प्राप्तो जीविकां प्राप्तजीविक इतिवत् ।

इति विगतकलङ्कमस्य धीमानकुरुत लक्षणमेतदक्षपादः ।
न तु पररचितानि लक्षणानि क्षणमपि सूक्ष्मदृशां विशन्ति चेतः ॥

## धर्मकीर्त्तिसंस्कृतदिङ्नागीयप्रत्यक्षलक्षणम्

यत्तावत् कल्पनापोढमभ्रान्तमिति लक्षणम् ।
प्रत्यक्षस्य जगौ भिक्षुस्तदत्यन्तमसाम्प्रतम् ॥ 5
शब्दसंसर्गयोग्यार्थप्रतीतिः किल कल्पना ।
अस्याश्च केन दोषेण प्रामाण्यं न विषह्यते ॥

नन्वभिलापसंसर्गयोग्यप्रतिभासत्वादपि हि कम् अन्यं दोषं मृगयते भवान्, असदर्थविषयत्यागे तत्त्वमुक्तं भवति शब्दार्थस्य वास्तवस्याभावात्, स्वलक्षणस्य सजातीयेतरव्यावृत्तात्मनः सम्बन्धाधिगमसव्यपेक्षप्रवृत्तिना शब्देन विषयीकर्तु- 10 मशक्यत्वात्, तद्व्यतिरिक्तस्य वस्तुनोऽनुपलम्भात् । न चेन्द्रियार्थसन्निकर्षान्वय-व्यतिरेकानुविधायिनी कल्पनाबुद्धिः, तमन्तरेणापि भावात्, तस्मिन् सत्यपि च पूर्वानुभूतवाचकशब्दयोजनं विनानुत्पादात् । यदि चेन्द्रियार्थसन्निकर्षस्तज्जनको भवेत् प्रथममेव तथाविधां धियं जनयेत्, न च जनयति, तदयं शब्दस्मृतेरूर्ध्वमपि न जनक इति मन्यामहे । तदुक्तम्, 15

यः प्रागजनको बुद्धेरुपयोगाविशेषतः ।
स पश्चादपि तेन स्यादर्थाभावेऽपि नेत्रधीः ॥ इति ।

---

अभिलापसंसर्गेति । अभिलप्यतेऽनेन ह्यभिलापः शब्दस्तेन संसर्गः सम्बन्धस्त-द्योग्यः सामान्याकारः प्रतिभासतेऽस्यामित्यभिलापसंसर्गयोग्यप्रतिभासा । बालो हि यदा स्तन पूर्वोपलब्धस्तनैक्येन न गृह्णाति न तदा रोदनादिपरिहारेण तत्र मुखमर्पयति, अतः 20 शब्दसंसर्गाभावेऽपि तद्योग्यत्वात् प्रतिभासस्य तद्ग्राहिज्ञानस्य कल्पनात्वसिद्धये योग्य-ग्रहणम् । तमन्तरेणापि भावात्, आभोगादाविति शेषः; आभोगादौ हि इन्द्रियसम्बन्धं विनापि नानार्थकल्पना जायन्ते ।

यः प्रागजनक इति । योऽर्थः प्रथमेन्द्रियसन्निकर्षकाले सविकल्पकस्य न जनकः स पश्चादप्यजनक एव । तस्य हि तज्जन्मन्युपयोगो योग्यदेशावस्थितत्वम्, स च प्रागप्य- 25 स्ति; प्राक् चेदजनकः स पश्चादप्यजनक एव । अतोऽर्थाभावेऽपि नेत्रधीः । नेत्रधीरूपतया भवदभिमता सविकल्पिका बुद्धिर्भवेदिति ।

अपि च सत्यपीन्द्रियार्थसंसर्गे स्मृत्यपेक्षया सोऽर्थस्तयैव व्यवहितः स्यात्, आह च

अर्थोपयोगेऽपि पुनः स्मर्याच्छब्दानुयोजनम् ।
अक्षधीर्यद्यपेक्षेत सोऽर्थो व्यवहितो भवेत् ।। इति ।

5 सङ्केतस्मरणसहकारिसव्यपेक्षमक्षमीदृशीं बुद्धिमुपजनयतीति चेद्, न, व्यतिरिक्ताव्यतिरिक्तोपकारादिविकल्पैः सहकारिणो निरस्तत्वात्, किञ्च दण्डीत्यादिविकल्पविज्ञानं नेन्द्रियापातवेलायामेव जायते किन्तु बहुप्रक्रियापेक्षम्, यदाह ।

विशेषणं विशेष्यञ्च सम्बन्धं लौकिकीं स्थितिम् ।
गृहीत्वा सकलञ्चैतत्तथा प्रत्येति नान्यथेति ।।

10 न चेयतीं प्रक्रियां प्रथमनयनोपनिपातजातमविकल्पकं ज्ञानमुद्बोढुं क्षममित्याह

सङ्केतस्मरणोपायं दृष्टसङ्कल्पनात्मकम् ।
पूर्वापरपरामर्शशून्यं तच्चाक्षुषं कथम् ।।

तत्रैतत्स्यात्, द्विविधा विकल्पाः छात्रमनोरथविरचिताः इदन्ताग्राहिणश्च
15 नीलमित्यादयः। तत्र पूर्वे मा भूवन् प्रमाणं कस्तेष्वर्थनिरपेक्षजन्मसु प्रामाण्येऽभिनिवेशः? इदन्ताग्राहिणां त्वर्थाविनाभूतत्वात् कथं न प्रामाण्यमिति उच्यते, सर्वं एवामी विकल्पाः परमार्थतोऽर्थं न स्पृशन्त्येव स हि निर्विकल्पकेनैवासर्वात्मना परिच्छिन्नः । तदुक्तम्

---

अर्थोपयोगेऽपीति । अर्थस्योपयोगेऽपि योग्यदेशावस्थितत्वेऽपि यदि स्मर्यमाण-
20 शब्दसंपर्कमपेक्षेत तज्ज्ञानम्, तदा सोऽर्थो व्यवहितो भवेत् । स्मरणजन्मन्येव तस्य व्यापृतत्वात् तज्जन्मनि पुनरव्यापारणं व्यवधानम् ।

लौकिकीं स्थितिमिति । हस्तस्थदण्डे दण्डी न पादाद्याक्रान्तेऽपीति सङ्कल्प्य संयोज्यैकत्र तथा प्रत्येति दण्डीति उच्यते ।

ननु तथाविधे दण्डीत्यादौ कल्पनाज्ञाने यदुपलब्धं रूपम् कीदृक् तदुपलब्ध-
25 मित्याह सङ्केतस्मरणोपायमिति । दृष्टसङ्कलनात्मकं पूर्वदृष्टस्य दृश्यमानेन सह संयोजनात्मकम्।

एकस्यार्थस्वभावस्य प्रत्यक्षस्य सतः स्वयम् ।
कोऽन्यो न दृष्टो भागः स्याद् य प्रमाणैः परीक्ष्यते ।। इति ।

यत्तु केषाञ्चिद्विकल्पानामिदन्ताग्राहित्वस्पष्टत्वादिरूपं तदर्थाविनाभावि-निर्विकल्पकदर्शनपृष्ठभावित्वावाप्ततच्छायासंसर्गजनितं न तु तेषामर्थस्पर्शः कश्चिदस्ति अर्थात्मनो निर्विकल्पेनैव मुद्रितत्वात् । 5

तस्मादतात्त्विकाकारसमुल्लेखपुरःसराः ।
न यथावस्तु जायन्ते कदाचिदपि कल्पनाः ।।

### तन्मते कल्पनापञ्चकं सोदाहरणम्

पञ्च चैताः कल्पना भवन्ति, जातिकल्पना गुणकल्पना क्रियाकल्पना नाम-कल्पना द्रव्यकल्पना चेति । ताश्च क्वचिदभेदेऽपि भेदकल्पनात् क्वचिच्च भेदे-ऽप्यभेदकल्पनात् कल्पना उच्यन्ते । 10

जातिजातिमतोर्भेदो न कश्चित् परमार्थतः ।
भेदारोपणरूपा च जायते जातिकल्पना ।।

इदमस्य गोर्गोत्वमिति न हि कश्चिद्भेदं पश्यति तेनाभेदे भेदकल्पनैव ।

एतया सदृशन्यायान्मन्तव्या गुणकल्पना । 15
तत्राप्यभिन्नयोर्भेदः कल्प्यते गुणतद्वतोः ।।

तथा चाहुः, एष गुणी रूपादिभ्योऽर्थान्तरत्वेन नात्मानं नो दर्शयति तेभ्यश्च व्यतिरेकं वाञ्छसीति चित्रम् ।

---

एकस्यार्थस्वभावस्येति । एकस्य निर्भागस्य । प्रमाणैरिति । सविकल्पकैः प्रत्यक्षैर्भवदभिमतैरनुमानैश्च । यदि हि प्रत्यक्षेणैवानित्यत्वादिसकलविशेषच्छुरितः शब्दो गृहीतस्तत् 'अनित्यः शब्दः कृतकत्वात्' इत्यनुमानेन किं कार्यमित्यर्थः । 20

जातिजातिमतोर्भेदो न कश्चिदिति । न व्यक्तेर्व्यतिरिक्ता जातिरुपलभ्यते, तदुक्तम्—'अयं गौः' इति हि लौकिकाः प्रतिपद्यन्ते, न 'इदं गोत्ववद् द्रव्यम्' इति भेदेन ।

आत्मानं नो दर्शयति, एषोऽहमस्माद् व्यतिरिक्त इति । 25

भेदारोपणरूपैव गुणवत्कर्मकल्पना ।
तत्स्वरूपातिरिक्ता हि न क्रिया नाम काचन ।

गच्छति देवदत्त इति देवदत्तस्यैवान्यूनानतिरिक्तस्य प्रतिभासात् ।

विभिन्नयोस्त्वभेदेन प्रवृत्ता नामकल्पना ।
चैत्रोऽयमित्यभेदेन निश्चयो नामनामिनोः ॥

5

चैत्र इत्ययं शब्दः, अयमित्यर्थः, कीदृशमनयोः सामानाधिकरण्यम् ?

एवं दण्ड्ययमित्यादिर्मन्तव्या द्रव्यकल्पना ।
सामानाधिकरण्येन भेदिनो ग्रहणात्तयोः ॥

## कल्पनाज्ञानस्याप्रमाणत्वाविपर्ययत्वाबाधितत्वञ्च

10 ननु यद्यभेदे भेदं भेदे चाभेदमारोपयन्त्यः कल्पनाः प्रवर्त्तन्ते तत्कथमासु बाधकः प्रत्ययो न जायते शुक्तिकारजतबुद्धिवद् ? उच्यते, यत्र वस्तु वस्त्वन्तरात्मना-ऽवभासते तत्र बाधको भवति मरीचिष्विव जलबुद्धौ, इह तु न जात्यादिवस्त्व-न्तरमस्ति यतो वस्त्वन्तरात्मनास्य ग्रहो भवेत् । व्यक्तिविषया एवैते सामानाधि-करण्यवैयधिकरण्यविकल्पाः तस्माद्वस्त्वन्तरानवभासिष्वेषु न बाधकः प्रत्ययो जायते, तस्मान्न विपर्ययात्मानो विकल्पाः, न चैते प्रमाणम्, एतदुल्लिख्यमानस्य जात्यादेरपारमार्थिकत्वात्, अत एव प्रमाणविपर्ययाभ्यामयमन्य एव विकल्प इत्या-चक्षते इत्यलं विस्तरेण ।

15

एवमेताः प्रवर्त्तन्ते वासनामात्रनिर्मिताः ।
कल्पितालीकभेदादिप्रपञ्चाः पञ्च कल्पनाः ॥
एवञ्च पश्यता तासां प्रामाण्यामोदमन्दताम् ।
भिक्षुणा लक्षणग्रन्थे तदपोढपदं कृतम् ॥

20

## तन्मतखण्डने कल्पनाया अप्रामाण्यत्वनिरासः

अत्र प्रतिविधीयते, तदिदं संकीर्णप्रायमतिबहुविलपता भवता न नियतं किमपि विकल्पनानामप्रामाण्यकरणमिति स्पष्टमावेदितं तदुच्यताम्, किं शब्दा-

---

ननु ज्ञानानां निर्विषयत्वाभावाद् भिन्नसामान्याभावे कथं सामान्याकारज्ञानादय इत्याशङ्क्याह—व्यक्तिविषया एवैत इति ।

25

र्थावभासित्वगर्भीकृतमसदर्थवाचित्वं तदप्रामाण्यकारणमभिमतमुत सङ्केतस्मृत्य-
पेक्षोपनतमनिन्द्रियार्थसन्निकर्षजत्वमुत विशेषणग्रहणाद्यपेक्षावाप्तं बहुप्रयास-
साध्यत्वमुत पूर्वापरपरामर्शशून्यचाक्षुषवैलक्षण्यवाचोयुक्तिसमर्पितं विचारकत्वम्
उत निर्विकल्पकपरिच्छिन्नवस्तुग्राहितानिबन्धनमधिगताधिगन्तृत्वम् उत भेदा-
भेदसमारोपभणितमतस्मिंस्तदिति ग्राहित्वम् उत वृत्तिविकल्पादिबाधितसामान्य- 5
ग्रहणसूचितं बाध्यत्वमेवेति। तत्र तावन्न शब्दसंसर्गयोग्यार्थग्रहणद्वारकमसदर्थ-
ग्राहित्वमेषामप्रामाण्यकारणमभिधातुं युक्तम्, शब्दार्थस्य वास्तवस्य समर्थयिष्य-
माणत्वात्। कः पुनरसाविति चेद्, य एव निर्विकल्पके प्रतिभासते। किं निर्विकल्पके
सामान्यादिकमवभासते ? बाढमभासत इति वक्ष्यामः। अत एव बाध्यत्वमपि न
प्रामाण्यापहारकारणमेषां वक्तव्यम्, वृत्तिविकल्पादेर्बाधस्य परिहरिष्यमाणत्वात्। 10
बाधकान्तरस्य च नेदमिति प्रत्ययस्य शुक्तिकारजतज्ञानादिवद् भवतैवानभ्युपगमात्।
नाप्यनिन्द्रियार्थसन्निकर्षजन्यत्वं सङ्केतग्रहणकालानुभूतशब्दस्मरणापेक्षणादस्य
वक्तव्यम्, सहकार्यपेक्षायामपि तद्व्यापाराविरतेः।

य: प्रागजनको बुद्धेः स लब्ध्वा सहकारिणम्।
कालान्तरेण तां बुद्धिं विदधत् केन वार्यते॥ 15

व्यतिरिक्ताव्यतिरिक्तोपकारकरणादिविकल्पास्तु क्षणभङ्गभङ्गे निराकरि-
ष्यन्ते। रूपग्रहणे च चक्षुषः प्रदीपादेरपेक्षायां दुष्परिहारास्ते विकल्पाः। न वै
किञ्चिदेकं जनकमिति भवन्तोऽपि पठन्ति, भवत्पक्षेऽपि तुल्यास्ते। यद्युभयोर्दोषो न
तेनैकश्चोद्यो भवति। तस्मादुपयोगाविशेषादिन्द्रियालोकमनस्कारविषयवद्
वाचकस्मरणमपि सामग्र्यन्तर्गतं एतत्प्रत्ययजन्मनि व्याप्रियत इति न वाचकस्मरण- 20
जनितत्वेन स्मार्तत्वादप्रमाणं विकल्पः, रूपस्मृत्याख्यसमनन्तरप्रत्ययनिर्मितस्य
निर्विकल्पस्य रसज्ञानस्यापि तथात्वप्रसङ्गात्।

यच्चेदमुच्यते सोऽर्थो व्यवहितो भवेदिति, तन्न विद्मः कीदृशं व्यवधानमर्थ-
स्येति। न हि दीपेन वा मनसा वा विज्ञानहेतुना कदाचिदर्थो व्यवधीयते, मनोवच्च

---

न तेनैकश्चोद्यो भवति। नासौ दोष एकस्य वाच्यः। इन्द्रियालोक- 25
मनस्कारेति। मनस्कारः समनन्तरप्रत्ययः।

वाचकस्मृतिरपि सामग्र्यन्तर्गता सती तत्प्रतीतौ व्याप्रियत इति कथमर्थं व्यवदधीत । स्मृतिविषयीकृतः शब्दस्तमर्थं व्यवधत्त इति चेन्न, शब्दस्य तत्प्रकाशकत्वेन ज्ञानवद् दीपवद्वा व्यवधायकत्वाभावात् । न चेन्द्रियव्यापारतिरोधानं व्यवधानम्, तस्याधुनाप्यनुवर्तमानत्वात् ।

यथा तद्भावभावित्वाद्बाह्यविज्ञानमक्षजम् ।
तथा तद्भावभावित्वादुत्तरं ज्ञानमक्षजम् ॥

न हि वाचकस्मरणानन्तरमक्षिणी निमील्य विकल्पयति घटोऽयमिति ।

अथ यावद् वाचकविज्ञानं हृदयपथमवतरति तावत् सोऽर्थः क्षणिकत्वादतिक्रान्त इति व्यवहित उच्यते, तदपि दुराशामात्रम्, क्षणभङ्गस्योपरिष्टान्निराकरिष्यमाणत्वात् ।

अपि च प्रदर्शितप्राप्त्यादिव्यवहारवत् सन्तानद्वारकमिहापि तद्ग्रहणं भविष्यतीति सर्वथा न व्यवधानम् । तदेवं समयस्मरणसापेक्षत्वेऽपि नेन्द्रियार्थसन्निकर्षोत्पन्नतामतिवर्तते सविकल्पकं विज्ञानमिति कथमप्रत्यक्षम् ? यत्पुनर्विशेषणविशेष्यग्रहणादिसामग्र्यपेक्षत्वेन बहुप्रयाससाध्यत्वमप्रामाण्यकारणमभिधीयते तदतीव सुभाषितम् । न हि बहुक्लेशसाध्यत्वं नाम प्रामाण्यमुपहन्ति । उक्तञ्च न हि गिरिशृङ्गमारुह्य यद् गृह्यते तदप्रत्यक्षमिति, रसविज्ञानापेक्षया च रूपज्ञानस्य दीपाद्यालोकाहरणप्रयाससाध्यत्वादप्रामाण्यं स्यात् ।

यदपि पूर्वापरपरामर्शरहितचाक्षुषविज्ञानवैपरीत्येन विकल्पज्ञानानां विचारकत्वादप्रामाण्यमुच्यते तदपि न सम्यक्, सर्वत्र ज्ञानस्य विचारकत्वानुपपत्तेः । विचारको हि माता स हि पश्यति स्मरत्यनुसन्धत्ते विचारयतीच्छति द्वेष्टि यतते गृह्णाति जहाति सुखमनुभवतीति वक्ष्यामः । अर्थञ्च स्पृशतो विज्ञानस्य विचारयतोऽपि कथमप्रामाण्यं स्यात् ?

अथास्य निर्विकल्पकेनैव सर्वात्मना स्पृष्टत्वात् पिष्टपेषणमयुक्तम्, इति सविकल्पमपि अधिगतार्थग्राहित्वादप्रमाणमिति मन्यसे, तदपि न साधु, पूर्वमेव परिहृतत्वात् । न ह्यनधिगताधिगन्तृत्वं प्रामाण्यमित्युक्तम्, गृहीतग्रहणेऽपि प्रमाणस्य प्रमाणत्वानतिवृत्तेः ।

## सामान्यतः कल्पनाया बाधितत्वनिरासः

यत्त्वभ्यधायि भिन्नेऽप्यभेदमभिन्नेषु च भेदं कल्पयन्त्यः कल्पना अतस्मिं-स्तद्ग्रहे प्रामाण्यमवजहतीति तदयुक्तम् । अतस्मिंस्तद्ग्रहो भवत्यप्रमाणत्वकारणम् । तत्त्विह नास्ति । तस्य हि बाधकप्रत्ययोपसन्निपाताग्निश्चयः । न च भवदुपवर्णितासु पञ्चस्वपि जात्यादिकल्पनासु बाधकं किञ्चिदस्तीति नातस्मिंस्तद्ग्राहिण्यः कल्पना भवन्ति ।

जातिर्जातिमतो भिन्ना गुणी गुणगणात् पृथक् ।
तथैव तत्प्रतीतेश्च कल्पनोक्तिरबाधिका ॥

एतच्चोपरिष्टान्निर्णेष्यते । द्रव्यनाम्नोस्तु भिन्नयोर्भेदेनैव प्रतीतिर्नाभेद-कल्पना । न हि देवदत्तशब्दोऽयमित्येवं तद्वाच्यावगतिरेषा । न शब्दोऽस्यामर्थारूढो ऽवभासते । न शब्दविवर्तरूपेणार्थः परिस्फुरति । किं तर्हि ?

शब्दस्मृत्याख्यसामग्र्यसामर्थ्यातिशयोद्भवः ।
प्रत्ययातिशयः सोऽयमित्येवं प्राक् प्रसाधितम् ॥

दण्डवयमिति द्रव्याभेदकल्पना तु मन्दमतिभिरेवोदाहृता । न हि दण्डो-ऽयमिति देवदत्ते प्रतीतिः, अपि तु दण्डीति । तत्र च प्रकृतिप्रत्ययौ पृथगेवोपलभ्येते दण्डोऽस्यास्तीति दण्डी, तदिह यथैव वस्तु तथैव तदवसाय इति नाभेदारोपः । कर्मणि तद्द्वयमपि नास्ति नाभिन्ने भेदकल्पनं न च भिन्नेऽप्यभेदकल्पना ।

क्रियाहि तत्त्वतो भिन्ना भेदेनैव च गृह्यते ।
चलतीत्यादिबोधेषु तत्स्वरूपावभासनात् ॥
तेन क्रियागुणद्रव्यनामजात्युपरञ्जितम् ।
विषयं दर्शयन्नेति विकल्पो नाप्रमाणताम् ॥
विपर्ययात् समुत्तीर्ण इति साधु सहामहे ।
प्रमाणात्तु बहिर्भूतं विकल्पं न क्षमामहे ॥

---

न शब्दोऽस्यामर्थारूढोऽवभासते इत्यध्यासपक्षः । स्वरूपादप्रच्युतस्यासत्या-कारोपग्रहो विवर्तः । स्वप्न इत्यविज्ञातस्य स्वापाकारापरित्यागेनासत्यगजाश्वा-कारोपग्रहः ।

क्वचिद् बाधकयोगेन यदि तस्याप्रमाणता ।
निर्विकल्पेऽपि तुल्योऽसौ द्विचन्द्राद्यवभासिनि ।।
मनोराज्यविकल्पानां काममस्त्वप्रमाणता ।
यथावस्तुप्रवृत्तानां न त्वसावक्षजन्मनाम् ।।

5 ## निर्विकल्पकपृष्ठभावित्वेऽपि सविकल्पकस्य प्रामाण्यम्

न च निर्विकल्पकपृष्ठभावित्वकृतमेषामेतद्रूपम्, विषयसंस्पर्शमन्तरेण स्वतः स्वच्छरूपाणां ज्ञानानामेवमाकारत्वानुपपत्तेः, किं निर्विकल्पकपृष्ठभाविता करिष्यति ? तदनन्तरभाविना हि स्मृतिरपि क्वचिद् दृश्यत एव, न च सा तच्छायावतीति दुराशामात्रमेतत् ।

10 ननु निर्विकल्पकेनैव वस्तुसर्वस्वं गृहीतमेकस्यार्थस्वभावस्येति वर्णितम्, प्रतिविहितमेतद्, गृहीतग्रहणेऽपि प्रामाण्यानपायात् ।

## निर्विकल्पकस्य ग्राह्ये विषये मतान्तराणि

किञ्च किं निर्विकल्पकेन गृह्यते इत्येतदेव न जानीमः ।
भवन्तो निर्विकल्पस्य विषयं सम्प्रचक्षते ।
15 सजातीयविजातीयपरावृत्तं स्वलक्षणम् ।।
महासामान्यमन्ये तु सत्तां तद्विषयं विदुः ।
वागूरूपमपरे तत्त्वं प्रमेयं तस्य मन्वते ।।

---

महासामान्यमन्ये त्विति । ब्रह्मविदां हि सद्रूपतायाः सर्वत्राव्यभिचारात् सैव पारमार्थिकी प्रत्यक्षग्राह्या न भेदाः, तेषामपारमार्थिकत्वात्, यथा घटादौ मृद्रूपतैव सत्यं 20 न विकाराः, तेषामाद्यवन्ते चासत्त्वेनासद्भिस्तुल्यत्वात् । तथा च श्रुतिः 'वाचारम्भणं नामधेयं विकारो मृत्तिकेत्येव सत्यम्' इति । मृद्रूपतापि यदापगच्छति तदा सन्मात्रमनुल्लिखितविशेषमवतिष्ठत इति तदेव सन्मात्रं सत्यम् । न च भेदः प्रत्यक्षस्य विषयः, तस्येतरेतराभावरूपत्वेन प्रत्यक्षाविषयत्वात्, तदुत्तरकालभाविनान्तु विशेषग्राहिणां विकल्पानामप्रामाण्यात् । वाक्तत्त्वमपर इति । यथा हि ब्रह्मविदां सर्वत्र सद्रूपताया 25 अव्यभिचारेण परमार्थसत्त्वान्निर्विकल्पकग्राह्यत्वमभिमतं तथैव शाब्दैरपि सर्वत्र प्रत्यये शब्दरूपताया अनुगमात् तस्या एवासत्याकारोपग्रहरूपविवर्तरूपत्वात् रूपादीनां परमार्था-

केचिद् गुणक्रियाद्रव्यजातिभेदादिरूषितम् ।
शबलं वस्तु मन्यन्ते निर्विकल्पकगोचरम् ॥
प्रत्यक्षविषयेऽप्येताश्चित्रं विप्रतिपत्तयः ।
परोक्षार्थे हि विमतिः प्रत्यक्षेणोपशाम्यति ॥
प्रत्यक्षे हि समुत्पन्ना विमतिः केन शाम्यति । 5
इदं भाति न भातीति संविद्विप्रतिपत्तिषु ॥
परप्रत्यायने पुंसां शरणं शपथोक्तयः ।

## स्वमते निर्विकल्पकग्राह्यप्रमेयविषये शङ्का तत्समाधानञ्च

न तु शपथशरणा एव निरुद्यममास्महे । मार्गान्तरेणापि तत्प्रमेयं निश्चिनुमः । 10

निर्विकल्पानुसारेण सविकल्पकसम्भवात् ।
ग्राह्यं तदानुगुण्येन निर्विकल्पस्य मन्महे ॥

तत्र न तावत् सकलसजातीयविजातीयव्यावृत्तं स्वलक्षणं प्रत्यक्षस्य विषयः ।

गृहीते निर्विकल्पेन व्यावृत्ते हि स्वलक्षणे ।
अकस्मादेव सामान्यविकल्पोल्लसनं कथम् ॥ 15

निर्विकल्पानुसारेण हि विकल्पाः प्रादुर्भवितुमर्हन्ति । अपि च

विजातीयपरावृत्तिविषया यदि कल्पना ।
व्यावृत्तिरूपं सामान्यं गृहीतं हन्त दर्शनैः ॥

---

सत्त्वाद् वाक्तत्त्वं शब्दतत्त्वं सैव प्रत्यक्षविषयत्वेनोक्ता । तथाहि भेदानां तद्विवर्ततया तैरसत्त्वं प्रतिपादितम् । यदाहुः 20

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥
यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः ।
सङ्कीर्णमिव मात्राभिश्चित्राभिः प्रतिपद्यते ॥
तथेदममलं ब्रह्म निर्विकारमविद्यया । 25
कलुषत्वमिवापन्नं भेदरूपं प्रतीयते ॥

विजातीयपरावृत्तिविषया यदि कल्पनेति । अयं भावः सजातीयविजातीय-

व्यावृत्तान्नतु नैवान्या व्यावृत्तिः परमार्थतः ।
व्यावृत्तग्रहणेनैव सुतरां तद्ग्रहो भवेत् ॥
सामान्यग्रहणेऽप्येवं तद्व्यापारविकल्पनात् ।
स्वलक्षणपरिच्छेदनिष्ठं तन्नावतिष्ठते ॥

नापि सत्ताद्वैतवादिसम्मतसत्ताख्यो निर्विकल्पस्य विषयो युक्तः ।

सत्ताग्रहणपक्षेऽपि विशेषावगतिः कुतः ।
सा भाति भेदस्पृष्टा चेत् सिद्धमद्वैतदर्शनम् ॥
न च भेदं विना सत्ता ग्रहीतुमपि शक्यते ।
नाविद्यामात्रमेवेदमिति च स्थापयिष्यते ॥
10 वाक्तत्त्वप्रतिभासोऽपि प्रतिक्षिप्तोऽनया दिशा ।
कथञ्च चाक्षुषे ज्ञाने वाक्तत्त्वमवभासते ॥
अगृहीते तु सम्बन्धे गृहीते वापि विस्मृते ।
अप्रबुद्धेऽपि संस्कारे वाचकावगतिः कुतः ॥
चित्रतापि पृथग्भूतैर्धर्मैस्तत्समवायिभिः ।
15 जात्यादिभिर्यदीष्येत धर्मिणः काममस्तु सा ॥
तदात्मता तु नैकस्य नित्यं तत्त्वानुपग्रहात् ।
अंशनिष्कर्षपक्षे तु धर्मभेदो बलाद् भवेत् ॥
यस्य यत्र यदोद्भूतिर्जिघृक्षा चेति कथ्यते ।
तदात्मकत्वं धर्माणामुच्यते चेत्यसंगतम् ॥

---

20 व्यावृत्तिरूपं हि स्वलक्षणम्, तन्नागृहीतायां सजातीयविजातीयव्यावृत्तौ प्रत्यक्षेण गृहीतं भवति । गृहीतञ्चेद् विजातीयव्यावृत्तिरपि सामान्यरूपतया भवदभिमता गृहीतैवेति कथं स्वलक्षणैकविषयं निर्विकल्पकम् ?

शबलं वस्तु निर्विकल्पकग्राह्यं ये मन्यन्ते तान् प्रत्याह **चित्रतापि पृथग्भूतैरिति** । **नित्यं तत्त्वानुपग्रहात्** । 'गोर्गोत्वम्' इत्याद्यपि दर्शनात् । अथ तादात्म्येऽपि 25 धर्मधर्मिणोर्बुद्ध्या निष्कृष्य पृथक्कृत्य अंशा धर्मा व्यपदिश्यन्ते 'गोर्गोत्वम्' इत्यादौ तदाह **अंशनिष्कर्षपक्षे त्विति** । न ह्यसति भेदे निष्कर्षः कर्तुं शक्येतेत्यभिप्रायः । अथ मन्येत केनांशनिष्कर्षपक्षोऽभ्युपगत इति तदाह **यस्य यत्र यदोद्भूतिरिति** ।

देशभेदस्तु धर्माणामस्माभिरपि नेष्यते।
धर्मी हि तेषामाधारो न पुनः स तदात्मकः॥

तस्माद् य एव वस्त्वात्मा सविकल्पस्य गोचरः।
स एव निर्विकल्पस्य शब्दोल्लेखविवर्जितः॥

किमात्मकोऽसाविति चेद् यद्यदा प्रतिभासते।
वस्तुप्रमितयश्चैव प्रष्टव्या न तु वादिनः॥

क्वचिज्जातिः क्वचिद् द्रव्यं क्वचित् कर्म क्वचिद् गुणः।
यदेव सविकल्पेन तदेवानेन गृह्यते॥

इदं शब्दानुसन्धानमात्रमभ्यधिकं परम्।
विषये न तु भेदोऽस्ति सविकल्पाविकल्पयोः॥

अतः शब्दानुसन्धानबन्ध्यं तदनुबन्धि वा।
जात्यादिविषयग्राहि सर्वं प्रत्यक्षमिष्यते॥

## दिङ्नागधर्मकीर्त्योः प्रत्यक्षलक्षणखण्डनम्

तस्माद् यत् कल्पनापोढपदं प्रत्यक्षलक्षणे।
भिक्षुणा पठितं तस्य व्यवच्छेद्यं न विद्यते॥

अभ्रान्तपदस्यापि व्यावर्त्यं न किञ्चन तन्मतेन पश्यामः।

---

यस्य यत्र यदोद्भूतिर्जिघृक्षा वोपजायते।
चेत्यतेऽनुभवस्तस्य तेन च व्यपदिश्यते॥

इति भट्टश्लोकः। तत्रोद्भवः प्रमेयधर्मः, जिघृक्षा प्रमातृधर्मः। यदा सजनं गृहमसकृदुपलब्धवतो निर्जनगृहदर्शनं तदा 'नास्त्यत्र कश्चित्' इत्येवंरूपज्ञानजननयोग्यस्याभावांशस्योद्भवः, यदा त्वपूर्वमेव प्रदेशविशेषं पश्यति तदा 'कोऽत्रास्ते' इत्येवंरूपप्रतीतिसमर्थस्य भावांशस्योद्भवः। अयमसौ भावाभावांशयोः प्रमेयधर्मयोरुद्भवः। जिघृक्षा तु यदा निर्जनप्रदेशार्थी तदा अभावांशस्य ग्रहणम्। यदा तु शीताद्यार्तो गृहं मृगयते तदा भावांशस्येति। चेत्यतेऽनुभवस्तस्यैवांशस्य, तत्प्रकटताया एवोद्भवात्; तेनैव चांशेनासौ पदार्थो व्यपदिश्यत इति।

ननु तिमिराशुभ्रमणनौयानसंक्षोभाद्याहितविभ्रमं द्विचन्द्रालातचक्रचलत्पादपादिदर्शनमपोह्यमस्य परैरुक्तम्, सत्यम्। उक्तमयुक्तम् । कल्पनापोढपदेनैव तद्व्युदाससिद्धेः। तत्रापि निर्विकल्पकं ज्ञानमेकं चन्द्रादिविषयमेव। विकल्पास्तु विपरीताकारग्राहिणो भवन्ति यथा मरीचिग्राहिणि निर्विकल्पके सलिलावसायी 5 विकल्प इति।

ननु तिमिरेण द्विधाकृतं चक्षुरेकतया न शक्नोति शशिनं ग्रहीतुमिति निर्विकल्पकमपि द्विचन्द्रज्ञानम्। यद्येवं तरङ्गादिसादृश्यरूषितमूषरे मरीचिचक्रं चक्षुषा परिच्छेत्तुमशक्यमिति तत्रापि निर्विकल्पकमुदकग्राहि विज्ञानं किमिति नेष्यते ? अभ्युपगमे वा सदसत्कल्पनोत्पातादिकृतः प्रमाणेतरव्यवहारो न स्यात्। 10 अपि च न बाधकोपनिपातमन्तरेण भ्रान्ततावकल्पने ज्ञानानाञ्च क्षणिकवादिमते बाध्यबाधकभावो बुद्धीनामुपपद्यत इत्यलं विमर्देन।

इति सुनिपुणबुद्धिर्लक्षणं वक्तुकामः
पदयुगलमपीदं निर्ममे नानवद्यम्।
भवतु मतिमहिम्नश्चेष्टितं दृष्टमेत-
15 ज्जगदभिभवधीरं धीमतो धर्मकीर्त्तेः ॥
श्रोत्रादिवृत्तिरपरैरविकल्पिकेति
प्रत्यक्षलक्षणमवर्णि तदप्यपास्तम्।
साम्यान्न यस्य न च सिद्ध्यति बुद्धिवृत्त्या
दृष्टत्वमात्मन इति प्रतिपादितं प्राक् ॥

---

20 तिमिराशुभ्रमणेति। संक्षोभो वातादिसम्बन्धी ज्वलत्स्तम्भादिदर्शनहेतुः। तिमिराशुभ्रमणनौयानसंक्षोभैराहितो विभ्रमो यत्र।

भवतु मतिमहिम्न इति। भवतु आस्तां तावत्। यदेतम्
न्यायमार्गतुलारूढं जगदेकत्र यन्मतिः।
जयेत् तस्य क्व गम्भीरा वाचोऽहं जडधीः क्व च ॥

25 इत्यादि स्तुतिवाक्यैरर्चटादिरचितैर्जगदभिभवधीरं चेष्टितं धर्मकीर्तेः सम्बन्धिनो मतिमहिम्नः कथ्यते तदेतद् दृष्टमिति योजना, न किञ्चिदेतदिति तात्पर्यम्। साम्यान्न यस्येति। तैरप्यविकल्पिकेत्यभिहितत्वात्।

## जैमिनीयसूत्रस्य सत्सम्प्रयोग इत्यादेः प्रत्यक्षलक्षणत्वखण्डनम्

'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वादि'त्येतत्सूत्रं जैमिनीयैः साक्षात् प्रत्यक्षलक्षणपरत्वेन न व्याख्यातम्, "चोदनालक्षणोऽर्थो धर्मः" इति प्रकृतप्रतिज्ञासङ्गत्यभावात्, अपि तु धर्मं प्रति प्रत्यक्षमनिमित्तम्, एवंलक्षणकत्वादित्यनुवादत्वं लक्षणस्यापि सम्भवेदिति। 5
तदेतल्लक्षणवर्णने सूत्रयोजनमसमीचीनम्, अतिव्याप्तिदोषानतिवृत्तेः। तथा हीन्द्रियाणां सत्सम्प्रयोगे सति पुरुषस्य जायमाना बुद्धिः प्रत्यक्षमितिसूत्रार्थः, तथा चातिव्याप्तिः संशयविपर्ययबुद्ध्योरपि इन्द्रियसंप्रयोगजत्वेन प्रत्यक्षत्वप्रसङ्गात्।

अथ सत्सम्प्रयोग इति सतां सम्प्रयोग इति व्याख्यायते तथाऽपि निरालम्बनं विभ्रमा एवार्थनिरपेक्षजन्मानो निरस्ता भवेयुर्न सालम्बनौ संशयविपर्ययौ। 10

अथ सति सम्प्रयोग इति सत्सप्तमीपक्ष एव न त्यज्यते संशयविपर्ययच्छेदी च सम्प्रयोग इत्युपसर्गो वर्ण्यते यथोक्तम्

---

'चोदनालक्षणोऽर्थो धर्मः' इति प्रकृतप्रतिज्ञासङ्गत्यभावादिति। चोदनैव धर्मे प्रमाणं न प्रत्यक्षादि, यतस्तदेवंलक्षणकं प्रसिद्धमित्येवंलक्षणानुवादेन प्रकृतसङ्गतिर्भवेन्न लक्षणविधानेन 'एवंरूपं यत् तत् प्रत्यक्षं बोद्धव्यम्' इति। 'एवं सत्यनुवादत्वं लक्षणस्यापि सम्भवेत्'; एवंसति 'सम्यगर्थे हि संशब्दो दुष्प्रयोगनिवारणः' इत्यादिप्रकारप्रतिपादने। 15

निरालम्बनविभ्रमाः स्वप्नादिज्ञानानि।

अथ सति संप्रयोग इति 'सति' सप्तमीपक्ष एवेति। संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्मेति क्रियमाणे संप्रयोग इति किं सप्तम्यधिकरणे, उभयस्य च भावेन भावलक्षण इति सन्देहः स्यात्। अधिकरणसप्तमीपक्षे हि संप्रयोगविषयं यद् ज्ञानं तत् प्रत्यक्षं स्यान्न संप्रयुज्यमानघटादिविषयमिति, तन्निवृत्त्यर्थः सच्छब्दोपादानम्। सति संप्रयोगे सम्प्रयोगे सतीत्यर्थः। तथा चाह— 20

सप्तम्यैव हि लभ्येत सदर्थः कल्पना पुनः।
परेषां वारणीयेति यत्नो जैमिनिना कृतः। इति। 25

सम्यगर्थे च संशब्दो दुष्प्रयोगनिवारणः ।
दुष्टत्वाच्छुक्तिकायोगो वार्यतां रजतेक्षणात् ।। इति ।।

तथापि प्रयोगसम्यक्त्वस्यातीन्द्रियत्वेन प्रत्यक्षानवगम्यत्वात् कार्यतोऽवगतिर्वक्तव्या, कार्यं च ज्ञानं न च तद्विशेषितमेव प्रयोगस्य सम्यक्तामवगमयति । न च
5 तद्विशेषणपरमिह पदमप्यक्षरमपि मात्रामात्रमपि वा सूत्रे पश्यामः । सतां प्रयोग इति च परं निरालम्बनविज्ञाननिवृत्तये वर्णितम्, सतीति तु सप्तम्यैव गतार्थत्वादनर्थम् । लोकत एव कार्यविशेषावगमात् प्रयोगसम्यक्त्वमवगमिष्याम इति चेल्लोकत एव प्रत्यक्षस्य सिद्धत्वात् किं तल्लक्षणे सूत्रसामर्थ्ययोजनाक्लेशेन ।

यदप्यत्रभवान् वृत्तिकारः प्राह यद् व्यभिचारि न तत्प्रत्यक्षम्, यत्प्रत्यक्षं
10 यद्विषयं ज्ञानमन्यसम्प्रयोगे भवति न तत्प्रत्यक्षमित्येवं तत्सतोर्व्यत्ययेन लक्षणमनपवादमवकल्पत इति तदपि वृथाटाटचामात्रम्, संशयज्ञानेन व्यभिचारानतिवृत्तेः । तत्र हि यद्विषयं ज्ञानं तेन सम्प्रयोगे इन्द्रियाणां पुरुषस्य बुद्धिजन्म सत् प्रत्यक्षं तदन्यविषयं ज्ञानमन्यसम्प्रयोगे भवति न तत्प्रत्यक्षमस्त्येव ।

ननूभयविषयं ज्ञानं न चोभाभ्यां सम्प्रयुक्तमिन्द्रियम्, मैवम् न हि धव-
15 खदिरवत् द्वावपि संशयसंविदि प्रतिभासेते, किन्तु स्थाणुर्वा पुरुषो वेत्यनिर्धारितैकतरपदार्थतत्त्वावमर्शी संशयो जायते, नूनं च तयोरन्यतरेणेन्द्रियं सम्प्रयुक्तमेवेति उभयावमर्शित्वाच्च संशयस्य येन सम्प्रयुक्तं चक्षुस्तद्विषयमपि तज्ज्ञानं भवत्येवेति नातिव्याप्तिः परिहृता भवति ।

अथ ब्रूयुः किमनेन परिक्लेशेन, न लक्षणवर्णनमस्माकमभिमतम्, अनुवाद-
20 पक्षनिक्षिप्तत्वात् । अपि तु लोकप्रसिद्धप्रत्यक्षानुवादेन धर्मं प्रति अनिमित्तत्वमेव विधीयते । न धर्मं प्रति प्रमाणं प्रत्यक्षं विद्यमानोपलम्भनत्वात्, विद्यमानार्थग्राहि-

---

शुक्तिकायोगो दुष्टत्वात् 'सं' शब्देन वार्यते । कथं तस्य दुष्टत्वमिति चेत् तदाह रजतेक्षणादिति ।

यदप्यत्रभवानिति । अत्रभवान् पूज्यो वृत्तिकार उपवर्षः, तत्कृतसत्तत्-
25 च्छब्दव्यत्ययपक्षे सच्छब्दः शोभनपर्यायः 'सत्प्रत्यक्षं शोभनं प्रत्यक्षम्' इत्यर्थः ।

त्वादित्यर्थः। धर्मश्च त्रिकालानवच्छिन्नः, तस्य यजेत दद्यात् जुहुयाद् इत्यादि-शब्देभ्यः प्रतीतेः। तर्हि सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमिति किमर्थो ग्रन्थ इति चेन्न, विद्यमानोपलम्भनत्वमसिद्धमिति परो ब्रूयात् स वक्तव्यः विद्यमानोपलम्भनं प्रत्यक्षं सत्सम्प्रयोगजत्वादिति। प्रत्यक्षग्रहणमपि हेतुनिर्देशार्थ-मेव, सत्सम्प्रयोगस्यासिद्धतां ब्रुवन्ननेन प्रत्याख्यायते, सत्सम्प्रयोगजं प्रत्यक्षं प्रत्यक्ष- 5 त्वादिति। तदुक्तम्, "प्रत्यक्षत्वमदो हेतुः शेषहेतुप्रसिद्धये" इति। स्वातन्त्र्येणापि प्रत्यक्षत्वं धर्मग्राहकत्वनिषेधाय वक्तव्यम्। न धर्मग्राहि प्रत्यक्षं प्रत्यक्षत्वादस्मदादि-प्रत्यक्षवदित्येवमन्यत्रैव सूत्रतात्पर्यान्नातिव्याप्त्यादिदोषावसर इहेति।

### लौकिकालौकिकप्रत्यक्षयोर्धर्माग्राहित्वसाधने दोषः

तदेतदपि न प्रामाणिकमनोनुकूलम्। कतरस्य प्रत्यक्षस्य धर्मं प्रत्यनिमित्तत्वं 10 प्रतिपाद्यते? किमस्मदादिप्रत्यक्षस्य योगिप्रत्यक्षस्य वा। तत्रास्मदादिप्रत्यक्षस्य तथात्वे सर्वेषामविवाद एवेति किं तत्रेयता श्रमेण? योगिप्रत्यक्षस्य तु भवताम-सिद्धत्वात् कस्य धर्मं प्रत्यनिमित्तत्वप्रतिपादनम्?

एवञ्च धर्मिणोऽभावादाश्रयासिद्धतां स्पृशेत्।
विद्यमानोपलम्भत्वप्रत्यक्षत्वादिसाधनम्॥ 15

परप्रसिद्धया तत्सिद्धिरिति चेत् केयं प्रसिद्धिर्नाम? प्रमाणमूला तद्विपरीता वा। आद्ये पक्षे प्रमाणस्यापक्षपातित्वात् परस्येव तवापि तत्सिद्धिर्भवतु, अप्रमाण-मूलत्वे तु न कस्यचिदप्यसौ प्रसिद्धिः।

योगिज्ञानं परेषां यत् सिद्धं तदनुभाषणे।
प्रतिज्ञापदयोरेव व्याघातस्ते प्रसज्यते॥ 20

---

धर्मश्च त्रिकालाऽनवच्छिन्न इति। यजेतेत्यादौ हि विधिर्भावनायाः कार्यत्व-मवगमयति, तेन च कार्यात्मना रूपेण सैव भावना धर्मः, तच्चास्याः कालत्रयासंस्पृष्टं रूपम्। अयजत यजते यक्ष्यत इति धर्मे कालत्रयासंस्पर्शेन तत्प्रतीतेः। न च खपुष्पादि-वत् कालत्रयासंस्पर्शाद् असत्त्वमाशङ्क्यम्, यतो न खपुष्पादीनां कालत्रयासंस्पर्शकृत-मसत्त्वम्, अपि तु उपलम्भकप्रमाणाभावनिबन्धनम्। प्रत्यक्षत्वमदो हेतुः शेषहेतुप्रसिद्धये 25 इति। अस्य परमर्द्धम् 'अस्मदादौ प्रसिद्धत्वाद् योग्यर्थमभिधीयते' इति।

परैर्हि धर्मग्राहि योगिज्ञानमभ्युपगतम्, अतस्तदनुभाषणे धर्मग्राहकं न धर्मग्राहकमिति उक्तं स्यात् ।

परसंसिद्धमूलश्च नानुमानं प्रकल्पते ।
उक्तं भवद्भिरेवेदं निरालम्बनदूषणम् ॥
साध्यसिद्धिर्यथा नास्ति परसिद्धेन हेतुना ।
तथैव धर्मिसिद्धत्वं परसिद्ध्या न युज्यते ॥

तत्रैतत् स्यात् प्रसङ्गसाधनमिदं प्रसङ्गश्च नाम परप्रसिद्धेन परस्यानिष्टापादनमुच्यते, परस्य च विद्यमानोपलम्भनं सत्सम्प्रयोगजन्यं च प्रत्यक्षं प्रसिद्धम्, अतस्तेनैव धर्मेण हेतुना धर्मानिमित्तत्वं तस्योपपद्यत इति को दोषः ? नैतदेवम्

प्रसङ्गसाधनं नाम नास्त्येव परमार्थतः ।
तद्धि कुड्यं विना तत्र चित्रकर्मेव लक्ष्यते ॥

न हि नभःकुसुमस्य सौरभासौरभविचारो युक्तः, अथापि किं न एतेन भवत्विदं प्रसङ्गसाधनम् ।

तदत्रापि न तु व्याप्तिप्रतीतिरिह मादृशाम् ।
न धर्मग्राहि सर्वेषां प्रत्यक्षमिति वेत्ति कः ॥

मत्प्रत्यक्षमक्षमं धर्मग्रहणे इति भवान्न जानीते, त्वत्प्रत्यक्षमपि न धर्मग्राहीति नाहं जाने, अन्यस्य प्रत्यक्षमीदृशमेवेत्युभावप्यावां न जानीवहे ।

त्वया तु यदि सर्वेषां प्रत्यक्षं ज्ञातमीदृशम् ।
तर्हि त्वमेव योगीति योगिनो द्वेक्षि किं वृथा ॥
प्रामाणिकस्थितिं तस्मादित्थं श्रोत्रिय बुध्यसे ।
परोक्तेऽतीन्द्रिये ह्यर्थे मा वादीर्दूषणं पुनः ॥
प्रमाणसिद्धे हतशक्तिदूषणं प्रमाणशून्येऽपि वृथा तदुक्तयः ।
निरस्य चोद्यव्यसनन्तु मृग्यतामतीन्द्रिये वस्तुनि साधनं पुनः ॥
स चेत् पर्यनुयुक्तः सन् वक्तुं शक्नोति साधनम् ।
ओमिति प्रतिपत्तव्यं नो चेन्नास्त्येव तस्य तत् ॥

## मीमांसकानभिमतयोगिप्रत्यक्षसाधनम्

आह शिक्षिताः स्मः, प्रामाणिकवृत्तं न दूषणं ब्रूमो भवन्तमेवानुयुञ्ज्महे तदेतर्हि कथ्यतां धर्माधिगमनिपुणयोगिप्रत्यक्षसिद्धौ किं प्रमाणमिति । इदमुच्यते,

दर्शनातिशय एव प्रमाणम्। तथा ह्यस्मदादिरपेक्षितालोकोऽवलोकयति निकट-स्थितमर्थवृन्दम्, उन्दुरवैरिणस्तु सान्द्रतमतमःपङ्कपटलविलिप्तदेशपतित-मपि संपश्यन्ति, संपातिनामा च गृध्रराजो योजनशतव्यवहितामपि दशरथनन्दन-सुन्दरीं ददर्शेति रामायणे श्रूयते, सोऽयं दर्शनातिशयः शुक्लादिगुणातिशय इव तारतम्यसमन्वित इति गमयति परमपि निरतिशयमतिशयम्। अतश्च यत्रास्य परः प्रकर्षस्ते योगिनो गीयन्ते। दर्शनस्य च परोऽतिशयः सूक्ष्मव्यवहितविप्रकृष्टभूत-भविष्यदादिविषयत्वम्।

ननु स्वविषयानतिक्रमेण भवतु तदतिशयकल्पना, धर्मस्तु चक्षुषो न विषय एव। यदुक्तम्

> यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात्।
> दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता॥

अपि च

> येऽपि चातिशया दृष्टाः प्रज्ञामेधाबलैर्नृणाम्।
> स्तोकस्तोकान्तरत्वेन न त्वतीन्द्रियदर्शनादिति॥

एतदयुक्तम्। यतो यद्यपि नास्मदादिनयनविषयो धर्मस्तथापि योगीन्द्रिय-गम्यो भविष्यति। तथाहि योजनशतव्यवहितमन्धकारान्तरितं वा नास्मदादिलोचन-गोचरतामुपयाति सम्पातिवृषदंशदृशोस्तु विषयो भवत्येव।

नन्वेवमविषये प्रवृत्तं योगिनां चक्षुर्गन्धरसादीनपि गृह्णीयात्? यथोक्तम्

---

उन्दुरवैरिणो मार्जाराः। रामायणे श्रूयते इति। रामायणोक्त्या प्रामाणिक-त्वमस्यार्थस्य दर्शयति, तस्य च प्रमाणत्वं प्रमाणभूते भारते तदर्थसंकीर्तनात्। शिष्टैश्च शिष्टस्मृतित्वेन परिग्रहादिति। तारतम्यसमन्वित इति। तथाहि ये तारतम्यसमन्वि-तास्ते परातिशययोगिनो दृष्टा, यथाणुत्वमहत्त्वादयः परिमाणविशेषाः परमाणुत्वपरम-महत्त्वलक्षणे परस्मिन्नतिशये प्रकर्षे विश्रान्ताः।

यत्राप्यतिशय इति। सोऽतिशयः स्वार्थानतिलङ्घनात्। स्वार्थं स्वविषयमनति-लङ्घ्य दूरगं सूक्ष्मं वा स्वार्थं गृह्णातु, न पुना रूपे ग्रहणं श्रोत्रव्यापारादित्यर्थः।

वृषदंशो मार्जारः। सम्पातिः गृध्रराजः।

एकेन तु प्रमाणेन सर्वज्ञो येन कल्प्यते ।
नूनं स चक्षुषा सर्वान् रसादीन् प्रतिपद्यते ।। इति ।

नैतदेवम् । रसादिग्राहीण्यपि योगिनामिन्द्रियाणि चक्षुर्वदतिशयवन्त्येवेति न रसादिषु चक्षुर्व्यापारः परिकल्प्यते । धर्मेऽपि न तर्हि कल्पनीय इति चेद्, न, तस्य रसादिवत्तदविषयता शब्दस्याभावात् ।

अपि च योगीन्द्रियाविषयत्वं धर्मस्य कथमवगतवान् भवान् ? अविषयत्वं तद्भावेऽपि तदनवगमादवगम्यते । यथा नयनसद्भावेऽपि शब्दाश्रवणात् तदविषयता शब्दस्यावसीयते । न चैवं योगिचक्षुषि सत्यपि धर्मस्याग्रहणमवगन्तुं शक्नोति भवान् उभयस्यापि भवतः परोक्षत्वादिति, विषयः स तस्य नेति नैव वक्तुं युक्तमिति ।

ननु कर्त्तव्यतारूपस्त्रिकालस्पर्शवर्जितः ।
चक्षुर्विषयतामेति धर्म इत्यतिसाहसम् ।।
सत्यं साहसमेतत्ते मम वा चर्मचक्षुषः ।
नत्वेष दुर्गमः पन्था योगिनां सर्वदर्शिनाम् ।।

यच्च त्रिकालानवच्छिन्नो यजेतेत्यादिलिङादियुक्तशब्दैकशरणावगमो धर्मः कथं ततोऽन्येन प्रमाणेन परिच्छिद्यतामित्युच्यते तदपि प्रक्रियामात्रम् । किमिव हि त्रिकालस्पर्शास्पर्शाभ्यां कृतम् ? यथा वयं गमनादिक्रियाणां देशान्तरप्राप्त्यादिप्रयोजनतां जानीमस्तथाग्निहोत्रादिक्रियाणां स्वर्गादिफलतां ज्ञास्यन्ति योगिन इति किमत्र साहसम् ? यदि हि बाह्येन्द्रियेष्वमर्षो, न तेष्वतिशयो विषह्यते तदलमनुबन्धेन ।

मनःकरणकं ज्ञानं भावनाभ्याससम्भवम् ।
भवति ध्यायतां धर्मे कान्तादाविव कामिनाम् ।।

मनो हि सर्वविषयम्, न तस्याविषयः कश्चिदस्ति । अभ्यासवशाच्चातीन्द्रियेष्वप्यर्थेषु परिस्फुटाः प्रतिभासाः प्रादुर्भवन्तो दृश्यन्ते । यथाहुः

कामशोकाभयोन्मादचौरस्वप्नाद्युपद्रुताः ।
अभूतानपि पश्यन्ति पुरतोऽवस्थितानिव ।। इति ।

---

कामशोकभयोन्मादेति । कामशोकभयैर्यो जनित उन्मादश्चित्तवैकृत्यम् । स च चौरस्वप्नश्च तदादिभिरुपप्लुताः । यत्र स्वप्ने चौरं दृष्ट्वा सहसैव प्रबुद्धः शस्त्राण्युद्यच्छति

नन्वेतेषां मिथ्याज्ञानत्वान्न योगिविज्ञाने दृष्टान्तत्वं युक्तम्। न स्फुटाभासमात्रतया दृष्टान्तत्वोपपत्तेः। न हि शब्दघटयोरपि सर्वात्मना तुल्यत्वम्। तत्र कामशोकादिभावनाभ्यासभुवां प्रतिभासानां बाधकवैधुर्यादप्रामाण्यं भविष्यति नेतरेषां तदभावात्। स्फुटाभासत्वन्तूभयत्रापि तुल्यम्।

नन्वभ्यासोऽपि क्रियमाणो नात्यन्तमपूर्वमतिशयमावहति लङ्घनाभ्यासवत्। 5 योऽपि हि प्रतिदिनमनन्यकर्मा लङ्घनमभ्यस्यति सोऽपि कतिपयपदपरिमितमवनितलमभिलङ्घयति, न तु पर्वतमम्बुधिं वेति। उच्यते

लङ्घनं देहधर्मत्वात् कफजाड्यादिसम्भवात्।
मा गात् प्रकर्षं, ज्ञाने तु तस्य कः प्रतिबन्धकः॥

लङ्घनादौ तु पूर्वेद्युः प्रयत्नसमुपार्जितः। 10
न देहेऽतिशयः कश्चिदन्येद्युरवतिष्ठते॥

तत्र केवलमभ्यासात् प्रक्षये कफमेदसोः।
शरीरलाघवं लब्ध्वा लङ्घयन्ति यथोचितम्॥

इह विज्ञानजन्यस्तु संस्कारो व्यवतिष्ठते।
क्रमोपचीयमानोऽसौ परातिशयकारणम्॥ 15

यथानुवाकग्रहणे संस्थाभ्यासोपकल्पितः।
स्थिरः करोति संस्कारः पाठस्मृत्यादिपाटवम्॥

यथा वा पुटपाकेन शोध्यमानं शनैः शनैः।
हेमनिष्प्रतिकाशं तद् याति कल्याणतां पराम्॥

तथैव भावनाभ्यासाद् योगिनामपि मानसम्। 20
ज्ञाने सकलविज्ञेयसाक्षात्कारे क्षमं भवेत्॥

अस्मदादेश्च रागादिमलावरणधूसरम्।
मनो न लभते ज्ञानप्रकर्षपदवीं पराम्॥

---

स चौरस्वप्न इति धर्मोत्तरो व्याचष्टे। संस्थाभ्यासोपकल्पित इति। एकस्यैव पदादेर्दशकृत्व आद्युच्चारणमभ्यासार्थः, संस्था अध्येतृप्रसिद्धा। निष्प्रतिकाशमिति। निर्गतं 25

प्रत्यूहभावनाभ्यासक्षपिताशेषकल्मषम् ।
योगिनान्तु मनः शुद्धं कमिवार्थं न पश्यति ॥
यथा च तेषां रागादि प्रमाणमवकल्पते ।
तथापवर्गचिन्तायां विस्तरेणाभिधास्यते ॥
5 तदेवं क्षीणदोषाणां ध्यानावहितचेतसाम् ।
निर्मलं सर्वविषयं ज्ञानं भवति योगिनाम् ॥

### प्रातिभज्ञानस्वरूपादिविचारः

अपि चानागतं ज्ञानमस्मदादेरपि क्वचित् ।
प्रमाणं प्रातिभं 'श्वो मे भ्रातागन्ते'ति दृश्यते ॥
10 नानर्थजं न संदिग्धं न बाधविधुरीकृतम् ।
न दुष्टकारणञ्चेति प्रमाणमिदमिष्यताम् ॥
क्वचिद् बाधकयोगश्चेदस्तु तस्याप्रमाणता
यत्रापरेद्युरभ्येति भ्राता तत्र किमुच्यताम् ॥
काकतालीयमिति चेन्न प्रमाणप्रदर्शितम् ।
15 वस्तु तत् काकतालीयमिति भवितुमर्हति ॥

नन्वनर्थजमिदं ज्ञानं भ्रातुः, तज्जनकस्य तदानीमसत्त्वात् । स्यादेतदेवम् यदि तदास्तित्वेन भ्रातरं गृह्णीयात्, किन्तु भाविनमेनं गृह्णाति, भावित्वञ्च तदस्यास्त्येवेति कथमनर्थजं तज्ज्ञानम् ?

ननु भावितया ग्रहणमघटमानम् । भावित्वं हि नाम सावधिः प्रागभावः । 20 अभावस्य च भावेन भ्रात्रा सह कः सम्बन्धः, वस्त्ववस्तुनोर्विरोधात् ? तदेतदसम्यक् ।

---

प्रतिकाशमन्यसादृश्यं यस्मात् तन्निष्प्रतिकाशम् अनन्यसदृशमित्यर्थः । प्रत्यूहभावनाभ्यासेति । रागादीनां मिथ्याज्ञानमूलानां प्रत्यूहो मूलविरोधित्वेन विरुद्धो यस्तत्त्वज्ञानाख्यस्तस्य । प्रमाणमिदमिष्यतामिति । एवम्भूतस्य भवद्भिः प्रमाणतयाभ्युपगमात् । तदुक्तम्

25 'तत्रापूर्वार्थविज्ञानं निश्चितं बाधवर्जितम् ।
अदुष्टकारणारब्धं प्रमाणं लोकसम्मतम् ॥' इति ॥

तद्देशसम्बन्धस्य तत्र प्रागभावो न भ्रातुर्धर्मिणः, स हि विद्यत एव प्रागभावतः। स च कुतश्चिद् भोजनोत्कण्ठादेः कारणात् स्मरणपदवीमुपारूढः श्वस्तनागमनविशिष्टत्वेन प्रतिभातीति प्रातिभस्य स एव जनक इति। तस्मादनर्थजत्वाभावात् प्रमाणं प्रातिभम्। प्रमाणञ्च सत् प्रत्यक्षमेव, न प्रमाणान्तरम्, शब्द-लिङ्ग-सारूप्य-निमित्तानपेक्षत्वात्। 5

ननु प्रत्यक्षमपि मा भूदिन्द्रियानपेक्षत्वात्? मैवम्। मनस एव तत्रेन्द्रियत्वात्। पूर्वोत्पन्नचाक्षुषविज्ञानविशेषणस्य बाह्यस्य वस्तुनो मनो ग्राहकमिति नान्धाद्यभाव इत्युक्तम्। शब्दाद्युपायान्तरविरतौ च जायमानमनवद्यं ज्ञानं मानसं प्रत्यक्षं भवति, सुरभि केतकीकुसुमम्, मधुरा शर्करेति ज्ञानवदित्यप्युक्तम्, अत एव नानियतनिमित्तकम्, न चार्षज्ञानं प्रत्यक्षातिरिक्तस्यार्षनाम्नः प्रत्ययस्याभावात्, 'ऋषीणामपि यज् ज्ञानं तदप्यागमपूर्वकम्' इति हि वदन्ति, आगमग्रहणञ्च निदर्शनार्थम्, अनुपायस्य ज्ञानस्य तेषामसत्वात्। न च सिद्धदर्शनं प्रतिभा, अस्मदादेरपि भावात्। तस्मान्न प्रमाणान्तरं प्रातिभम्, अपि तु प्रत्यक्षमेव। 10

ननु प्रत्यक्षमपि नेदं भवति तद्धि वर्त्तमानैकविषयम्, यथोक्तम् 'सम्बद्धं वर्त्तमानञ्च गृह्यते चक्षुरादिने'ति, तथा एषः प्रत्यक्षधर्मश्च वर्तमानार्थतयैवेति। मैवम्। अनागतग्राहिणः प्रत्यक्षस्य प्रदेशान्तरे स्वयमेवोक्तत्वात्। 'रजतं गृह्यमाणं हि चिरस्थायीति गृह्यते' इति भवानेवावोचत्, तस्मात् प्रत्यक्षमनागतग्राहि 'श्वो मे भ्राता आगन्ते'ति सिद्धम्। 15

---

न भ्रातुर्धर्मिण इति। तत्र देशे भ्रातुरसत्त्वम्, न स्वरूपेणेत्यर्थः।

अत एव नानियतनिमित्तकमिति। अनियतनिमित्तकत्वान्निर्निमित्तत्वम्, अतश्चाप्रामाण्यं प्रातिभस्येति तेषामभिप्रायः। ननु च आर्षाख्यस्य ज्ञानविशेषस्य प्रत्यक्षादिविलक्षणस्य धर्मविशेषाद् ऋषीणां कदाचिच्चास्मदादीनामुत्पद्यमानस्य प्रतिभात्वमुक्तम्, अतस्तस्याः कथं प्रत्यक्षत्वमित्याह—न चार्षज्ञानमिति। केचित् सिद्धानां योगिज्ञानवद् ज्ञानविशेष उत्पद्यते तत् प्रतिभेत्याहुः, तदपि न, अस्मदादीनामसिद्धानामपि प्रतिभाया दर्शनादित्याह—न च सिद्धदर्शनमिति। 20 25

चिरस्थायीति गृह्यत इति। चिरस्थायित्वं हि भाविकालसत्त्वम्, तत् कथं प्रत्य-

## योगिनः सर्वज्ञा न वेति विचारः

एवञ्च अस्मदादीनामिवानागते भ्रातरि योगिनां भविष्यति धर्मे प्रत्यक्षं प्रवर्त्स्यतीति। तस्माद् यत् सर्वज्ञनिषेधाय कथ्यते

यज्जातीयैः प्रमाणैस्तु यज्जातीयार्थदर्शनम्।
5 भवेदिदानीं लोकस्य तथा कालान्तरेऽप्यभूदिति ।।

तदपास्तं भवति। तत्रैतत्स्यात्। सर्वज्ञता योगिनां किमेकेन ज्ञानेन बहुभिर्वा ? न तावदेकेन, न ह्येकस्मिन् ज्ञाने परस्परविरोधिनोऽर्थाः शीतोष्णवदवभासते। नापि बहुभिः, तानि हि क्रमेण वा भवेयुर्युगपद्वा ? न युगपज्ज्ञानानि सम्भवन्ति सूक्ष्मान्तःकरणसापेक्षत्वात्। क्रमभाविभिस्तु ज्ञानैरशेषत्रिभुवनकुहर-
10 निहितनिखिलपदार्थसार्थसाक्षात्करणमेषां मन्वन्तरकोटिभिरपि दुर्घटमिति कथं सर्वज्ञा योगिनः ? उच्यते, युगपदेकयैव बुद्ध्या सर्वत्र सर्वान् अर्थान् द्रक्ष्यन्ति योगिनः।

यत्तु विरुद्धत्वादिति तदप्रयोजकम्, विरुद्धानामपि नीलपीतादीनामेकत्र चित्रप्रत्यये भासनात्, एकत्र च मेचकप्रत्यये सन्निहितपदार्थव्यतिरिक्तसकलवस्त्व-
15 भावग्रहणस्य पूर्वं दर्शितत्वात्। शीतोष्णयोरपि क्वचिदवसरे भवति युगपदुपलम्भः। तद् यथा प्रतपति हुतवहविस्फुलिङ्गनिकरानुकारिकिरणे तरुणोष्मणि ग्रीष्मे हिमशकलशिशिरपयसि सरसि निमग्ननाभिदघ्नदेहस्य पुंसो युगपदेव सरःसलिलसूर्यातपवर्तिनौ शीतोष्णस्पर्शावनुभवपथमवतरतः।

नन्वेकेन ज्ञानेन सर्वान् अर्थान् भूतभाविनः परोक्षानपि पश्यन्तो यौगिनः
20 कथमखिलत्रैलोक्यवृत्तान्तदर्शिनः सकलजगद्गुरोरीश्वराद् विशिष्येरन् ? अस्ति विशेष ईश्वरस्य तथाविधं नित्यमेव ज्ञानम्, योगिनान्तु योगभावनाभ्यासप्रभवमिति।

ननु नादृष्टपूर्वेऽर्थे क्वचिद् भवति भावना।
आगमात्तु परिच्छिन्ने धर्मे भावनयापि किम् ।।

25 चोदनैव धर्मे प्रमाणमिति सावधारणप्रतिज्ञार्थः प्रथममागमादवगतधर्मस्वरूपेषु सत्स्वपि योगिषु न विप्लवत एवेति। उच्यते। योगिष्वस्त्येवायं प्रकारः। पश्चादपि प्रवर्त्तमाने धर्मग्राहिणि प्रत्यक्षे चोदनैवेत्यवधारणं शिथिलीभवत्येव।

अपि चेश्वरज्ञानं सांसिद्धिकमेव धर्मविषयं वेदस्य कारणभूतं वक्ष्यामः। तस्मिन्नपि सति न चोदनैवेत्यवधारणार्थसिद्धिः। तस्मान्न धर्मग्राहकं योगिप्रत्यक्षं विद्यमानोपलम्भनत्वात् सत्सम्प्रयोगजत्वादित्यादिसाधनमप्रयोजकम्।

प्रमाणान्तरविज्ञातप्रमेयप्रतिपादकः।
धर्मोपदेशकः शब्दः शब्दत्वाद् घटशब्दवत् ॥ 5
प्रत्यक्षः कस्यचिद् धर्मः प्रमेयत्वाद् घटादिवत्।
इत्यादयश्च सुलभाः सन्त्येव प्रतिहेतवः ॥
तेन निष्प्रतिघयुक्तिसाधितां योगबुद्धिमखिलार्थदर्शिनीम्।
किं विडम्बयितुमुच्यते मुधा दुष्टहेतुनिकुरुम्बशम्बरम् ॥

तदित्थमपि जैमिनीयं सूत्रमसङ्गतार्थम्, लक्षणपरत्वन्त्वस्य निरस्तमेव। 10
यदपि कैश्चित् प्रत्यक्षलक्षणमुक्तम्, आत्मेन्द्रियमनोऽर्थसन्निकर्षाद् यदुत्पद्यते ज्ञानं तदन्यदनुमानादिभ्यः प्रत्यक्षमिति, तदपि त्रयद्वयसन्निकर्षजन्मनां सुखात्मादिज्ञानानामव्यापकमतिव्यापकञ्च व्यभिचार्यादिबोधानामित्युपेक्षणीयम्।

## सांख्यकारिकोक्तप्रत्यक्षलक्षणखण्डनम्

ईश्वरकृष्णस्तु 'प्रतिविषयाध्यवसायो दृष्टमि'ति प्रत्यक्षलक्षणमवोचत्। तदपि 15 न मनोज्ञम्, अनुमानादिज्ञानानामपि विषयाध्यवसायस्वभावत्वेनातिव्याप्तेः। यत्तु राजा व्याख्यातवान् 'प्रतिराभिमुख्ये वर्त्तते, तेनाभिमुख्येन विषयाध्यवसायः प्रत्यक्षमिति तदप्यनुमानादावस्त्येव, घटोऽयमितिवदग्निमान् पर्वत इत्याभिमुख्येनैव प्रतीतेः। स्पष्टता तु सर्वसंविदां स्वविषये विद्यत एव। अथ मन्यसे सामान्यविहितस्य

---

क्षेण गृह्येतेति भावः। निष्प्रतिघयुक्तिरिति। निष्प्रतिघा युक्तिर्निर्बाधमनुमानम्। 20 "आत्मेन्द्रियमनोऽर्थसन्निकर्षाद् यद् उत्पद्यते ज्ञानं तदन्यद् अनुमानादिभ्यः प्रत्यक्षम्" इति वैशेषिकोक्तं प्रत्यक्षलक्षणम्। तत्र आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेनेति यः सन्निकर्षस्तस्मात्। इन्द्रियगतिज्ञानमानुमानिकं यत् तथा 'अयं पनसः' इति वोभयजं ज्ञानं प्रत्यक्षं प्रसज्यत इति तद्व्यवच्छेदाय 'अन्यदनुमानादिभ्यः' इति विशेषणम्। 25

राजा व्याख्यातवानिति। राजा राजवार्तिककारः। सामान्यविहितस्येति

विशेषेण बाधादनुमानादिव्यावृत्तिः सेत्स्यति, सामान्येनाध्यवसाय उत्सृष्टः स लिङ्गशब्दाभ्यां विशेषित इति तदितरोऽध्यवसायः प्रत्यक्षमिति स्थास्यति । यद्येवं प्रत्यक्षलक्षणमिदानीमव्याकरणीयमेव, शब्दलिङ्गग्रहणे वर्णिते सति तद्वैलक्षण्यादेव प्रत्यक्षं ज्ञास्यत इति । तस्मादिन्द्रियार्थसन्निकर्षोत्पन्नपदोपादानमन्तरेण नानुमानादि
5 व्यवच्छेद उपपद्यत इति इदमपि न प्रत्यक्षलक्षणमनवद्यम् ।

अलमतिविस्तरेण परदर्शनगीतमतो
विगतकलङ्कमस्ति न हि लक्षणमक्षधियः ।
तदमलमक्षपादमुनिनैव निबद्धमिदं
हरति मनांसि लक्षणमुदारधियाम् ॥

10 ## अनुमानलक्षणपरीक्षणम्

एवं प्रमाणज्येष्ठेऽस्मिन् प्रत्यक्षे लक्षिते सति ।
कथ्यतेऽवसरप्राप्तमनुमानस्य लक्षणम् ॥

**तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत् सामान्यतोदृष्टञ्च ।।५।।**

तत्रानुमानस्वरूपं ब्रूमहे ततस्तत्र सूत्रं योजयिष्यामः ।

15 पञ्चलक्षणकाल्लिङ्गाद् गृहीतान्नियमे स्मृतेः ।
परोक्षे लिङ्गिनि ज्ञानमनुमानं प्रचक्षते ॥

अत्रापि लिङ्गविषयं ज्ञानं ज्ञानविषयीकृतं वा लिङ्गं प्रतिबन्धस्मरणसहितं प्रमाणम् । लिङ्गज्ञानं फलम् । लिङ्गिज्ञानस्य वा प्रमाणतायां पूर्ववदुपादानादिज्ञानं फलमुपवर्णनीयम् । करणस्य हि प्रमाणत्वमिति स्थितमेवैतत् । तत्र परोक्षोऽर्थो
20 लिङ्ग्यते गम्यतेऽनेनेति लिङ्गम् । तच्च पञ्चलक्षणम् । कानि पुनः पञ्च लक्षणानि ? पक्षधर्मत्वम्, सपक्षधर्मत्वम्, विपक्षाद्व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वञ्चेति । सिषाधयिषितधर्मविशिष्टो धर्मी पक्षः, तद्धर्मत्वं तदाश्रितत्वमित्यर्थः । साध्यधर्मयोगेन निर्ज्ञातं धर्म्यन्तरं सपक्षस्तत्रास्तित्वम् । साध्यधर्मसंस्पर्शशून्यो धर्मी विपक्षः, ततो व्यावृत्तिः । अनुमेयस्यार्थस्य प्रत्यक्षेणागमेन वानपहरणमबाधितविषयत्वम् ।

---

25 अध्यवसायमात्रस्य प्रत्यक्षत्वे उत्सर्गत्वात् प्राप्ते लिङ्गशब्दजाध्यवसायस्य लिङ्गशब्दविषयत्वेन प्रतिपादनात् तदितरस्य प्रत्यक्षतेति तात्पर्यम् ।

संशयबीजभूतेनार्थेन प्रत्यनुमानतया प्रयुज्यमानेनानुपहतत्वम्, असत्प्रतिपक्षत्वम्। एतैः पञ्चभिर्लक्षणैरुपपन्नं लिङ्गमनुमापकं भवति। एतेषामेव लक्षणानामेकैकापायात् पञ्च हेत्वाभासा वक्ष्यन्ते। यस्य पक्षधर्मता नास्त्यसावसिद्धो हेत्वाभासः, यथा नित्यः शब्दः चाक्षुषत्वात्। साध्यविपर्ययव्याप्तस्तु विरुद्धः, स यथा नित्यः शब्दः कृतकत्वाद् आकाशवत्। सपक्षे सत्त्वं यस्य नास्ति सोऽनैकान्तिकः, यथा नित्यः शब्दः　5 प्रमेयत्वादिति। यस्याबाधितविषयत्वं नास्ति स कालात्ययापदिष्टः, यथा अनुष्णस्तेजोऽवयवी कृतकत्वाद् घटवदिति। यस्य निष्प्रतिपक्षता नास्ति स प्रकरणसमः, यथा अनित्यः शब्दो नित्यधर्मानुपलब्धेः घटवत्, नित्यः शब्दोऽनित्यधर्मानुपलब्धेराकाशवदिति। सोऽयमेतेषु पञ्चसु लक्षणेष्वविनाभावो लिङ्गस्य परिसमाप्यते।

ननु च त्रिलक्षणके हेतावविनाभावः परिसमाप्यते, न च तथाविधे बाधः　10 सम्भवति, बाधाविनाभावयोर्विरोधात्। यच्चेदमग्न्यनुष्णत्वसाधने कृतकत्वं त्रिलक्षणमपि बाधकविधुरितविषयमित्युदाहृतं तदसमीक्षिताभिधानम्, अत्र त्रैलक्षण्यानुपपत्तेः। पक्षधर्म एव तावदयं न भवति, प्रत्यक्षाद्यनिराकृतो हि पक्ष उच्यते, न चायमीदृश इत्यपक्ष एव, तद्धर्मो हेतुः कथं पक्षधर्मः स्यात्? नाप्ययमन्वयी हेतुरन्वयग्रहणसमय एव तद् विप्लवावधारणात्। अन्वयो हि गृह्यमाणः सर्वाक्षेपेण यद् यत्　15 कृतकं तत्तदनुष्णमित्येवं गृह्यते। ततश्च तद्ग्रहणसमय एवायमुष्णोऽपि कृतक इति हृदयपथमवतरति तनूनपादिति कथमन्वयग्रहणम्?

यदि त्वनलमुत्सृज्य घटादावन्वयग्रहः।
नान्तर्व्याप्तिर्गृहीता स्यात् साध्यसाधनधर्मयोः॥
ततश्चैवंविधाद्धेतोः स्वसाध्यनियमोज्झितात्।　20
साध्याभिलाष इत्येवं षण्ढानुनयदोहदः॥

अन्वयपूर्वकत्वाच्च व्यतिरेकग्रहणस्य तन्निराकरणे तदपाकरणमवगन्तव्यम्। अपि च सिषाधयिषितधर्मवैपरीत्येन वह्नेः प्रत्यक्षतो निश्चयाद् वस्तुवृत्तेन स एव विपक्ष इति न ततो व्यतिरेकः कृतकत्वस्येति। तस्मात् त्रैलक्षण्यापायादेव

---

बाधाविनाभावयोर्विरोधादिति। अविनाभावेन साध्यप्रतिबद्धं साधनं　25 ख्याप्यते, बाधया तु साध्यं विनापि साधनस्य सद्भाव इति ज्ञाप्यत इति विरोधः।

हेत्वाभासोऽयमिति न रूपान्तरमबाधितविषयत्वमपेक्षते। कथञ्चेदमबाधितत्वं निश्चीयते ?

न ह्यदर्शनमात्रेण बाधाविरहनिश्चयः।
सर्वात्मना हि नास्तित्वं विद्युः कथमयोगिनः ॥

5 अनिश्चिते तदङ्गे च न हेतोर्हेतुता भवेत्।
यथैव पक्षधर्मादिरूपाणामनुपग्रहे ॥

तस्मादबाधितत्वं रूपान्तरमवचनीयमिति।

अत्राभिधीयते। यदुक्तम् अन्वयग्रहणं सर्वाक्षेपेणेति तद्ग्रहणवेलायामेव-सिषाधयिषितधर्मविपर्ययाध्यासितहुतवहस्वरूपपरिस्फुरणादन्वयशून्योऽयं हेतुरिति
10 तदहृदयङ्गमम्। अन्वयः सत्यं सर्वाक्षेपेण गृह्यते न पुनरेकैकधर्मिसमुल्लेखेन। एवं हि तदानन्त्यादन्वयो ग्रहीतुमेव न शक्यते, अनुमानस्य च वैफल्यमित्थं भवेदग्निमतां धूमवतां सर्वधर्मिणामन्वयावगमकाल एव गृहीतत्वात्।

धूमो हि यत्र यत्रेति सामान्येनैव गृह्यते।
न पुनः पर्वतेऽरण्ये गृहे वेत्येवमिष्यते ॥

15 एवञ्च सत्याक्षेपवाचोयुक्तिरुपपन्ना भविष्यति।

न चैवं सति वक्तव्यं षण्ढानुनयमार्गणम्।
न हि तद् वर्जमित्येवं व्याप्तिग्रहणमिष्यते ॥

सामान्येन च व्याप्तिर्गृहीता सती सिषाधयिषितधर्म्यपेक्षायां सैवान्तर्व्याप्तिरुच्यते। यैव च नगलग्नाग्न्यनुमानसमये तद्व्यतिरिक्तकान्तारादिप्रदेशवर्त्तिनी
20 बहिर्व्याप्तिरभूत् सैव कालान्तरे कान्तारवर्त्तिनि वह्नावनुमीयमानेऽन्तर्व्याप्तिरवतिष्ठते। तदिहापि यत्कृतकं तदनुष्णमिति सामान्यतः परिच्छेदान्न तदानीमनलोन्मेष इति सिद्धोऽन्वयः। व्यतिरेकोऽपि कार्ये तेजोऽवयविनि पक्षीकृते कृतकत्वस्य तेजः-

---

एवञ्च सत्याक्षेपवाचोयुक्तिरिति। अन्यथा हि परामर्श एव स्यान्नाक्षेपः। अप्रतीयमानस्य हि कल्पनमाक्षेप इति।

परमाणुभ्यो विधुतारकपरमाण्वनभ्युपगमे तु विपक्ष एव नास्तीति तदभावात् सुतरां तत्रावृत्तिर्भवतीति । न हि सपक्ष इव विपक्षे वृत्तिरिष्यते येन यत्नतः तत्सिद्धये यतेत । अग्निरेव विपक्ष इति चेन्, मैवम् । न हि पक्ष एव विपक्षो भवितुमर्हति ।

ननु वस्तूनामद्विरूपत्वात् पक्षो नाम परमार्थतो नास्त्येव साध्यधर्माधिकरणभूतश्चेत् सोऽर्थस्तत् सपक्ष एव, विपर्यये तु न विपक्षतामतिवर्त्तते । न च क्रमद्वययोगित्वं रूपद्वयरहितत्वं वा वस्तुनः समस्तीति । तदयुक्तम् । अनुमानोच्छेदप्रसङ्गात् । अद्विरूपत्वेऽपि वस्तूनां निसर्गविषयीकृतोऽर्थः कश्चित् पक्ष एषितव्यः, तदभावे तदपेक्षस्वरूपयोः सपक्षविपक्षयोरप्यभावः स्यात् । तदस्य पक्षस्य सतोऽपि सपक्षत्वमारोप्य यत्तेन व्यभिचारचोदनं तेनाग्न्यनुमानमपि विप्लवेत ।

ननु पर्वतादिर्धर्मी न ज्वलनाख्यसाध्यधर्मशून्यतया तत्र निश्चितः, तेजोऽवयवी त्वनुष्णत्ववैपरीत्येन प्रत्यक्षतो निश्चित इति, तत् किमिदानीं पर्वतादिरग्निमत्तयानिश्चितः, तथाभ्युपगमे वा किमनुमानेन ?

ननु न पर्वतोऽग्निमत्तया निश्चितो नापि तद्वैपरीत्येन, किन्तु सन्दिग्ध एवास्ते । यद्येवं सन्दिग्धेऽपि विपक्षे वर्त्तमानो धूमादिरहेतुरेव स्यान्निश्चितविपक्षवृत्तिवत् सन्दिग्धविपक्षवृत्तेरप्यहेतुत्वात् सर्वमनुमानमुत्सीदेत् । तस्मात् पक्षेण व्यभिचारचोदनमनुचितमिति व्यतिरेकवानेवायं हेतुः । यत्पुनरभिहितम् । अनिराकृतपक्ष-

---

**तदभावात् सुतरां तत्रावृत्तिरिति** । तथा चाह

तस्माद् वैधर्म्यदृष्टान्ते नेष्टोऽवश्यमिहाश्रयः ।
तदभावेऽपि तन्नेति वचनादपि तद्गतेः ॥

**ननु वस्तूनामद्विरूपत्वादिति** । कथं हि यत् साध्यधर्माधिकरणतया लब्धसपक्षव्यपदेशं तद्विपर्ययेण चासादितविपक्षभावं तदेव तथाविधं पक्षव्यपदेशं लभेतेत्यर्थः ।

**संदिग्धविपक्षवृत्तेरिति** । श्यामोऽयं तत्पुत्रत्वादिति संदिग्धविपक्षवृत्तिः । यद्यपि दृश्यमानेषु तत्पुत्रेषु श्यामत्वदर्शनात् सपक्षवृत्तित्वमस्य तथाप्यदृश्यमानेषु कदाचिदश्यामेष्वपि तत्पुत्रत्वं भवेदिति तत्पुत्रत्वस्य विपक्षे अश्यामे च वृत्तिः सन्दिग्धा । **व्यतिरेकवानेवायं हेतुरिति** । न सन्दिग्धविपक्षवृत्तिरित्यर्थः ।

हेत्वाभासोऽयमिति न रूपान्तरमबाधितविषयत्वमपेक्षते। कथञ्चेदमबाधितत्वं निश्चीयते ?

न ह्यदर्शनमात्रेण बाधाविरहनिश्चयः।
सर्वात्मना हि नास्तित्वं विद्युः कथमयोगिनः ॥

5 अनिश्चिते तदङ्गे च न हेतोर्हेतुता भवेत्।
यथैव पक्षधर्मादिरूपाणामनुपग्रहे ॥

तस्मादबाधितत्वं रूपान्तरमवचनीयमिति।

अत्राभिधीयते। यदुक्तम् अन्वयग्रहणं सर्वाक्षेपेणेति तद्ग्रहणवेलायामेव सिषाधयिषितधर्मविपर्ययाध्यासितहुतवहस्वरूपपरिस्फुरणादन्वयशून्योऽयं हेतुरिति 10 तदहृदयङ्गमम्। अन्वयः सत्यं सर्वाक्षेपेण गृह्यते न पुनरेकैकधर्मिसमुल्लेखेन। एवं हि तदानन्त्यादन्वयो ग्रहीतुमेव न शक्यते, अनुमानस्य च वैफल्यमित्थं भवेदग्निमतां धूमवतां सर्वधर्मिणामन्वयावगमकाल एव गृहीतत्वात्।

धूमो हि यत्र यत्रेति सामान्येनैव गृह्यते।
न पुनः पर्वतेऽरण्ये गृहे वेत्येवमिष्यते ॥

15 एवञ्च सत्याक्षेपवाचोयुक्तिरुपपन्ना भविष्यति।

न चैवं सति वक्तव्यं षण्ढानुनयमार्गणम्।
न हि तद् वर्जमित्येवं व्याप्तिग्रहणमिष्यते ॥

सामान्येन च व्याप्तिर्गृहीता सती सिषाधयिषितधर्म्यपेक्षायां सैवान्तर्व्याप्तिरुच्यते। यैव च नगलग्नाग्न्यनुमानसमये तद्व्यतिरिक्तकान्तारादिप्रदेशवर्त्तिनी 20 बहिर्व्याप्तिरभूत् सैव कालान्तरे कान्तारवर्त्तिनि वह्नावनुमीयमानेऽन्तर्व्याप्तिरवतिष्ठते। तदिहापि यत्कृतकं तदनुष्णमिति सामान्यतः परिच्छेदान्न तदानीमनलोन्मेष इति सिद्धोऽन्वयः। व्यतिरेकोऽपि कार्ये तेजोऽवयविनि पक्षीकृते कृतकत्वस्य तेजः-

---

एवञ्च सत्याक्षेपवाचोयुक्तिरिति। अन्यथा हि परामर्श एव स्यान्नाक्षेपः। अप्रतीयमानस्य हि कल्पनमाक्षेप इति।

परमाणुभ्यो विद्युतारकपरमाण्वनभ्युपगमे तु विपक्ष एव नास्तीति तदभावात् सुतरां तत्रावृत्तिर्भवतीति । न हि सपक्ष इव विपक्षे वृत्तिरिष्यते येन यत्नतः तत्सिद्धये यतेत । अग्निरेव विपक्ष इति चेन्, मैवम् । न हि पक्ष एव विपक्षो भवितुमर्हति ।

ननु वस्तूनामद्विरूपत्वात् पक्षो नाम परमार्थतो नास्त्येव साध्यधर्माधिकरणभूतश्चेत् सोऽर्थस्तत् सपक्ष एव, विपर्यये तु न विपक्षतामतिवर्त्तते । न च क्रमद्वययोगित्वं रूपद्वयरहितत्वं वा वस्तुनः समस्तीति । तदयुक्तम् । अनुमानोच्छेदप्रसङ्गात् । अद्विरूपत्वेऽपि वस्तूनां निसर्गविषयीकृतोऽर्थः कश्चित् पक्ष एषितव्यः, तदभावे तदपेक्षस्वरूपयोः सपक्षविपक्षयोरप्यभावः स्यात् । तदस्य पक्षस्य सतोऽपि सपक्षत्वमारोप्य यत्तेन व्यभिचारचोदनं तेनाग्न्यनुमानमपि विप्लवेत ।

ननु पर्वतादिर्धर्मी न ज्वलनाख्यसाध्यधर्मशून्यतया तत्र निश्चितः, तेजोऽवयवी त्वनुष्णत्ववैपरीत्येन प्रत्यक्षतो निश्चित इति, तत् किमिदानीं पर्वतादिरग्निमत्तयानिश्चितः, तथाभ्युपगमे वा किमनुमानेन ?

ननु न पर्वतोऽग्निमत्तया निश्चितो नापि तद्वैपरीत्येन, किन्तु सन्दिग्ध एवास्ते । यद्येवं सन्दिग्धेऽपि विपक्षे वर्त्तमानो धूमादिरहेतुरेव स्यान्निश्चितविपक्षवृत्तिवत् सन्दिग्धविपक्षवृत्तेरप्यहेतुत्वात् सर्वमनुमानमुत्सीदेत् । तस्मात् पक्षेण व्यभिचारचोदनमनुचितमिति व्यतिरेकवानेवायं हेतुः । यत्पुनरभिहितम् । अनिराकृतपक्ष-

---

तदभावात् सुतरां तत्रावृत्तिरिति । तथा चाह

तस्माद् वैधर्म्यदृष्टान्ते नेष्टोऽवश्यमिहाश्रयः ।
तदभावेऽपि तन्नेति वचनादपि तद्गतेः ॥

ननु वस्तूनामद्विरूपत्वादिति । कथं हि यत् साध्यधर्माधिकरणतया लब्धसपक्षव्यपदेशं तद्विपर्ययेण चासादितविपक्षभावं तदेव तथाविधं पक्षव्यपदेशं लभेतेत्यर्थः ।

संदिग्धविपक्षवृत्तेरिति । श्यामोऽयं तत्पुत्रत्वादिति संदिग्धविपक्षवृत्तिः । यद्यपि दृश्यमानेषु तत्पुत्रेषु श्यामत्वदर्शनात् सपक्षवृत्तित्वमस्य तथाप्यदृश्यमानेषु कदाचिदश्यामेष्वपि तत्पुत्रत्वं भवेदिति तत्पुत्रत्वस्य विपक्षे अश्यामे च वृत्तिः सन्दिग्धा । व्यतिरेकवानेवायं हेतुरिति । न सन्दिग्धविपक्षवृत्तिरित्यर्थः ।

वृत्तित्वमस्य नास्तीति, तत् सत्यम् । वयमप्यमुं पक्षमध्यक्षबाधितमिच्छाम एव, यत्तु न पक्षमात्रपर्यवसितो बाधः किन्तु हेतुमपि स्पृशति ।

न हेतुनिरपेक्षात्मा पक्षो नामास्ति कश्चन ।
प्रसाधयितुमिष्टो हि हेतुना पक्ष उच्यते ॥

5 स न साधयितुं शक्यः प्रत्यक्षे प्रतियोगिनि ।
साध्यापहारद्वारेण हेतुर्भवति बाधितः ॥

अबाधितानुमेयत्वमत एवास्य लक्षणम् ।
ननु हेतुरसिद्धोऽयं ज्वलने वृत्तिसम्भवात् ॥

यत्तु बाधितता ज्ञातुं शक्या नेति विकल्पितम् ।
10 पक्षस्यापि महाभाग कथं तां प्रतिपत्स्यसे ॥

प्रयत्ने क्रियमाणेऽपि यदि बाधा न दृश्यते ।
नास्त्येवेत्यवगन्तव्यं व्यवहारो हि नान्यथा ॥

अतस्त्रिलक्षणेऽपि हेतौ बाधसम्भवादबाधितत्वं रूपान्तरं वक्तव्यम् । एवञ्च यदुच्यते बाधाविनाभावयोर्विरोधादिति तत् कथञ्चिद् युक्तं कथञ्चिदयुक्तम् । पञ्च-
15 लक्षणके लिङ्गे यः परिसमाप्तोऽविनाभावस्तत्र नास्त्येव बाध इत्येवं युक्तमेतत् । त्रिलक्षणकलिङ्गाविनाभावाभिप्रायेण त्वयुक्तमेतदित्यलं प्रसङ्गेन ।

नियमस्मृतेरिति, विविच्यतां कोऽयं नियमो नाम ? व्याप्तिरविनाभावो नित्यसाहचर्यमित्यर्थः ।

---

व्यवहारो हि नान्यथेति । यत्ने क्रियमाणेऽपि यन्नोपलभ्यते तच्चेन्नास्तित-
20 तया निश्चीयते तदा सर्पाद्यभावनिश्चयनिबन्धनो व्यवहारो न स्यात् । अत एव विरुद्धाव्यभिचारीति[१] । अत एव वस्तुनोऽद्विरूपत्वादेव परैरिष्टोऽपि भवद्भिर्विरुद्धाव्यभिचारी नेष्यत इति ।

---

१—अतःपरं 'अत एव विरुद्धाव्यभिचारीति' ग्रन्थप्रतीकष्टिप्पण्यां वर्त्तते परन्तु तादृशीग्रन्थपंक्तिर्न दृश्यतेऽत्र ।

## व्याप्तिग्रहोपाये शाक्यमतम्

आह नैतावत्येव विरन्तुमुचितम्, तस्य तदविनाभावित्वमित्यत्र हि निमित्तमन्वेषणीयं तार्किकैः। तच्च तादात्म्यतदुत्पत्तिरूपमीक्षितवन्तो भिक्षवः। यो हि यदात्मा भावः स कथं तमुत्सृजति ? वृक्षात्मिकैव हि शिंशपा तेन वृक्षत्वमनुमापयति, सोऽयं स्वभावहेतुरुच्यते वृक्षोऽयं शिंशपात्वादिति। तत्र तादात्म्यं प्रतिबन्धः, 5 कार्यञ्च नाम कारणाधीनात्मलाभमेव भवति न कारणानपेक्षमिति, तदुपलभ्यमानं तदनुमापयत्यग्निरत्र धूमादिति। कार्यहेतौ तदुत्पत्तिः प्रतिबन्धः। एवं हि द्विविधं प्रतिबन्धमनुमेयाव्यभिचारनिबन्धनमनुक्त्वा केवलसाहचर्यनियममात्रवर्णनं यत् प्रसारिका सैवेति।

## शाक्यमतखण्डनम् 10

उच्यते। पादप्रसारिकैव साधीयसी स्थूलदृष्टिभिरवलम्बिता, परं न सूक्ष्मदृष्टिभिरुत्प्रेक्षितास्तादात्म्यादिप्रतिबन्धाः। तादात्म्ये तावद् गमकाङ्गे हेतुसाध्ययोरव्यतिरेके गम्यगमकभाव एव दुरुपपपादः। न खल्वगृहीतं लिङ्गं लिङ्गिप्रतीतिमाधातुमर्हति। तत्र लिङ्गबुद्धौ लिङ्गं प्रतिभासते न वा ? अप्रतिभासे तद्बुद्धया तदग्रहणात् कथं तस्य तदात्मकत्वम् ? प्रतिभासे तु लिङ्गवत् प्रत्यक्ष एव सोऽर्थ 15 इति किमनुमानेन ? विपरीतसमारोपव्यवच्छेदार्थमनुमानमिति चेद् ? न। तत्स्वरूपग्रहणे विपरीतारोपणावसराभावात्। न हि शिरःपाण्यादिविशेषदर्शने सति स्थाणुसमारोपः प्रवर्त्तते। तत्र तद्भेदादुपपद्येतापि न हि शिरःपाण्यादय एव पुरुष इति। तद्ग्रहणेऽप्यपुरुषारोपः कामं भवेत्। इह वृक्षत्वशिंशपात्वयोरभेदात् शिंशपात्वग्रहणे सति का कथा वृक्षेतरसमारोपस्य ? अपि च वृक्षत्वग्रहणे सति सामान्यधर्म- 20 ग्रहणाद् विशेषानध्यवसायात् कदाचिदशिंशपारोपः स्यात्, न तु शिंशपात्वग्रहणे सति अवृक्षत्वसमारोपो युक्तः।

---

विपरीतसमारोपव्यवच्छेदार्थमिति। यो हि द्राघीयसीषु शिंशपासु प्रवृत्तवृक्षव्यवहारो लघ्व्यां शिंशपायामवृक्षत्वमारोपयति तस्यासौ आरोपोऽनेन व्यवच्छिद्यते "वृक्षोऽयं शिंशपात्वात्"। शिंशपात्वप्रतिबद्धं वृक्षत्वं न द्राघीयस्त्वादिप्रतिबद्ध- 25 मित्यर्थः।

प्रमातुः शिंशपात्वं हि यस्य प्रत्यक्षगोचरः ।
परोक्षं तस्य वृक्षत्वमिति नातीव लौकिकम् ॥

किञ्च साध्यसाधनयोरव्यतिरेकाद् यथा शिंशपात्वेन वृक्षत्वमनुमीयते तथा वृक्षत्वेनापि शिंशपात्वमनुमीयेत तादात्म्याविशेषात् । तथा च प्रयत्ननान्तरीय-
5 कत्वेनानित्यत्वं साध्यते तद्वद् अनित्यत्वेनापि तत्साध्येत । ततश्च सपक्षव्याप्त्य-व्याप्तिभ्यां कृतकत्वप्रयत्ननान्तरीयकत्वयोर्यो भेद उक्तः स हीयेत ।

ननु चान्यः सम्बन्धोऽन्यश्च प्रतिबन्धः । द्विष्ठः सम्बन्धः प्रतिबन्धस्तु पराय-त्तत्वलक्षणः । तत्र शिंशपात्वं वृक्षत्वे प्रतिबद्धं न वृक्षत्वं शिंशपात्वे । प्रयत्ननान्त-रीयकत्वमप्यनित्यत्वे नियतं न त्वनित्यत्वं तत्रेति । तथा धूमस्याग्नौ प्रतिबन्धो न
10 त्वग्नेर्धूमे, सत्यमेवम्, किन्त्वेवमुच्यमाने नियम एवाङ्गीकृतो भवेद् न तादात्म्यम् । तादात्म्ये हि यथा शिंशपात्वं शिंशपां विना न दृश्यते तथा वृक्षत्वमपि शिंशपारहितं न दृश्यते । दृश्यते च खदिरादौ शिंशपारहितं वृक्षत्वम्, विद्युदादौ च प्रयत्ननान्त-रीयकत्वरहितमनित्यत्वमुपलभ्यते इति कथमभेदः ?

विना साधनधर्मेण साध्यधर्मोऽयमस्ति हि ।
15 दृष्टस्तद्व्यतिरेकेण तदात्मा चेति कैतवम् ॥

अथ विद्युदाद्यनित्यत्वादन्यदेव घटाद्यनित्यत्वं यत्प्रयत्ननान्तरीयकत्वाभिन्न-मुच्यते तर्हि धर्मिभेदेन धर्माणां भेदेऽन्वयग्रहणानुपपत्तेः सर्वमनुमानमुत्सीदेत् । धूमाग्न्योस्तु कार्यकारणयोर्भेदाद्युक्तं वक्तुं धूमस्याग्नौ प्रतिबन्धो न त्वग्नेर्धूमे । इह तु साध्यसाधनयोरव्यतिरेकान्न तथा शक्यते वक्तुम्, तथाभिधाने वा नाव्यतिरेकः,
20 सर्वदा तादात्म्यं वा त्यज्यतां वृक्षत्वानित्यत्वाभ्यां शिंशपात्वप्रयत्ननान्तरीयकत्वे अनुमीयेताम् नान्तरावस्थातुं लभ्यते । यश्चायमनित्यः शब्दः कृतकत्वादिति स्वभाव-हेतुरुदाहृतः स कथं स्वभावहेतुः ? इदं हि चिन्त्यताम्, अनित्यत्वं नाम किमुच्यते ? किञ्च कृतकत्वमिति । तत्रानित्यत्वं विनाशयोगः, उत्पत्तियोगश्च कृतकत्वम् । उत्पन्नस्य च भावस्य विनाशो न तु उत्पाद एव विनाश इति, कथं साध्यसाधनयोरव्यतिरेकः ?

---

25 अथ विद्युदाद्यनित्यत्वादिति । यदनित्यत्वं प्रयत्नान्तरीयकत्वप्रतिबद्धं न तत् ततोऽन्यत्र विद्युदादाविति नास्ति तस्य ततोऽन्यत्र वृत्तिरिति ।

प्रमाणमिति निर्णीतं प्रत्यक्षं सविकल्पकम् ।
तस्मान्न कल्पनामात्रं चिरक्षिप्रादिसंविदः ।।

न च सम्परिदृश्यमानकरणविर्निर्मितत्वमुपपद्यते क्रियमाणस्य पटादेः कार्यस्य । तदुत्पादस्य च तन्तुतुरीवेमशलाकाकुविन्दादिकारणवृन्दस्य साम्येऽपि क्वचित्तूर्णं कृतं क्वचिच्चिरेण कृतमिति प्रतिभासभेददर्शनान्निमित्तान्तरं चिन्तनीयम् । 5

ननु परिस्पन्दादिक्रियाभेद एवात्र निमित्तम्, कश्चित्परिस्पन्दश्चतुरः कश्चिन्मन्थर इति क्वचित् क्षिप्रबुद्धिः क्वचित् चिरबुद्धिरिति । नैतच्चारु । परिस्पन्दगतयोरपि चातुर्यमान्थर्ययोर्निमित्तान्तरकार्यत्वात्, परिस्पन्देऽपि चिरेण गच्छति शीघ्रं धावतीति चिरक्षिप्रादिप्रतीतिर्दृश्यते । आह न देवदत्तादिपरिस्पन्दनिबन्धनाः क्रमाक्रमादिप्रत्ययाः किन्तु ग्रहनक्षत्रादिपरिस्पन्दनिबन्धनाः । स एव च ग्रहतारादिपरिस्पन्दः काल इत्युच्यते, तत्कृत एवायं यामाहोरात्रमासादिव्यवहारः । तस्य स्वत एव भेदादौपाधिकभेदकल्पनाक्लेशो न भविष्यति । भेदपरिच्छेदे नालिकाप्रहरादिरूपाय इयती नालिका इयन्मुहूर्तम् इयान् प्रहर इति । तत्रैकस्मिन् मुहूर्ते प्रहरे वा निर्वर्त्यमानेषु बहुषु कार्येषु युगपदिति भवति मतिः, मुहूर्तान्तरापेक्षेषु क्रमेणेति । तस्माद् ग्रहादिपरिस्पन्द एव तैस्तैर्निमित्तैरुपलक्ष्यमाणप्रमाणः काल इति । कालविदश्च ज्योतिर्गणकास्त एवैनं बुध्यन्ते । तदसाम्प्रतम् । चन्द्रादिग्रहपरिच्छेदेऽपि क्रियादिप्रतीतिदर्शनात् । 10 15

चिरेणास्तं गतो भानुः शीतांशुः शीघ्रमुद्गतः ।
उदिताविव दृश्येते युगपद् भौमभार्गवौ ।।

इति दृश्यते प्रतिभासः । न च ग्रहान्तरपरिस्पन्दकारणक एष शक्यते वक्तुमनवस्थाप्रसङ्गात् । तस्मान्न ग्रहादिपरिस्पन्दः कालः किन्तु वस्त्वन्तरम् यत्कृतोऽयं क्रमादिव्यवहारः । 20

ननु भवत्कल्पितोऽपि कालः किं स्वत एव क्रमस्वभावः हेत्वन्तराद्वा ? स्वतस्तस्य तत्स्वभावत्वे कार्यस्यैव पटादेः परिदृश्यमानस्य तत्स्वाभाव्यं भवतु किं कालेन ? हेत्वन्तरपक्षे त्वनवस्था, तस्यापि हेत्वन्तरापेक्षत्वादिति । 25

तदेतद्बालिशचोद्यम् । शुक्लगुणादावप्येवं वक्तुं शक्यत्वात् । गुणस्य स्वतः शुक्लस्वभावत्वे द्रव्यस्यैव तद भवतु किं गुणेन ? गुणान्तरकल्पने त्वनवस्थेति । अथ

तत्र तथा दर्शनान्नेदं चोद्यम्, तदिहापि समानम्। कार्येषु पटादिषु निमित्तान्तरकृतः क्रमादिव्यवहारः, निमित्तान्तरे निमित्तान्तरं न मृग्यमिति। तस्मादस्ति युगपदादिव्यवहारहेतुः कालः, अतश्चैवम्

दृष्टः परापरत्वस्य दिक्कृतस्य विपर्ययः।
युवस्थविरयोः सोऽपि विना कालं न सिध्यति ॥

दूरतरदिगवच्छिन्नो देवदत्तादिः पर इति प्रतिभासते निकटदिगवच्छिन्नस्तु अपर इति। तदत्र न कालव्यतिरिक्तं कारणमुपपद्यते इत्यतोऽनुमीयते कालः। सचायमाकाशवत् सर्वत्रैकः कालः। यथा आकाशलिङ्गस्य शब्दस्य सर्वत्राविशेषाद् विशेषलिङ्गाभावाच्चैक आकाशः सर्वत्र तद्व्यवहाराद् विभुः, अवयवाश्रयानुपलम्भाद् निरवयवः, अनाश्रितश्च अनाश्रितत्वादेव द्रव्यम्, अत एवावयवविभागादिनाशकारणानुपपत्तेर्नित्य इति।

## उपाधिकृतकालत्रैविध्यप्रदर्शनम्

नन्वेवञ्चैकत्वात् कालस्य कुतो वर्त्तमानादिविभागः, तदभावात् कथं त्रिकालविषयमनुमानमुच्यते ? उच्यते। न तात्त्विकः कालस्य भेदो वर्त्तमानादिः किन्त्वसन्नप्यसौ व्यवहारसिद्धये केनचिदुपाधिना कल्प्यते। कः पुनरसावुपाधिः ? क्रियेति ब्रूमः।

ननु तस्या अपि न स्वतो वर्त्तमानादिभेदः, तद्भावे वा सैव तथा भवतु किं कालेन ? मैवम्। उत्पत्तिस्थितिनिरोधयोगिफलावच्छेदेन नानाक्षणपरम्परात्मिकापि क्रियेत्युच्यते। सा वर्त्तमानादिभेदवती च। तथा हि, स्थाल्यधिश्रयणात् प्रभृति आ तदवतरणादुत्पद्यमानौदनाख्यफलावच्छेदात् क्रिया वर्त्तमानोच्यते, पचतीति तदवच्छेदाद् घटाकाशवत् कालोऽपि तावान् वर्त्तमान इत्युच्यते। अभिनिर्वृत्तफलावच्छेदात्मा परिस्पन्दसन्ततिरतीता भवति अपाक्षीदिति, तदवच्छेदात् कालोऽप्यतीत उच्यते। अनारब्धफलावच्छेदाद् भविष्यन्ती क्रियोच्यते पक्ष्यतीति, तथा कालोऽपीत्येवं

---

दृष्टः परापरत्वस्येति। दूरस्थोऽपि युवा अपरोऽप्रकृष्टकालत्वात् कालापेक्षया, दिगपेक्षयात्र पर एवासौ; निकटस्थोऽपि स्थविरः प्रकृष्टकालत्वात् कालापेक्षया तु परो दिगपेक्षया त्वपर एव सन्।

उत्पत्तिस्थितिनिरोधेति। उत्पत्तियोगि उत्पद्यमानम्, स्थितियोगि उत्पन्नम्,

सोपाधिकः, काले एव वर्त्तमानादित्रयव्यवहारः। अतश्च यदुच्यते वृक्षात् पततः पर्णस्य भूतभविष्यन्तावध्वानौ दृश्येते न वर्त्तमानः, तस्माद् वर्त्तमानः कालो नास्तीति तद-सम्बद्धम्,अध्वव्यङ्ग्यत्वाभावात् कालस्य। न ह्यध्वव्यङ्ग्यः कालभेदः किन्तु यथोक्त-क्रमेण क्रियाव्यङ्ग्य एवेति क्रियापरिकल्पितभेदनिबन्धनश्चायं क्षणलवकाष्ठा-कलानालिकामुहूर्त्तयामाहोरात्रमासर्त्त्वयनसंवत्सरयुगमन्वन्तरकल्पव्यवहार इत्यलं प्रसङ्गेन।

तिथ्यादिभेदावधारणञ्च वैदिककर्मप्रयोगाङ्गम्, पौर्णमास्यां पौर्णमास्यया यजेत अमावस्यायाममावस्यया यजेते'ति। एवं वसन्ताद्यृतुभेदोऽपि तदङ्गं 'वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः, शरदि वैश्यः वर्षासु रथकार' इति। स चायमृतुतिथ्यादिविभागः क्रिययैव ज्योतिःशास्त्रोपदिष्टविशिष्टराशिसंसृष्टचन्द्रादि-ग्रहगतया लक्ष्यते लौकिकेन च लक्ष्मणा तेन तेनेति, तद्यथा

चञ्च्वग्रचुम्बितातात्रचूताङ्कुरकदम्बकैः।
कथ्यते कोकिलैरेव मधुर्मधुरकूजितैः॥
दिवाकरकरालातपातनिर्दग्धवीरुधः ।
मार्गाः समल्लिकामोदा भवन्ति ग्रीष्मशंसिनः॥
शिखण्डमण्डनारब्धोद्दण्डताण्डवडम्बरैः।
प्रावृडाख्यायते मेघमेदुरैर्मेदिनीधरैः॥
मौक्तिकाकारविस्तारितारानिकरचित्रितम्।
शरत् पिशुनतां याति यमुनाम्भोनिभं नभः॥
आयामियामिनीभोगसफलाभोगविभ्रमाः । 15
हेमन्तमभिनन्दन्ति सोष्माणस्तरुणीस्तनाः॥

---

निरोधयोगि प्रागभावाक्रान्तं यत् फलम्। अतश्च यदुच्यत इत्यनेन 'वर्तमानाभावः पततः पतितव्यपतितकालोपपत्तेः' इति सूत्रं सूचयति। अतिक्रान्तेनाध्वना यः सम्प्र-युक्तोऽतीतकालः, अनागतेनाध्वना यः सम्प्रयुक्तस्तच्छेषः, तृतीयस्याध्वनोऽभावात् 20
किंसम्प्रयुक्तो वर्तमानः स्यादित्यध्वव्यङ्ग्यकालवाद्यभिप्रायः।

आयामियामिनीति। आयामी दीर्घो यो यामिनीनां रात्रीणां भोगः विस्तर-स्तेन हेतुना सफलः सप्रयोजनः आभोगविभ्रमः परिणाहाश्रयो गुणविशेषो येषाम्।

आस्कन्दनदलत्कुन्दकलिकोत्करदन्तुराः ।
वदन्ति शिशिरं वातास्तुषारकणकर्कशाः ॥
तस्मादेकोऽप्ययं कालः क्रियाभेदाद् विभिद्यते ।
एतेन सदृशन्यायान्मन्तव्या दिक् समर्थिता ।

5 **प्रसङ्गात् कालवदेवदिशः सिद्धिरिति प्रदर्शनम्**

पूर्वपश्चिमादिप्रत्ययानां केवलवृक्षादिप्रत्ययवैलक्षण्येन कारणान्तरानुमानात्। दिग्लिङ्गाविशेषादेकत्वेऽपि दिशो दशविधाः। प्रदक्षिणावर्त्तपरिवर्त्तमानमार्तण्ड-मण्डलमरीचिनिचयचुम्ब्यमानकाञ्चनाचलकटकसंयोगोपाधिकृतः पूर्वपश्चिमादि-भेदः कल्प्यते पूर्वा पूर्वदक्षिणा दक्षिणा दक्षिणपश्चिमा पश्चिमा पश्चिमोत्तरा 10 उत्तरा उत्तरपूर्वा अधस्तनी ऊर्ध्वा चेति। देवतापरिग्रहवशाच्च पुनरेषैव दिग् दशधो-च्यते ऐन्द्री आग्नेयी याम्या नैर्ऋती वारुणी वायव्या कौबेरी ऐशानी नागीया ब्राह्मी चेति ।

ननु च येनैव प्रत्ययेन प्रत्यक्षेण लिङ्गेन वा सता दिक्कालाववगम्येते तेनैव तयोर्भेदग्रहणात् कथमेकत्वं तदवगमसमय एव तथा भेदप्रतिभासात् ? उक्तमत्र सर्वत्र 15 तत्प्रत्ययाविशेषादिति, व्यत्ययदर्शनाच्च यैवैकत्र पूर्वा दिक् सैवान्यत्र दक्षिणेति गृह्यते, 'प्राग्भागो यः सुराष्ट्राणां मालवानां स दक्षिण' इति। कालेऽपि चिरक्षि-प्रादिविभागश्चाव्यवस्थित एव दृश्यते। यो हि अनागत इति परिस्फुरति कालः स एव वर्त्तमानीभवति, भूतो भवति च, तथा च चिरमपि शीघ्रीभवति शीघ्रमपि चिरीभवति। तस्मात् तद्भेदोऽप्यौपाधिक इति सिद्धम् ।

20 समानतन्त्रे दिक्कालौ वैतत्येन विचिन्तितौ ।
तन्नेह लिख्यते लोके द्वेष्या हि बहुभाषिणः ॥

---

प्राग्भागो यः सुराष्ट्राणामित्यस्य 'प्राग्भागः पुनरेतेषां तेषामुत्तरतः स्थितः' इति शेषः। सुराष्ट्रवासिनो यदा पूर्वदिग्रेखात उद्यन्तमादित्यं पश्यन्ति तदा मालवा दक्षिणदिक्संस्थं पश्यन्ति; सुराष्ट्रोत्तरादवस्थितत्वान्मालवानाम्। स एव वर्तमानी-25 भवतीति। उक्तम्

अयमेव हि ते कालः पूर्वमासीदनागतः ।
अवश्यम्भाविनं नाशं विद्युः सम्प्रत्युपस्थितम् ॥ इति ॥

सिद्धः कालश्चाक्षुषो लैङ्गिको वा तन्नानात्वं सिद्धमौपाधिकञ्च ।
तस्माद् युक्तं निश्चिकाय त्रिकालग्राहीत्येवं सूत्रकारोऽनुमानम् ॥

## उपमाननिरूपणे वृद्धनैयायिकमतम्

अनुमानान्तरमुपमानं विभागसूत्रे पठितमिति तत्क्रमेण तस्य लक्षणमुच्यते । 5

प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् ॥ ६ ॥

अत्र वृद्धनैयायिकास्तावदेवमुपमानस्वरूपमाचक्षते, संज्ञासंज्ञिसम्बन्धप्रतीतिफलं प्रसिद्धेतरयोः सारूप्यप्रतिपादकमतिदेशवाक्यमेवोपमानम् । गवयार्थी हि नागरकोऽनवगतगवयस्वरूपस्तदभिज्ञमारण्यकं पृच्छति कीदृग् गवय इति स तमाह यादृशो गौस्तादृशो गवय इति । तदेतद् वाक्यमप्रसिद्धस्य प्रसिद्धेन गवा सादृश्यमभिदधत् तद्द्वारकमप्रसिद्धस्य गवयसंज्ञाभिधेयत्वं ज्ञापयतीत्युपमानमुच्यते । 10

ननु शब्दस्वभावत्वादस्याप्तोपदेशः शब्द इत्यनेन गतार्थत्वान्नेदं प्रमाणान्तरं भवेत्, न च संज्ञासंज्ञिसम्बन्धपरिच्छेदफलत्वेन प्रमाणान्तरता वक्तव्या फलवैचित्र्येण प्रमाणानन्त्यप्रसङ्गात् । लौकिकानि हि वचनानि वैदिकानि च विधिनिषेधबोधकानि नानाफलान्यपि भवन्ति न शब्दतामतिक्रामन्ति ।

उच्यते यत्र शब्दप्रत्ययादेव तत्प्रणेतृपुरुषप्रत्ययादेव वा अर्थतथात्वमुपायान्तरानपेक्षमवगम्यते स आगम एव, ततस्तदर्थप्रतीतेः । यत्र तु पुरुषः प्रतीत्युपायमपरमुपदिशति तत्र तत एवोपायात्तदर्थावधारणम् । उपायमात्रावगमे तु शब्दव्यापारो यथा परार्थानुमाने अग्निमानयं पर्वतो धूमवत्त्वान्महानसवदिति । अत्र हि न पुरुषोपदेशविश्वासादेव शैलस्य कृशानुमत्तां प्रतिपत्ता निमित्तान्तरनिरपेक्षः प्रतिपद्यते अपि तु तदवबोधकधूमाख्यलिङ्गसामर्थ्यादेव । तदिह यद्याटविको नागरकाय गवयार्थिने तदवगमोपायं प्रसिद्धसाधर्म्यं नाभ्यधास्यत् तर्हि तदुपदेश आगमे एव अन्तरभविष्यत्, तदुपदेशात्तु तत एव तदर्थावगम इति सत्यपि शब्दस्वभावत्वे प्रमाणान्तरमेवेदम् । प्रतिपत्तापि नागरको नारण्यकवाक्यादेव तं प्राणिनं गवयशब्दवाच्यतया बुध्यते किन्तु सारूप्यं प्रसिद्धेन गवा तस्य पश्यति । किमारण्यकवाक्येन न सम्प्रत्ययो नागरकस्य ? न ब्रूमो नसम्प्रत्यय इति किन्तु सारूप्यमुपायान्तरम्, तदवगतावसावुपदिष्टवानिति ततोऽवगतिर्भवन्ती न निह्नोतुं शक्यते इति न शाब्दी सा प्रतीतिरपि

त्वौपमानिकीति वचनमपि भवदिदमुपमानं प्रमाणान्तरमिति युक्तम्। भाष्याक्षराण्यपि चैतत्पक्षसाक्ष्यच्छायामिव वदन्ति लक्ष्यन्ते। तानि तु ग्रन्थगौरवभयान्न योज्यन्ते इत्यलं प्रसङ्गेन।

### तत्रैव नव्यमतम्

5 अद्यतनास्तु व्याचक्षते श्रुतातिदेशवाक्यस्य प्रमातुरप्रसिद्धे पिण्डे प्रसिद्धपिण्डसारूप्यज्ञानमिन्द्रियजं संज्ञासंज्ञिसम्बन्धप्रतिपत्तिफलमुपमानम्। तद्धीन्द्रियजनितमपि धूमज्ञानमिव तदगोचरप्रमेयप्रमितिसाधनात् प्रमाणान्तरम्, श्रुतातिदेशवाक्यो हि नागरकः कानने परिभ्रमन् गोसदृशं प्राणिनमवगच्छति ततो वनेचरपुरुषकथितं 'यथा गौस्तथा गवय' इति वचनमनुस्मरति स्मृत्वा च प्रतिपद्यते 'अयं
10 गवयशब्दवाच्य' इति। तदेतत् संज्ञासंज्ञिसम्बन्धज्ञानं तज्जन्यमित्युपमानफलमित्युच्यते।

प्रत्यक्षं तावदेवैतद्विषये न कृतश्रमम्।
वनस्थगवयाकारपरिच्छेदफलं हि तत्॥
अनुमानं पुनर्नात्र शङ्कामप्यधिरोहति।
15 क्व लिङ्गलिङ्गिसम्बन्धः क्व संज्ञासंज्ञितामतिः॥
आगमादपि तत् सिद्धिर्न वनेचरभाषितात्।
तत्कालं संज्ञिनो नास्ति गवयस्य हि दर्शनम्॥

संज्ञासंज्ञिनोश्च परिच्छेदे सति तत्सम्बन्धः सुशको भवति नान्यथा, अत एव प्रत्यक्षपूर्वकं संज्ञाकर्मेत्याचक्षते।

### 20 उपमानस्य प्रमाणान्तरत्वे शङ्का

एतदाक्षिपति

ननु नागरकप्रश्नमनुरुध्य वनेचरः।
ब्रूतेऽतिदेशकं वाक्यं यथा गौर्गवयस्तथा॥

---

भाष्याक्षराणीति। भाष्यकारो हि तत्र तत्र वाक्यमेवोपमानशब्देनाह
25 "यथा गौरेवं गवय इत्युपमाने प्रयुक्ते" इत्यादौ।

अस्यायमर्थो यस्य त्वं गोसादृश्यं निरीक्षसे ।
तमेव गवयं विद्याः स चायं संज्ञिनो ग्रहः ॥
सम्बन्धकारणञ्चेह विशेषेषु न युज्यते ।
आनन्त्यात् किन्तु सामान्ये तच्चेत्थमवधारितम् ॥
प्रत्यक्षपूर्वकं संज्ञाकर्मेति न हि वैदिकी । 5
चोदना किन्त्ववच्छेदः संज्ञिनोऽत्र विवक्षितः ॥
स तु प्रत्यक्षतो वास्तु प्रमाणान्तरतोऽपि वा ।
स्मर्यमाणोऽपि चार्थोऽस्ति सङ्केते कारणं क्वचित् ॥
योऽसौ तत्र त्वया दृष्टः प्राणी स रुरुरुच्यते ।
क्वचित्तु कैश्चिन्निर्दिश्य परोक्षमुपलक्षणैः ॥ 10
संज्ञिनं व्यवहर्त्तारस्तत्र संज्ञां नियुञ्जते ।
दन्तुरो रोमशः श्यामो वामनः पृथुलोचनः ॥
यस्तत्र चिपिटग्रीवस्तं चैत्रमवधारयेः ।
एवमत्रापि गोपिण्डसारूप्येणोपलक्षिते ॥
वाच्ये वाचकसम्बन्धबोधनं नैव दुर्घटम् । 15
अथ सोपप्लवा वाक्याद् बुद्धिरित्यभिधीयते ॥
उपप्लवोऽपि सम्बन्धे न कश्चिदनुभूयते ।
यस्त्वस्ति गवयाकारं प्रति कीदृगसाविति ॥
सोऽपि प्रत्यक्षतो दृष्टे गवये विनिवर्त्तते ।
प्रत्यक्षागमसिद्धेऽर्थे तस्मान्मानान्तरेण किम् ॥ 20

## उपमानस्य प्रमाणान्तरत्वव्यवस्थापनम्

अत्राहुः, नाटविकरटितवाक्याद्विस्पष्टः संज्ञासंज्ञिसम्बन्धप्रत्ययो भवितुमर्हति, संज्ञिनस्तदानीमप्रत्यक्षत्वात् । यद्यपि गोसारूप्यविशिष्टतया तदवगम उपपादितस्तथापि सोपप्लवेव भवति तदानीं बुद्धिः ।

न निराकाङ्क्षताबुद्धिस्तदानीमुपजायते । 25
तदुत्पादनपर्यन्तः शब्दव्यापार इष्यते ॥

---

अथ सोपप्लवा अनिराकाङ्क्षा ।

न चासौ निर्वहत्यत्र वाच्यसंवित्त्यपेक्षणात् ।
शब्देन तदनिर्वाहाच्च स्वकार्यं कृतं भवेत् ॥
सम्बन्धप्रतिपत्तिश्च सामान्ये यदि चेष्यते ।
तदप्यविदितव्यक्ति न सम्यगवधारितम् ॥
गवयाकारवृत्तिश्च तदानीं बुद्ध्युपप्लवः ।
सम्बन्धेऽपि द्व्यधिष्ठाने दधाति श्यामलां धियम् ॥
प्रत्यक्षपूर्वकं तस्मात् संज्ञाकर्मेति गीयते ।
क्वचित्तदेव प्रत्यक्षं स्मृतिद्वारेण कारणम् ॥
पूर्वदृष्टे कुरङ्गादौ सम्बन्धो दर्शितो यथा ।
चैत्रे प्रत्यक्षवत्सिद्धिर्दन्तुरादिविशेषणैः ॥ 10

इह पुनरतिदेशवचनसमये गोसादृश्यमात्रोपदेशे सत्यपि संज्ञिनि न निवर्त्तते एवोपप्लवः प्रमाणान्तरपरिच्छेदसापेक्षकसंज्ञिरूपोपदेशात् । 'यत्र गोसादृश्यं पश्यसी'ति प्रत्यक्षादेव तर्हि उपप्लवो विरंस्यतीति चेद्, न । प्रत्यक्षस्येन्द्रियसन्निकर्षादिस्वभावस्य संज्ञासंज्ञिसम्बन्धबोधकरणासमर्थत्वात् ।

15 प्रत्यक्षफलमेतत्तु समर्थं सत्यमिष्यते ।
तस्यैव च वयं ब्रूम उपमानप्रमाणताम् ॥

यथा प्रत्यक्षफलमपि धरणिधरकुहरभुवि धूमदर्शनमनिन्द्रियविभावसुबोधसाधनत्वादनुमानम्, एवं गोसारूप्यविशेषितविपिनगतगवयपिण्डदर्शनमध्यक्षफलमपि तद् अनवगतसंज्ञासंज्ञिसम्बन्धबोधविधानादुपमानमुच्यते । यथा च तत्र पूर्वावगतधूमाग्निप्रतिबन्धस्मरणं सहकारितामुपैति तथा इहापि पूर्वश्रुतारण्यकवाक्यार्थस्मरणम् । यथा तत्र व्याप्तिवेलायामनालीढविशेषा बुद्धिरधुना पक्षधर्मताबलाद् विशेषे व्यवतिष्ठते अत्राग्निरिति तथात्राप्यनवगतवाच्यविशेषाद् वाक्याद् बुद्धिरिदानीं वाच्यविशेषे दृष्टे निरुपप्लवा जायते 'अयं स गवयशब्दाभिधेय' इति । नैतावतानुमानमेवेदमित्याशङ्कनीयम्, अनपेक्षितधर्मान्वयव्यतिरेकादिसामग्रीकस्य तत्प्रत्ययोत्पादात् । 20 25

---

श्यामलापि तादृश्येव । (?)

तस्मादयं स गवयो नामेत्येवंविधा मतिः ।
उपमानैकजन्यैव न प्रमाणान्तरोद्भवा ॥

न चैषा नास्ति, सन्दिग्धा, बाध्यते, कल्पनामात्रं वेति सर्वथैतस्याः प्रमितेः साधनमुपमानं प्रमाणमिति सिद्धम् । तदिदमाह 'प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्' । प्रसिद्धसाधर्म्यादिति कर्मधारयः, तृतीयासमासः, बहुव्रीहिर्वा । प्रसिद्धञ्च तत् साधर्म्यम्, प्रसिद्धेन गवा वा साधर्म्यम्, गवयस्य प्रसिद्धं वा साधर्म्यं यस्य स प्रसिद्धसाधर्म्यो गवयः । तस्मात् प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् । साध्यः संज्ञिसम्बन्धः, तस्य साधनम् बोधनम्, संज्ञासंज्ञिसम्बन्धज्ञानं वा साध्यं तस्य साधनं जननमित्यर्थः । एवं प्रसिद्धसाधर्म्यज्ञानमुपमानम्, फलं संज्ञासंज्ञिसम्बन्धज्ञानमित्युक्तं भवति ।

साध्यसाधनशब्देन करणस्य प्रमाणताम् ।
ब्रवीत्येतच्च मन्तव्यं सर्वत्र परिभाषितम् ॥

अत एव मध्ये लिखितमिदं यदुभयतः प्रमाणलक्षणानि व्याप्स्यतीति ।

## उपमानस्योपयोगविषये पूर्वपक्षस्तत्समाधानञ्च

अत्यन्तप्रायसाधर्म्यविकल्पादिनिबन्धनः ।
क्षिप्तः सूत्रकृतः साक्षादुपमानस्य विप्लवः ॥

येन सदृशप्रतीतिर्जन्यते तत्सदृशमिति किमत्यन्तसादृश्यादिविकल्पैः ?

अभिन्नप्रत्यये हेतुर्यथा सामान्यमुच्यते ।
सदृशप्रत्यये हेतुस्तथा सादृश्यमुच्यते ॥

ननूपमानलक्षणमस्मिन् मोक्षशास्त्रे क्वोपयुज्यते ? आगमात् तावदात्मज्ञानं मोक्षसाधनं सेतिकर्त्तव्यताकमवगम्यते, अनुमानादागमप्रामाण्यनिश्चयः, प्रत्यक्षादनुमानस्य व्याप्तिपरिच्छेद इति त्रयमेवोपदेष्टव्यम् । सत्यमेवम् । उपमानमपि क्वचिद् गवयालम्भादिचोदनार्थानुष्ठाने सोपयोगम्, अनवगतगवयस्वरूपे तदालम्भा-

---

अत्यन्तप्रायेति । 'अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः' इति सूत्रं लक्षयति । अत्यन्तसाधर्म्यादुपमानं न सिद्ध्यति, न हि भवति यथा गौरेवं गौरिति, प्रायःसाधर्म्यादपि, न हि भवति यथानड्वांस्तथा महिष इति, एकदेशसाधर्म्यन्तु सत्तापेक्षया सर्वेष्वस्तीति ।

भावात्, यथा मुद्गस्तम्भस्तथा मुद्गपर्णीति मुद्गपर्ण्याद्योषधिपरिज्ञानेऽपि तदुपयोगि भवति ।

सर्वानुग्रहबुद्ध्या च करुणार्द्रमतिर्मुनिः ।
मोक्षोपयोगाभावेऽपि तस्य लक्षणमुक्तवान् ।।

5 नन्वेवं सति यागौषधाद्युपयोग्यन्यदपि बह्वपदेष्टव्यं स्यात् । न । प्रमाणशास्त्रत्वादस्य प्रमाणमेवार्थपरिच्छित्तिसाधनमिहोपदिश्यते । तच्चतुर्विधमेव न न्यूनमधिकं वेति निर्णीतम् । प्रमेयन्तु मोक्षाङ्गमेवोपदिश्यते इत्यलं प्रसङ्गेन ।

## मीमांसकाभिमतोपमानस्वरूपम्

जैमिनीयास्तु अन्यथोपमानस्वरूपं वर्णयन्ति । यदा श्रुतातिदेशवाक्यस्य वने 10 गवयपिण्डदर्शनानन्तरं नगरगतं गोपिण्डमनुस्मरत एतेन सदृशी गौरिति ज्ञानं तदुपमानम् । तस्य विषयः सम्प्रत्यवगम्यमानगवयसादृश्यविशिष्टः परोक्षो गौः, तद्वृत्ति वा गवयसादृश्यम् । अत एव तज्ज्ञानं न प्रत्यक्षजन्यं परोक्षगोपिण्डविषयत्वात्, अश्रुतातिदेशवाक्यस्याभावान्न शाब्दम् ।

न च स्मरणमेवेदं प्रमेयाधिक्यसम्भवात् ।
15 गवयेन हि सादृश्यं न पूर्वमवधारितम् ।।
भूयोऽवयवसामान्ययोगो यद्यपि मन्यते ।
सादृश्यं तस्य तु ज्ञप्तिर्गृहीते प्रतियोगिनि ।।

न चानुमानिकमिदं ज्ञानमनपेक्षितपक्षादिधर्मादिकस्य भावात्, न च गवयगतं सादृश्यं तत्र लिङ्गमपक्षधर्मत्वात्, नापि गोगतमप्रसिद्धत्वात् प्रतिज्ञार्थैकदेश-
20 त्वाच्च, विषाणाद्यवयवजातमपि न गोगतं लिङ्गमिदानीं वनस्थस्य तद्ग्रहणा-

---

तस्य तु ज्ञप्तिर्गृहीते प्रतियोगिनीति । अमुकस्यायं सदृश इति द्वयोर्ग्रहणसापेक्षत्वात् सादृश्यप्रत्ययस्येति ।

गवयगतं सादृश्यमिति । न हि गोः पक्षीकृताया गवयगतं सादृश्यं धर्मः, तस्य गवयधर्मत्वात् । नापि गोगतमिति । गोगतं यद् गवयसादृश्यं 'गवयसदृशी सा'
25 इति बुद्धिनिमित्तम्, तत् प्रागुपमानव्यापारादसिद्धम् । प्रतिज्ञार्थैकदेशत्व (अत्र ग्रन्थः खण्डितः ) नापि कल्प्यमानं ग्रहणम् ।

भावात्, अगृहीतस्य च लिङ्गत्वानुपपत्तेः। गवयगतमपि तदलिङ्गमेव पूर्ववदपक्ष-धर्मत्वात्। तस्माद् गवयसादृश्यविशेषितनगरगतपरोक्षगोपिण्डज्ञानं काननवर्त्तिनः प्रमातुः प्रमाणान्तरं भवतीत्यभ्युपगन्तव्यम्।

## तत्रानुपपत्तिप्रदर्शनम्

तदिदमनुपपन्नम्, एवंविधप्रतीत्यभावात्। 5

प्रसिद्धेन हि सादृश्यमप्रसिद्धस्य गम्यते।
गवा गवयपिण्डस्य न तु युक्तो विपर्ययः॥

तथा हि, अश्रुतातिदेशको नागरकः कानने परिभ्रमन् अदृष्टपूर्वं गोसदृशं प्राणिनमुपलभमान एवं बुद्धचते ब्रवीति च 'अहो नु गवा सदृश एष कश्चन प्राणी'ति, न त्वनेन सदृशो गौरिति ज्ञानमभिधानं वा तदानीं कस्यचिदस्तीति। अतः प्रमिते-रेवाभावात् किं प्रमाणचिन्तया? भवतु वैषा बुद्धिरनेन सदृशो गौरिति तथापि स्मृतित्वान्न प्रमाणफलम्। 10

नन्वत्र गोपिण्डमात्रे सत्यं स्मृतिरेवैषा, सम्प्रत्यवगतगवयसादृश्यविशिष्टत्वन्तु तस्य पूर्वमनुपलब्धमधुनैव गम्यते इति न तस्मिन्नेषा स्मृतिः। मैवम्। गवयसा-दृश्यस्यापि तत्र पूर्वं ग्रहणात्। 15

नन्वनवगतगवयेन गवि गवयसादृश्यमवगतमिति चित्रम्, व्यक्तितिरस्कृतस्य ग्रहणात्।

नन्विदमपि चित्रतरं गृहीतञ्च व्यक्तितिरस्कृतञ्चेति। व्यक्तिर्हि ग्रहणमेव तत्तिरस्कारे च नास्त्येव ग्रहणम्। उच्यते। नैतदपि चित्रतरम्। तथाहि वने गवयमा-लोक्य नागरको, न करेणुमनुस्मरति न करभं, न तुरङ्गम्, अपि तु विशिष्टमेव पिण्डम्। 20
न च निर्निबन्धनमेवेदं विशिष्टविषयस्मरणमुत्पत्तुमर्हति। तस्माद् यत्रैव परिदृश्य-मानपिण्डसादृश्यं पूर्वमवगतं स एव पिण्डोऽस्मिन् दृश्यमाने स्मरणपथमवतरति नेतर इति। सादृश्यग्रहणमसंवेद्यमानमप्यनभ्यस्तविषयाविनाभावस्मृतिबलात् परिकल्प्यते। पूर्वञ्च गवयग्रहणाद् विना गवयसदृशीयं गौरिति ग्रामीणस्यानुभवो न भवतीति व्यक्तितिरस्कृतं तत्सादृश्यग्रहणमुच्यते इति न किञ्चिच्चित्रम्। तस्मात् स्मृतिरेवे- 25

यम् । तथा हि प्रतीतिः 'अनेन सदृशो गौर्मया नगरे दृष्टः' इति, नत्वद्यैतत्सदृशो गौर्दृश्यते इति बुद्धिः ।

ननु प्रतियोगिग्रहणाद् विना कथं ग्राम्यस्य सादृश्यग्रहणम् अत्रभवतैवात्मनः प्रतिकूलमभिहितम् ?

5 सामान्यवच्च सादृश्यमेकैकत्र समाप्यते ।
प्रतियोगिन्यदृष्टेऽपि तस्मात्तदुपलभ्यते ।। इति ।

स च भूयोऽवयवसामान्ययोगोऽगृहीतगवयेनापि नागरकेण ग्रहीतुं शक्यते । अथ तदा तद्ग्रहणेऽपि सति न तस्य सदृशप्रत्ययः । न तर्हि भूयोऽवयवसामान्ययोगः सादृश्यम् । यथोक्तं सादृश्यं सदृशप्रत्ययहेतुत्वमेव सादृश्यम्, भूयोऽ-
10 वयवसामान्ययोगे च तल्लक्षणे चित्रादावव्याप्तिः, अतिव्याप्तिश्च प्राण्यन्तरेषु विसदृशेष्वपि तदवयवसामान्यानां खुरादीनां भावात् । भूयस्त्वन्तु कियत्तेषामिति न विद्मः । यावता सदृशप्रत्ययोत्पत्तिरिति चेत्, तर्हि सदृशप्रत्ययहेतुत्वमेव सादृश्यमस्त्वित्युक्तम् । तस्माद् गवयदर्शनात् पूर्वमपि गव्यनभिव्यक्तसादृश्यग्रहणोपपत्तेः स्मृतिरेवेयम् ।

15 अथ मतं यथा नैयायिकानामतिदेशवाक्यवेलायां सोपप्लवा संज्ञासंज्ञिसम्बन्धबुद्धिरुपमानं निरुपप्लवीभवति एवमियमपि यासौ पूर्वं व्यक्तितिरस्कृता गवि गवयसादृश्यबुद्धिरभूत् स इदानीमुपमानाद् व्यक्तीभविष्यतीति

---

अत्रभवतैवात्मनः प्रतिकूलमभिहितमिति ।
भूयोऽवयवसामान्ययोगो यद्यपि मन्मते ।
साहश्यं तस्य तु ज्ञप्तिर्गृहीते प्रतियोगिनि ॥
20
इति वदता भवता साहश्यस्य सत्त्वं तावदभ्युपगतम्, ग्रहणन्तु सामान्यवद् भविष्यतीत्येतदेव 'सामान्यवच्च' इत्यादिना व्यक्तीकृतम् । भूयोऽवयवसामान्ययोगस्य साहश्यलक्षणस्य इष्टतामासेव्य प्रभाकरेण तल्लक्षणं कृतम् "साहश्यमिति साहश्यम्" 'साहश्यम् अनेनास्य', 'अमुना सहशोऽयम्' इति यतो बुद्धिरुत्पद्यते तत् साहश्यम् ।

25 चित्रादावव्याप्तिरिति । चित्रे रेखारूपे हि न खुरत्वादिसम्भवः, प्राणिस्थखुराद्यवयवव्यङ्ग्यत्वात् तेषां खुरत्वादीनाम् ।

नैतदस्ति, गवयग्राहिणा प्रत्यक्षेणैव तत्स्पष्टतासिद्धेः। यथा भवद्भिर्नैयायिका उक्ताः 'अथ त्वधिकता काचित् प्रत्यक्षादेव सा भवेत्' इति तथा नैयायिका अपि युष्मान् वक्ष्यन्ति ।

ननु वनस्थप्रमातुर्गवयविषयं प्रत्यक्षं कथं ग्रामवर्त्तिनि गवि सादृश्यबुद्धेः स्पष्टतामादधीत ? किं कुर्मस्तद्दर्शनानन्तरं सुस्पष्टतत्सादृश्यविशिष्टगोपिण्ड-स्मरणात् ।

नन्वत एवेदमुपमानं प्रमाणान्तरमुच्यते, प्रत्यक्षस्य सन्निहितगवयस्वरूपमात्र-निष्ठत्वात्। परोक्षे च गवयसादृश्यप्रत्ययस्य विस्पष्टस्यान्यतोऽसिद्धेरिति। उक्तमत्र स्मृतिरेवेयं तथावभासनात्, अनधिगतार्थग्राहि च प्रमाणमुपगच्छन्ति भवन्तः। भवतु स्मृतिविलक्षणेयं प्रतीतिः तथाप्यनुमानजन्यत्वान्न प्रमाणान्तरमाविशति, स्मर्यमाणो गौः धर्मी, एतत्सदृश इति साध्यो धर्मः, एतदवयवसामान्ययोगित्वात्, सन्निहितद्वितीयगवयपिण्डवत् । तदसन्निधाने सामान्येन व्याप्तिर्दर्शयितव्या यत्र यदवयवसामान्ययोगित्वं तत्र तत्सादृश्यं यथा यमयोरिति । विशिष्टस्य तद्योगस्य हेतुत्वान्नानैकान्तिकत्वम्,सामान्ययोगोऽन्योऽन्यच्च सादृश्यमित्युक्तत्वान्न प्रतिज्ञार्थैक-देशो हेतुः। अव्युत्पन्नस्य नारिकेलद्वीपवासिनो, बालस्य वा तत्प्रत्ययानुत्पादान्न व्याप्तिनैरपेक्ष्येण सा प्रतीतिरिति वक्तव्यम् । तस्मादित्थमनुमानजन्यत्वात्, स्मृति-त्वाद्वा, पूर्वोक्तादसम्भवादेव वा नेयमवगतिरुपमानकार्येति सिद्धम् ।

## मीमांसकमतसिद्धोपमानस्य न स्वातन्त्र्येणोपयोगः

कश्चास्य भवदुपमानस्य स्वतन्त्रोपयोगः ? एवं ह्याहुर्भवन्तः

> अपरीक्षामिषेणापि लक्षणानि वदन्नयम् ।
> न स्वतन्त्रोपयोगित्वनिरपेक्षाणि जल्पति ।

---

'अथ त्वधिकता काचित्' इत्यस्योत्तरमर्धम् 'यावद्धीन्द्रियसम्बद्धं तत् प्रत्यक्ष-मिति स्थितम्' इति ।

यमयोरिति । युगपदेकस्मिन् गर्भे सम्भूतौ यमौ । सामान्ययोगोऽन्योऽन्यच्चेति । सत्यपि सामान्ययोगे प्राण्यन्तरेषु सदृशप्रत्ययानुत्पादात् ।

अपरीक्षामिषेणापीति । न परीक्षितव्यानि प्रत्यक्षादीनि प्रमाणानीति मिषेण व्याजेन ।

ननूक्त एवोपयोगः। सौर्ये चरौ द्रव्यदेवतासारूप्यादाग्नेयविध्यन्तलाभः। आग्नेयोऽष्टाकपाल इत्युपदिष्टादृष्टेतिकर्त्तव्यताकलापतया निराकाङ्क्षो विधिः। 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इत्यत्र प्रधानमात्रोपदेशाद् विध्यादिरस्ति न तु विध्यन्त इतिकर्त्तव्यताभिधानम्। न चानितिकर्त्तव्यताकं कर्म प्रयोगयोग्यम्। अतः 5 कीदृशमितिकर्त्तव्यताजातमिह गृह्यतामित्यपेक्षायां चरुपुरोडाशयोर्व्रीह्याद्यौषधि-साधनत्वेन द्रव्यसादृश्यात् सूर्याग्न्योश्च तेजस्वितया देवतयोः सारूप्यादाग्नेयेतिकर्त्त-व्यता सौर्ये क्रियते इत्युपमानाद् गम्यते। अपि च क्वचिच्चोदितद्रव्यादावलभ्यमाने प्रतिनिध्युपादानेन कर्मसमापनात् प्रतिनिधिमात्रोपादाने प्राप्ते व्रीहिसदृशनीवारो-पादानमुपमानात् प्रतीयते इति। तदाह

10 भिन्नानुमानादुपमेयमुक्ता
सौर्यादिवाक्यैरसहापि दृष्टम्।
सादृश्यतोऽग्न्यादियुतं कथं नु
प्रत्याययेदित्युपयुज्यते नः॥

---

आग्नेयोऽष्टाकपाल इति। अयं हि दर्शपूर्णमासप्रधानयागषट्कान्तःपातित्वाद् 15 विहितसकलेतिकर्तव्यताकः। विध्यादिरस्तीति। यद्वाक्यमुपलभ्य पुरुषः कस्मिंश्चिदर्थे प्रवर्तते कुतश्चिद् विनिवर्तते स विधिः। विधीयतेऽनेनार्थ इति। यथा लोके 'देवदत्त गामभ्याज शुक्लाम्' इति। तस्य 'अभ्याज' इति आदिः, इतरोऽन्तः। वेदेऽपि 'दर्शपूर्णमासाभ्यां यजेत' इति विध्यादिः, विध्यन्तोऽप्रधानविवर्जितं कृत्स्नं पौरोडाशिकं ब्राह्मणम्। तेन सहितोऽयं विध्यादिर्विशिष्टापूर्वनिर्वृत्तं प्रति पुरुषं प्रवर्तयति इति विध्यादिविध्यन्त-20 योर्लक्षणम्।

भिन्नानुमानादुपमेयमुक्तेति। अग्न्यादियुतं 'आग्नेयोऽष्टाकपालो भवति' इत्यादि-सम्बद्धं यत् प्रयाजादिकमितिकर्तव्यताजातम्। सौर्यादिवाक्यैः 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इत्यादिभिः। असहापि दृष्टम्। तैः सहाश्रुतमपि, तद्गतत्वेन कथं प्रत्याययेदुपमेति नोऽस्माकमुपयुज्यते। कथञ्च प्रत्याययितुं शक्नुयादित्याह सादृश्यतः। 25 तत्सदृशत्वादाग्नेयादेः।

प्रतिनिधिरपि चैवं व्रीहिसादृश्ययोगाद्
भवति तदपचारे यत्र नीवारजातौ ।
तदपि फलमभीष्टं लक्षणस्योपमायाः
प्रकृतिरपि च गौणैर्बाध्यते यत्र चान्यैः ॥

तदेतदसमञ्जसम् । प्रसिद्धेनाप्रसिद्धस्य सादृश्यमवगम्यते इत्येष भवद्भिरुत्सृष्टः पन्थाः, विपर्ययस्तु आश्रितः । यदप्यदृष्टेन नूतनेनाप्रसिद्धेन गवयेन वाक्यसिद्धस्य गोः सादृश्यमुपमानात् प्रतीयते इति तदिहापि निर्ज्ञातेतिकर्त्तव्यताकेन गोवत्प्रसिद्धेनाग्नेयेन सौर्यस्य गवयवदप्रसिद्धस्य सादृश्यमवगम्यते, न तु गवयेन गोः सौर्येणाग्नेयस्य । तदिह यस्य विध्यन्तार्थिता न तत्रोपमानात् सादृश्यावगमः, यत्र वा तदवगमो न तत्रेतिकर्त्तव्यतार्थित्वम् । 10

ननु सौर्ये विध्यन्तार्थिनि प्रतीयमाने द्रव्यदेवतासारूप्यादेराग्नेयः स्मरणपथमवतरतीति तत एवासौ विध्यन्तमधिगच्छतीति । एवमपि स्मरणमात्रात्सिद्धेऽर्थे किमुपमानेन ? आग्नेयस्मरणादेव तदितिकर्त्तव्यता सौर्ये उपादास्यते । स्मृतिविशेष एव विषयाधिक्यादुपमानमुच्यते इति चेत्, प्रतिविहितमिदमित्यलं प्रसङ्गेन ।

किञ्चोपमानप्रतिपादितार्थो 15
न चोदनालक्षणतां बिभर्त्ति ।
तस्मान्न युज्येत ततोऽधिगन्तु-
माग्नेयविध्यन्तविशेषलाभः ॥
प्रतिनिधिरपि चैवं नास्ति नीवारजाते-
र्नहि भवदुपमानाद् व्रीहिसादृश्यबुद्धिः । 20

---

तदपचारे तेषां व्रीह्यादीनां विहितानामपचारे परिहारादिकृते 'असम्भवे प्रतिनिधिः' इति । नीवारजातौ नीवारजातेः । प्रतिनिधिर्मुख्यस्थाने विनियोगः ।

प्रतिविहितमिदमिति । 'मैवं, गवयसादृश्यस्यापि पूर्वं ग्रहणात्' इत्यादिना प्रतिविधानात् ।

प्रतिनिधिरपि चैवं नास्ति नीवारजातेः । कथं नास्ति ? तदाह न हि 25

भवति तु मतिरेषा व्रीहयस्तत्सदृक्षा
इति न च फलमस्याः किञ्चिदस्ति प्रतीतेः ॥
भवत्यङ्गं यागे क्वचन गवयालम्भनमतः
तदाकारज्ञाने प्रतिनिधिविवेके च कृतिनाम् ।
5 उपायत्वं युष्मत्कथितमुपमानं न भजते
परिग्राह्यं तस्मात् प्रवरमुनिगीतं सुमतिभिः ॥

इति द्वितीयमाह्निकम् ॥

---

भवदुपमानाद् 'व्रीहिसदृशा नीवाराः' इति सादृश्यबुद्धिः । कीदृशी तर्हि बुद्धिरित्याह भवति नु मतिरेषेति ॥

10 भट्टश्रीशङ्करात्मजश्रीचक्रधरकृते
न्यायमञ्जरीग्रन्थिभङ्गे द्वितीयमाह्निकम् ॥

# तृतीयमाह्निकम्

उपमानानन्तरं शब्दस्य विभागसूत्रे निर्देशात् तस्य लक्षणं प्रतिपादयितुमाह

**आप्तोपदेशः शब्दः ॥ ७ ॥**

उपदेशः शब्द इत्युच्यमाने पर्यायमात्रोच्चारणादकारके शब्दमात्रे प्रसक्ति-
रिति प्रत्यक्षसूत्राज् ज्ञानपदस्य, स्मृतिजनकस्य व्यवच्छेदार्थं चार्थग्रहणस्य, संशय- 5
विपर्ययजनकनिराकरणाय च व्यवसायात्मकाव्यभिचारिपदयोरनुवृत्तिरित्येवम-
व्यभिचारादिविशेषणार्थप्रतीतिजनक उपदेशः शब्द इत्युक्तं भवति ।

तदेवं पर्यायमेवोपदेशशब्दं शब्दलक्षणमपेक्षितपूर्वसूत्रोपात्तविशेषणपदं
केचिद् व्याचक्षते, आप्तग्रहणञ्च लक्षणविनिश्चयार्थमाहुः। 'घ्राणरसनत्वक्चक्षुःश्रोत्रा-
णीन्द्रियाणि भूतेभ्यः' इत्यत्र भूतग्रहणं वक्ष्यते । एवं हि ऐतिह्यस्य न प्रमाणान्तरता 10
भविष्यति, उपदेशरूपत्वाविशेषादिति ।

अन्ये तु ब्रुवते युक्तमुपदेशपदमेव शब्दलक्षणम् । युक्तञ्च तन्निश्चयार्थमाप्तग्रहणम् ।
पूर्वसूत्रोपात्तविशेषणपदानुवृत्तिस्तु नोपयुज्यते, सामान्यलक्षणानन्तरं विशेषलक्षण-
प्रक्रमात् । सामान्यलक्षणेन च स्मृत्यादिजनकसकलप्रमाणाभासव्युदासे कृते सजातीय-

---

लक्षणविनिश्चयार्थमिति । अव्यभिचारादिविशिष्टार्थोपलब्धिजनकत्वं प्रमाणलक्ष-
णम् । तद् दृष्टे विषये उपदेशस्य प्रमाणान्तरसंवादसम्भवान्निश्चीयेतापि, अदृष्टे तु विषये
प्रमाणान्तरसंवादासम्भवात् कथं तद्विनिश्चय इति तदर्थमाप्तग्रहणम् । आप्तस्योपदेशो दृष्टे
विषयेऽव्यभिचारादिविशेषणार्थोपलब्धिजनकत्वेन दृष्टः, अदृष्टेऽप्याप्तोपदेशरूपत्वात् तथा-
विधो भवत्येवेति । यथा नियतगन्धाद्युपलब्धिजनकत्वं लक्षणं घ्राणादीनां कथं विनिश्ची-
येतेति तद्विनिश्चयार्थं 'भूतेभ्यः' इति पदम् । विशिष्टभूतप्रकृतिकत्वाद् भवति नियतार्थोप- 20
लब्धिजनकत्वं लक्षणमिति । एवं हि ऐतिह्यस्येति । 'इह वटे यक्षः प्रतिवसति' एतदुप-
देशरूपं न त्वाप्तोपदेशः, एतदुपदेष्टुराप्तस्यानिर्ज्ञानात् ।

प्रत्यक्षादिव्यवच्छेद एव केवलमिदानीं वक्तव्यः। तत्र च पर्यायतापर्याप्तमुपदेशपदमेव बुद्ध्यादिपदवदिति किं विशेषणानुवृत्तिक्लेशेनेति।

अपर आह अनवलम्बितसामान्यलक्षणानुसरणदैन्यम्, अनध्याहृतप्राक्तनविशेषणपदम्, आप्तोपदेशः शब्दलक्षणम्। न च अकारकेण, शब्दान्तरकारिणा वा, 5 स्मृतिजनकेन वा, संशयाधायिना वा शब्देन किञ्चिदुपदिश्यते इति निर्वचनसव्यपेक्षाद् उपदेशग्रहणादेव तन्निवृत्तिः सिद्धा। मिथ्योपदेशे तु रथ्यापुरुषादिवचसि विपरीतप्रतीतिकारिणि प्रसङ्गो न निवर्तते इति तत्प्रतिक्षेपार्थमाप्तग्रहणम्। ऐतिह्ये यथार्थप्रतीतिहेतावाप्तानुमानान्न प्रमाणन्तरत्वमिति। तस्माद्यथाश्रुतमेव सूत्रं शब्दलक्षणार्थं युक्तम्।

10 उपदेशपदार्थविचारः

भवत्वेवम्। उपदिश्यते इति कोऽर्थः? अभिधानक्रिया क्रियते। केयमभिधानक्रिया नाम? प्रतीतिरिति चेत् चक्षुरादेरपि तत्करणत्वादुपदेशत्वप्रसङ्गः। स्वसादृश्येन प्रतीतिरिति चेद् बिम्बस्यापि पादाद्यनुमितावुपदेशत्वप्रसङ्गः, शब्दे च तदभावादनुपदेशत्वं स्यात्। शब्दावच्छिन्ना प्रतीतिरिति चेत् श्रोत्रस्य तज्जनकत्वादुपदेशत्व15 प्रसङ्गः। शब्दस्य च स्वावच्छेदेन प्रतीतिजनकत्वनिषेधादनुपदेशत्वप्रसङ्गादित्यभिधानक्रियास्वरूपानिश्चयान्न तस्याः करणमुपपदेशः।

उच्यते। श्रोत्रग्राह्यवस्तुकरणिका तदर्थप्रतीतिरभिधानक्रिया, इत्थं लोके व्यवहरात्। उक्तोऽभिहितश्च स एवार्थो लोके व्यपदिश्यते यस्तु तथाविधप्रतीतिविषयतां प्रतिपन्नः। श्रोत्रग्राह्यस्य वर्णराशेरेवार्थप्रतीतिकरणत्वान्न तु श्रोत्रप्रत्यया20 विषयविशेषः स्फोटात्मा शब्दः। श्रोत्रग्रहणे ह्यर्थे शब्दशब्दः प्रसिद्धः। वर्णा एव च श्रोत्रग्रहणाः। यतोऽर्थप्रतीतिः स शब्द इति तूच्यमाने धूमादिरपि शब्दः स्यात्, अगृहीतसम्बन्धश्च शब्दः शब्दत्वं जह्यादर्थप्रतिपत्तेरकरणात्।

---

बुद्ध्यादिपदवदिति। यथा 'बुद्धिरुपलब्धिः' इत्यत्र पर्यायाणामेव लक्षणत्वमुक्तम्।

25 बिम्बस्यापीति। बिम्बस्य प्रतिबिम्बे दृष्टे देवदत्तस्यैतत्पदमिति प्रतीतेः। न वर्णेभ्योऽर्थप्रतिपत्तिरपि तु वर्णाभिव्यक्तात् स्फोटादिति पक्षं निराकर्तुमाह श्रोत्रग्राह्यस्य वर्णराशेरित्यादिना।

ननु प्रतीतेः संविदात्मकत्वान्नाभिधानक्रिया नाम काचिदपूर्वा संविदन्या विद्यते तत्करणस्य चोपदेशतायामतिप्रसङ्ग इत्युक्तम्। सत्यम् । संविदात्मैव सर्वत्र प्रतीतिः, सा चक्षुरादिकरणिका प्रत्यक्षफलम्, श्रोत्राग्राह्यकरणिकानुमानफलम्, श्रोत्रग्राह्यकरणिका शब्दफलम् । न हि दृश्यतेऽनुमीयतेऽभिधीयते इति पर्याय-शब्दः । तत्प्रतीतिविशेषजनने च शब्दस्योपदेशत्वमुच्यते, विवक्षादौ तु तस्य लिङ्गत्वमेवेत्यलं प्रसङ्गेन । 5

## आप्तपदार्थविचारः

आप्तो भाष्यकृता व्याख्यातः आप्तः खलु साक्षात्कृतधर्मा, यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा चेति ।

धर्म इत्युपदेष्टव्यः कश्चिदर्थो विवक्षितः । 10
साक्षात्करणमेतस्य यथार्थ उपलम्भनम् ॥

न तु प्रत्यक्षेणैव ग्रहणमिति नियमः, अनुमानादिनिश्चितार्थोपदेशिनोऽप्या-प्तत्वानपायात् ।

चिख्यापयिषया युक्त इत्युक्ता वीतरागता ।
उपदेष्टेत्यनेनोक्तं प्रतिपादनकौशलम् ॥ 15

वीतरागोऽपि मूकादिरुपदेष्टुमशक्तः किं कुर्यात् ? वक्तुं शक्तोऽपि साक्षात्कृत-धर्माप्यवीतरागो न वक्ति तूष्णीमास्ते इति ।

तस्य च प्रतिपाद्येऽर्थे वीतरागत्वमिष्यते ।
सर्वथा वीतरागस्तु पुरुषः कुत्र लभ्यते ॥
ऋष्यार्यम्लेच्छसामान्यं वक्तव्यं चाप्तलक्षणम् । 20
एवं हि लोकेऽप्याप्तोक्त्या व्यवहारो न नङ्क्ष्यति ॥

येऽप्याप्तिं दोषक्षयमाचक्षते तैरपि दोषक्षयः प्रतिपाद्यार्थेष्वेव वर्णनीयोऽ-न्यथा लोके दृश्यमानस्याप्तोक्तिनिबन्धस्य व्यवहारस्य निह्नवः स्यात् । अथ वा वेदप्रामाण्यसिद्ध्यर्थत्वाच्छास्त्रस्य तत्प्रणेतुराप्तस्येश्वरस्य यथाश्रुतमेवेदं लक्षणं

---

आप्तिं दोषक्षयमाचक्षते । 'क्षीणदोषोऽनृतं वाक्यं न ब्रूयाद् हेत्वसम्भवात्' इति 25
तदुपदेशः सत्य एवेति ।

(स ?) साक्षात्कृतधर्मेव धर्मस्येश्वरप्रत्यक्षगोचरत्वात्, चिख्यापयिषया प्रयुक्त इति कारुणिक एव भगवानिति वक्ष्यते । उपदेष्टा च वेदाद्यागमानां तत्प्रणीतत्वस्य समर्थयिष्यमाणत्वादिति ।

## शब्दस्यानुमान एवान्तर्भावपक्षः

5 आह; आस्तां तावदेतद्, इदन्तु चिन्त्यतां किमर्थमिदं पुनः शब्दस्य पृथग्लक्षण-मुपवर्ण्यते ?

शब्दस्य खलु पश्यामो नानुमानाद् विभिन्नताम् ।
अतस्तल्लक्षणाक्षेपान्न वाच्यं लक्षणान्तरम् ॥

परोक्षविषयत्वं हि तुल्यं तावद् द्वयोरपि ।
10 सामान्यविषयत्वञ्च सम्बन्धापेक्षणाद् द्वयोः ॥
अगृहीतेऽपि सम्बन्धे नैकस्यापि प्रवर्त्तनम् ।
सम्बन्धश्च विशेषाणामानन्त्यादतिदुर्गमः ॥
यथा प्रत्यक्षतो धूमं दृष्ट्वाग्निरनुमीयते ।
तथैव शब्दमाकर्ण्य तदर्थोऽप्यवगम्यते ॥
15 अन्वयव्यतिरेकौ च भवतोऽत्रापि लिङ्गवत् ।
यो यत्र दृश्यते शब्दः स तस्यार्थस्य वाचकः ॥
पक्षधर्मत्वमप्यस्ति शब्द एव यतोऽर्थवान् ।
प्रकल्पयिष्यते पक्षो धूमो दहनवानिव ।
तत्र धूमत्वसामान्यं तद्वदत्रापि वक्ष्यते ॥
20 एवं विषयसामग्रीसाम्यादेकत्वनिश्चये ।
न विलक्षणतामात्रं किञ्चिदन्यत्वकारणम् ॥
पूर्ववर्णक्रमोद्भूतसंस्कारसहकारिता ।
पुरुषापेक्षवृत्तित्वं विवक्षानुसृतिक्रमः ।
इत्यादिना विशेषेण न प्रमाणान्तरं भवेत् ॥
25 कार्यकारणधर्मादिविशेषोऽत्रापि नास्ति किम् ।
यथेष्टविनियोज्यत्वमपि नान्यत्वकारणम् ॥

हस्तसंज्ञादिलिङ्गेऽपि तथाभावस्य दर्शनात् ।
दृष्टान्तनिरपेक्षत्वमभ्यस्ते विषये समम् ॥
अनभ्यस्ते तु सम्बन्धस्मृतिसापेक्षता द्वयोः ।
अनेकप्रतिभोत्पत्तिहेतुत्वमपि विद्यते ॥
अस्पष्टलिङ्गे कस्मिंश्चिदश्व इत्यादिशब्दवत् ।	5
स्फुटार्थानवसायाश्च प्रमाणाभासतो यथा ।
लिङ्गे तथैव शब्देऽपि नानार्थभ्रमकारिणि ॥
अपि च प्रतिभामात्रे शब्दाज्जातेऽपि कुत्रचित् ।
आप्तवादत्वलिङ्गेन जन्यते निश्चिता मतिः ॥
अत एव हि मन्यन्ते शब्दस्यापि विपश्चितः ।	10
आप्तवादाविसंवादसामान्यादनुमानताम् ॥
किञ्च शब्दो विवक्षायामेव प्रामाण्यमश्नुते ।
न बाह्ये व्यभिचारित्वात् तस्याश्चैतस्य लिङ्गता ॥

## शब्देऽनुमानतः पृथक् प्रामाण्यव्यवस्थापनम्

तत्राभिधीयते, द्विविधः शब्दः पदात्मा वाक्यात्मा चेति । तत्र वाक्यमनवगतसम्बन्धमेव वाक्यार्थमवगमयितुमलम्, अभिनवविरचितश्लोकश्रवणे सति पदसंस्कृतमतीनां तदर्थावगमनदर्शनात् । अतः सम्बन्धाधिगममूलप्रवृत्तिनानुमानेन तस्य कथं साम्यसम्भावना ? पदस्य तु सम्बन्धाधिगमसापेक्षत्वे सत्यपि सामग्रीभेदाद् विषयभेदाच्चानुमानाद् भिन्नत्वम् । विषयस्तावद् विसदृश एव पदलिङ्गयोः ।	15

---

हस्तसंज्ञादिलिङ्गेऽपीति । यदेत्थमङ्गुल्यस्तदेदं बोद्धव्यमिति ।	20

अश्व इत्यादिशब्दवदिति । अश्व इति घोटकाभिधायि प्रातिपदिकम् । आख्यातन्तु श्वयतेः चङि सिपि "विभाषा धेट्श्व्योः" इति श्वेः अङि 'श्वयतेरः' इत्यत्वेऽडागमे च कृते यत् सिद्धयति तद् वृंहितवांस्त्वमित्यर्थे ।

आप्तवादाविसंवादसामान्यादिति । यथा धूमसामान्यादग्निसामान्यनिश्चय एवमाप्तवादसामान्यादविसंवादित्वसामान्यनिश्चय इत्यर्थः । आप्तवादानां वा अविसंवादः सामान्यं रूपम्, यो य आप्तवादः स सोऽविसंवादीत्यर्थः ।	25

तद्वन्मात्रं पदस्यार्थं इति च स्थापयिष्यते। अनुमानन्तु वाक्यार्थविषयम् अत्राग्नि-रग्निमान्पर्वत इति, ततः प्रतिपत्तेः। उक्तञ्च तत्र धर्मविशिष्टो धर्मी साध्य इति।

नन्वु पदान्यपि वाक्यार्थवृत्तीनि सन्ति गोमान् औपगवः, कुम्भकार इति। सत्यम्। किन्तु तेष्वपि साकाङ्क्षप्रत्ययानुत्पादात् गोमान् क इत्याकाङ्क्षाया अनिवृत्तेः।

अपि च पर्वतादिविशेष्यप्रतिपत्तिपूर्विका पावकादिविशेषणावगतिर्लिङ्गादु-देति, पदात्तु विशेषणावगतिपूर्विका विशेष्यावगतिरिति विषयभेदः।

ननूक्तं यथानुमाने धर्मविशिष्टो धर्मी साध्य एवमिहार्थविशिष्टः शब्दः साध्यो भवतु। मैवम्। शब्दस्य हेतुत्वात्, न च हेतुरेव पक्षो भवितुमर्हति।

ननु यथा अग्निमान् अयं धूमो धूमवत्त्वात् महानसधूमवदित्युक्तं 'सा देशस्या-ग्नियुक्तस्य धूमस्यान्यैश्च कल्पिता'इति, एवं गोशब्द एवार्थवत्त्वेन साध्यताम्, गोशब्द-त्वादित्यादिसामान्यञ्च हेतूक्रियतामिति। एतदपि दुर्घटम्। शब्दस्य धर्मिणः किमर्थ-विशिष्टत्वं वा साध्यते ? प्रत्यायनशक्तिविशिष्टत्वं वा ? अर्थप्रतीतिविशिष्टत्वं वा ? न तावदर्थविशिष्टत्वं साध्यं शैलज्वलनयोरिव शब्दार्थयोर्धर्मधर्मिभावाभावात्।

अथार्थविषयत्वाच्छब्दस्यार्थविशिष्टतेत्युच्यते, तदप्ययुक्तम्। तत्प्रतीतिजनन-मन्तरेण तद्विषयत्वानुपपत्तेः। प्रतीतौ तु सिद्धायां किं तद्विषयत्वद्वारकेण तद्धर्मत्वेन ? यदि तु तद्विषयत्वमूलं तद्धर्मित्वपूर्विकार्थप्रतीतिः, अर्थप्रतीतिमूलं तद्विषयत्वं तदितरेतराश्रयम्। तस्मान्नार्थविशिष्टः शब्दः साध्यः, नाप्यर्थप्रत्यायनशक्तिविशिष्टः, तदर्थितया शब्दप्रयोगाभावात्।

न शक्तिसिद्धये शब्दः कथ्यते श्रूयतेऽपि वा।
अर्थगत्यर्थमेवामुं शृण्वन्ति च वदन्ति च॥

नाप्यर्थप्रतीतिविशिष्टः शब्दः पक्षतामनुभवितुमर्हति, सिद्धयसिद्धिविकल्पा-नुपपत्तेः।

---

पदात्तु विशेषणावगतीति। गोशब्दाद् गोत्वविशिष्टपिण्डावगतेः।

सा देशस्येति। प्रमेयता, पूर्वस्मिन्नर्धे 'तस्माद्धर्मविशिष्टस्य धर्मिणः स्यात् प्रमे-तया' इति तस्या एव प्रक्रान्तत्वात्।

असिद्धयापि तद्वत्त्वं शब्दस्यार्थधिया कथम् ।
सिद्धायां तत्प्रतीतौ वा किमन्यदनुमीयते ॥

ज्वलनादावपि तुल्यो विकल्प इति चेद्, न हि तत्राग्निर्धूमेन जन्यते अपि तु गम्यते, इयं त्वर्थप्रतीतिर्जन्यते शब्देनेत्यस्यामेव सिद्धासिद्धत्वविकल्पावसरः । तस्मात् त्रिधापि न शब्दस्य पक्षत्वम् ।

अपि च गोशब्दे धर्मिणि गत्वादिसामान्यात्मकस्य हेतोर्ग्रहणम्, ततो व्याप्तिस्मरणम्, ततः परामर्शः, ततोऽर्थप्रतिपत्तिरिति कालद्राघीयस्त्वाद्धर्मी तिरोहितो भवेद्,न पर्वतवदवस्थितिस्तस्य अपि तूच्चरितप्रध्वंसित्वं शब्दस्य । न च शब्दमर्थवत्त्वेन लोकः प्रतिपद्यते किन्तु शब्दात् पृथगेवार्थमिति न सर्वथा शब्दः पक्षः । अतो धर्मविशिष्टस्य धर्मिणः साध्यस्येहासम्भवाच्छब्दलिङ्गयोर्महान् विषयभेदः ।

सामग्रीभेदः खल्वपि पक्षधर्मान्वयादिरूपसापेक्षमनुमानं व्याख्यातम् । शब्दे तु न तानि सन्ति रूपाणि । तथा च शब्दस्य पक्षत्वप्रतिक्षेपान्न तद्धर्मतया गत्वादिसामान्यस्य लिङ्गता, न चार्थस्य धर्मित्वं सिद्ध्यसिद्धिविकल्पानुपपत्तेः । न च तद्धर्मत्वं शब्दस्य शक्यते वक्तुं तत्र वृत्त्यभावात्, प्रतीतिजनकत्वेन तद्धर्मतायामुच्यमानायां पूर्ववदितरेतराश्रयम्, पक्षधर्मादिबलेन प्रतीतिः प्रतीतौ च सत्यां पक्षधर्मादिरूपलाभः ।

अपि च यद्यर्थधर्मतया शब्दस्य पक्षधर्मत्वं भवेत् तदानवगतधूमाग्निसम्बन्धोऽपि यथा धूमस्य पर्वतधर्मतां गृह्णात्येव तथानवगतशब्दार्थसम्बन्धोऽपि अर्थधर्मतां शब्दस्य गृह्णीयान्न च गृह्णातीत्यतो नास्ति पक्षधर्मत्वं शब्दस्येति । अन्वयव्यतिरेकावपि तस्य दुरुपपादौ देशे काले च शब्दार्थयोरनुगमाभावात् । न हि यत्र देशे शब्दस्तत्रार्थः । यथोक्तं श्रोत्रियैः 'मुखे हि शब्दमुपलभामहे भूमावर्थमि'ति, वयन्तु कर्णाकाशे शब्दमुपलभामहे इत्यास्तामेतत् । नापि यत्र काले शब्दस्तत्रार्थः । तदानीं युधिष्ठिरार्थाभावेऽपि तद्बुद्ध्योरन्वयो ग्रहीष्यते इत्युच्यते ? तर्हि वक्तव्यं किमर्थ-

---

गत्वादिसामान्यात्मकस्य हेतोरिति । गकार, औकार, विसर्जनीयव्यतिरेकेणान्यस्य भिन्नस्य गोशब्दास्याभावात् । तेषाञ्च क्षणिकत्वेनान्यत्रान्वयाभावेन गमकत्वाभावात् तत्सामान्यानामेव हेतुत्वमिति ।

बुद्धावुत्पन्नायामन्वयो गृह्यते अनुत्पन्नायां वा ? अनुत्पन्नायां तावत् स्वरूपासत्त्वात् कुतोऽन्वयग्रहणम् ? उत्पन्नायान्त्वर्थबुद्धौ किमन्वयग्रहणेनेति नैष्फल्यम् । तत्पूर्वकत्वे
5 तु पूर्ववदितरेतराश्रयम् । एतेन व्यतिरेकग्रहणमपि व्याख्यातम् ।

नन्वावापोद्वापद्वारेण शब्दार्थसम्बन्धे निश्चीयमाने उपयुज्येते एवान्वयव्यतिरेकौ, यथोक्तं 'तत्र योऽन्वेति यं शब्दमर्थस्तस्य भवेदसौ'इति। सत्यमेतत् । किन्तु समयबलेन सिद्धायामर्थबुद्धौ समयनियमार्थावन्वयव्यतिरेकौ शब्देनान्वयव्यतिरेककृता च धूमादेरिव ततोऽर्थबुद्धिः । अपि च

10 धूमादिभ्यः प्रतीतिश्च नैवावगतिपूर्विका ।
इहावगतिपूर्वैव शब्दादुत्पद्यते मतिः ॥
स्थविरव्यवहारे हि बालः शब्दात् कुतश्चन ।
दृष्ट्वार्थमवगच्छन्तं स्वयमप्यवगच्छति ॥

---

तत्पूर्वकत्वे त्विति । अन्वयग्रहणे सति अर्थबुद्धिः, अर्थबुद्धौ सत्यामन्वयग्रहण-
15 मिति। एतेन व्यतिरेकग्रहणमिति । (किम् ?) अर्थबुद्धावुत्पन्नायाम् 'यत्रेयमर्थवुद्धिर्नास्ति तत्र शब्दबुद्धिरपि नास्ति' इत्यादि । तत्र योऽन्वेति यं शब्दमिति । तथाहि यथा 'घटं करोति' इत्यत्र कर्मशक्तिः प्रतीयते तथा घटशब्दापाये 'पटं करोति' इत्यत्रापि प्रतीयमाना 'अम्'प्रत्ययवाच्यत्वमात्मनो निश्चाययति; एवं 'घटं करोति' इत्यत्र घटप्रातिपदिकार्थो योऽवगतः स सत्यप्यम्प्रयोगे 'पटं करोति' इत्यत्राप्रतीयमानः प्रकृत्यर्थं इति निश्चीयते। समयनियमार्थाविति । प्रकृतिप्रत्ययात्मकत्वाच्छब्दस्य कस्य कस्मिन्नंशे
20 समयः कृत इत्ययमंशोऽस्य शब्दांशस्य वाच्योऽयमस्येति प्रागुक्ताभ्यामन्वयव्यतिरेकाभ्यां निश्चीयते ।

नैवावगतिपूर्विकेति । न हि येन पूर्वं धूमादग्निरवगतः स एव धूमादग्निं प्रतिपद्यतेऽपि तु येनापि न प्रतिपन्नोऽग्निना सह भूयोदर्शनेन धूमस्य गृहीतः सम्बन्धः सोऽपि प्रतिपद्यते एव ततोऽग्निम् । शब्दस्तु येन तदर्थवाचकत्वेनावगतः स एव ततोऽर्थं प्रतिपद्यते नान्यः ।
25

तत्राप्येवं समयः क्रियते एतस्माच्छब्दादयमर्थस्त्वया प्रतिपत्तव्य इति। तत्रापि प्रतीतिरेवाविनाभावो नाम सम्बन्धः, अन्यश्च शब्दार्थयोः समयापरनामा वाच्यवाचकभावः सम्बन्धः कारणत्वेन निर्दिष्टो द्रष्टव्यः। तस्मादन्यो लिङ्गलिङ्गिनोरविनाभावाद् वाच्यवाचकभावः सम्बन्धः प्रतीत्यङ्गम्। एवंविधविषयभेदाद् सामग्रीभेदाच्च प्रत्यक्षवदनुमानादन्यः शब्द इति सिद्धम्।	5

यत्तु पूर्ववर्णक्रमापेक्षणादिवैलक्षण्यमाशङ्क्य दूषितं कस्तत्र फल्गुप्राये निर्बन्धः।

यत्पुनरभिहितम् 'आप्तवादाविसंवादसामान्यादनुमानता' इति तदतीव सुभाषितम्, विषयभेदात्, आप्तवादत्वहेतुना हि शब्दार्थबुद्धेः प्रामाण्यं साध्यते न तु सैव जन्यते, यदाह	10

अन्यदेव हि सत्यत्वमाप्तवादत्वहेतुकम्।
वाक्यार्थश्चान्य एवेह ज्ञातः पूर्वतरश्च सः॥

---

तत्रापि प्रतीतिरेवेति। यद्यपि पूर्वमर्थमन्येन ततः प्रतिपन्नं ज्ञात्वा स्वयं न प्रतिपद्यतेऽपि तु परप्रतीतिं विनैव स्वयमेव प्रतिपद्यते तथापि परेण वक्त्रा 'अस्माच्छब्दादयमर्थो भवता प्रतिपत्तव्यः' इति वदता 'अस्यार्थस्यास्माच्छब्दात् प्रतीतिः' 'अयं शब्द एतदर्थवाचकः' इति तदर्थप्रतीतिरेव तस्य शब्दस्य वाचकत्वे कारणत्वेन निर्दिष्टा। अतस्तत्रापि तादृशाद् वाक्याद् 'यत एतस्यास्माच्छब्दादेतदर्थप्रतीतिरस्ति एतदर्थवाचकोऽयमतोऽहमप्यस्मादमुमर्थं प्रतिपद्ये' इति भवत्यवगतिपूर्विकैवावगतिः।	15

यत्तु पूर्ववर्णक्रमेति। यथाह भट्टः

पूर्वसंस्कारयुक्तान्त्यवर्णसंस्कारकल्पना।	20
विवक्षादि च धूमादौ नास्तीत्येतेन भिन्नता॥
यैरुक्ता तत्र वैधर्म्यविकल्पसमजातिता।
धूमानित्यविषाण्यादि विशेषान्न हि भिन्नता॥
त्रैलक्षण्यपरित्यागो यावन्न प्रतिपाद्यते।
तावद्विशेषमात्रेण वदतो जातिता भवेत्॥	25

ततश्चेदाप्तवादेन सत्यत्वमनुमीयते ।
वाक्यार्थप्रत्ययस्यात्र कथं स्यादनुमानता ।।
जन्म तुल्यं हि बुद्धीनामाप्तानाप्तगिरां श्रुतौ ।
जन्माधिकोपयोगी च नानुमायां त्रिलक्षण इति ।।

5 न च प्रामाण्यनिश्चयाद्विना प्रतिभामात्रं तदिति वक्तव्यम्, शब्दार्थसम्प्रत्ययस्यानुभवसिद्धत्वात्,

एतेन विवक्षाविषयत्वमपि प्रत्युक्तम् । न हि विवक्षा नाम शब्दस्य वाच्यो विषयः किन्त्वर्थ एव तथा ।

विवक्षायां हि शब्दस्य लिङ्गत्वमिह दृश्यते ।
10 आकाश इव कार्यत्वान्न वाचकतया पुनः ।।
शब्दादुच्चरिताच्च वाच्यविषया तावत् समुत्पद्यते
संवित्तिस्तदनन्तरन्तु गमयेत् कामं विवक्षामसौ ।
अर्थोपग्रहवर्जिता तु नियमात् सिद्धैवमाजीविता
तद्वाच्यार्थविशेषिता त्वविदिते नैषां तदर्थे भवेत् ।।

15 **शब्दप्रामाण्ये शङ्का**

ननु सिद्धे प्रमाणत्वे भेदाभेदपरीक्षणम् ।
क्रियते न तु शब्दस्य प्रामाण्यमवकल्पते ।।
अर्थप्रतीतिजनकं प्रमाणमिति वर्णितम् ।
विकल्पमात्रमूलत्वान्नार्थं शब्दाः स्पृशन्त्यमी ।।

---

20 न हि यद्धूमादग्नेरनुमानम्, यच्च कदाचिदनित्यत्वात् कृतकत्वस्य, विषाणित्वाच्चतुष्पादत्वस्य तदनुमानतया परस्परं भिद्यते ।

जन्माधिकोपयोगीति । अनुमायामनुमाने यस्त्रिलक्षणो हेतुः स न जन्माधिकोपयोगी, ज्ञानजन्मनो ज्ञानोत्पादादधिके कार्ये न व्याप्रियते । ज्ञानजन्मन्येव तस्य व्यापार इत्यर्थः । त्रिलक्षणशब्देनात्र हेतुरुक्तः ।

25 अर्थोपग्रहवर्जिता नियतार्थविषयत्वहीना । नियमात् अवश्यम्भावात्, अवश्यं हि जीवन् विवक्षति ।

अर्थो निरूप्यमाणश्च को वा शब्दस्य शक्यते ।
वक्तुं न जातिर्न व्यक्तिर्न तद्वान्नाम कश्चन ॥
सम्बन्धोऽप्यस्य नार्थेन नित्योऽस्ति समयोऽथ वा ।
शक्यः सन्नपि वा बोद्धुमर्थे कथमतीन्द्रिये ॥
वाक्यार्थोऽपि न निर्णेतुं पार्यते पारमार्थिकः । 5
नियोगभावनाभेदसंसर्गादिस्वभावकः ॥
तत्प्रतीत्यभ्युपायश्च किम्पदार्थः पदानि वा ।
वाक्यं वा व्यतिषक्तार्थं स्फोटो वेति न लक्ष्यते ॥
सिद्धायामपि तद्बुद्धौ तस्या द्रढिमकारणम् ।
नित्यत्वमाप्तोक्तत्वं वा न सम्यगवतिष्ठते ॥ 10
पदे नित्येऽपि वैदिक्यो रचनाः कर्तृपूर्विकाः ।
नित्या वा कृतकत्वेऽपि कृताः केनेति दुर्गमम् ॥
कर्त्तास्ति स च निर्द्वन्द्वः स चैकः स च सर्ववित् ।
स च कारुणिको वेति प्रतिपत्तुं न शक्यते ॥
परस्परविरुद्धाश्च सन्ति भूयांस आगमाः । 15
तेषां कस्येश्वरः कर्त्ता कस्य नेति न मन्महे ॥
वेदे दोषाश्च विद्यन्ते व्याघातः पुनरुक्तता ।
फलस्यानुपलम्भश्च तथा फलविपर्ययः ॥

---

**नियोगभावनाभेदेति** । भेदः संसर्गो वा वाक्यार्थ इति वैयाकरणाः केचित् । आदिग्रहणाद् भेदसंसर्गौ वाक्यार्थ इत्यपि संगृहीतम्, तथा क्रिया वाक्यार्थ इत्यपि । 20
नियोगभावनावादिमते नियोगस्य भावनाया वा संसृष्टाया वाक्यात् प्रतीयमानत्वात् तयोरेवैकतरस्य वाक्यार्थत्वम्, न संसर्गस्य भेदस्य वा तत्प्रतीत्युत्तरकालं प्रतीयमानस्य ।

**व्यतिषक्तार्थमिति** तदुक्तम् "व्यतिषक्ततोऽवगतेर्व्यतिषङ्गस्य" इति ।

**परस्परविरुद्धाश्चेति** । नाथवादाद्यागमा अशुचिलक्षणादिप्रतिपादका ईश्वर-प्रणीततयाभिमताः केषाञ्चित्, तदपेक्षयेदमुक्तम् । 25

**व्याघातः** यथा 'उदिते जुहोत्यनुदिते जुहोति' इत्यादौ । **पुनरुक्तता** यथा 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति । सकृदुच्चारणेनैव कर्मस्वरूपप्रकाशसिद्धेः पुनरुच्चारणं पुनरुक्तम् । **फलस्यानुपलम्भः** कृतायामपि पुत्रकामेष्टावनन्तरं पुत्रस्यानुपलम्भात् ।

कीदृशश्चार्थवादानां विरुद्धार्थाभिधायिनाम् ।
मन्त्राणां नामधेयादिपदानां वा समन्वयः ॥
सिद्धकार्योपदेशाच्च वेदे संशेरते जनाः ।
किमस्य कार्ये प्रामाण्यं सिद्धेऽर्थे वोभयत्र वा ॥
5 तेन वेदप्रमाणत्वं विषमे पथि वर्त्तते ।
जीविकोपायबुद्ध्या वा श्रद्धया वाभ्युपेयताम् ॥

## तत्र शङ्कापरिहारः

अत्राभिधीयते । सर्व एवैते दोषा यथाक्रमं परिहरिष्यन्ते इत्यलं सम्भ्राश्वासेन सुप्रतिष्ठमेव वेदप्रामाण्यमवगच्छत्वायुष्मान् ।

10 नन्वर्थासंस्पर्शित्वमेव तावत् कथं परिह्रियते ? न हि बाह्येऽर्थे शब्दाः प्रतीतिमादधति ते हि दुर्लभवस्तुसम्पर्कविकल्पमात्राधीनजन्मानः स्वमहिमानमनुवर्त्तमानास्तिरस्कृतबाह्यार्थसमन्वयान् विकल्पप्रायान् प्रत्ययानुत्पादयन्तो दृश्यन्ते अङ्गुल्यग्रे हस्तियूथशतमास्ते इति, स्वभाव एव शब्दानामर्थासंस्पर्शित्वम् । चक्षुरादीनामप्यलीककचकूर्चकादिप्रतीतिकारणत्वमस्ति न च तेषामर्थासंस्पर्शित्वमिति चेत्, 15 तेषां हि तिमिरादिदोषकलुषितवपुषां तथाविधविभ्रमकारणत्वम्, न तु स्वमहिम्नैव । इहापि पुरुषदोषाणामेष महिमा न शब्दानामिति चेद्,

मैवम् । दोषवतापि पुरुषस्य मूकादेरनुच्चारितशब्दस्येदृशविप्लवोत्पादन-

---

विपर्ययः अन्त्येष्टचाम् तत्र हि पात्रचयं विधायाह 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति' इति, स्वर्गफलविपरीतस्य भस्मीभावस्योपलम्भात् । यजमानशरीरा- 20 वयवेषु यज्ञपात्राणां विशिष्टेन रूपेण विरचनं पात्रचयः । अर्थवादानाम् विरुद्धार्थाभिधायिनाम् । 'धूम एवाग्नेर्दिवा ददृशे नार्चिः, अर्चिरेवाग्नेर्नक्तं ददृशे न धूमः' इत्यादीनाम् । मन्त्राणाम् च कीदृशोऽन्वयो विधायकत्वेनाभिधायकत्वेन वा । नामधेयादिपदानाम् उद्भिदादीनां किं गुणार्थत्वेन समन्वय उत कर्मनामधेयतयेति । जीविकोपायबुद्ध्येति । यथोक्तम्

25 अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्म मुण्डनम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥ इति ॥

पाटवाभावात्। असत्यपि च पुरुषहृदयकालुष्ये यथा प्रयुज्यमानान्यङ्गुल्यग्रादि-
वाक्यानि विप्लवमावहन्त्येवेति शब्दानामेवैष स्वभावो न वक्तृदोषाणाम्। अपि
च न चक्षुरादिबाधकज्ञानोदये सति न विरमति विपरीतवेदनजन्मनः शुक्तिका-
रजतादिबुद्धिषु विभ्रमस्यापायदर्शनात्। शब्दस्तु शतकृत्वोऽपि बाध्यमानो 5
यथैवोच्चरितः 'करशाखादिशिखरे करेणुशतमास्ते' इति तदैव तथाभूतं भूयोऽपि
विकल्पमयथार्थमुत्पादयत्येवेति, विकल्पाधीनजन्मत्वाच्छब्दानामेवेदं रूपं यदर्था-
संस्पर्शित्वं नामेति। तदुक्तम्

विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः।
तेषामन्योन्यसम्बन्धे नार्थं शब्दाः स्पृशन्त्यमी ॥ इति। 10

अत्राभिधीयते भवेदेतदेवं यदि न कदाचिदपि यथार्थं शब्दः प्रत्ययमुप-
जनयेत्। अर्थसंस्पर्शित्वमेवास्य स्वभाव इत्यवगम्यते, भवति तु गुणवत्पुरुष-
भाषितान्नद्यास्तीरे फलानि सन्तीति वाक्यादतिरस्कृतबाह्यार्थो यथार्थः प्रत्ययः,
ततः प्रवृत्तस्य तदर्थप्राप्तेः। न चेयमर्थप्राप्तिरर्थस्पर्शशून्यादपि शब्दविकल्पात्
पारम्पर्येण मणिप्रभामणिबुद्धिवदवकल्पते इत्युपरिष्टाद् वक्ष्यामः। 15

ननु गुणवद्वक्तृकादङ्गुल्यादिवाक्याद् दृष्ट एवासमीचीनः प्रत्ययः? नैवम्
गुणवतामेवंविधवाक्योच्चारणचापलाभावात्।

यत्तु आप्तोऽपि कश्चिदनुशास्ति मा भवानभूतार्थं वाक्यं वादीः 'अङ्गुलि-
कोटौ करिघटाशतमास्ते' इति, तत्रेतिकरणावच्छिन्नस्य दृष्टान्ततया शब्दपरत्वे-
नोपादानात् प्रतिषेधैकवाक्यतया यथार्थत्वमेव। अर्थपरत्वे तु निषेधवाक्यैकवाक्यतैव 20
न स्यादिति। तस्मादाप्तवाक्यानामयथार्थत्वाभावान्न स्वतोऽर्थासंस्पर्शिनः शब्दाः
पुरुषदोषानुषङ्गकृत एवायं विप्लवः।

---

विकल्पयोनयः शब्दा इति। 'अमुमर्थं प्रतिपादयामि' इत्येवमात्मकविकल्पो-
पारूढार्थप्रतिपादनाय शब्दप्रयोगात् शब्दाच्च 'अयमर्थोऽवगतः' इत्येवंरूपविकल्पो-
दयात्। 25

निषेधवाक्यैकवाक्यतैव न स्यादिति। अननुभूतार्थं न प्रयोक्तव्यं यथा किमिति
शब्दपरत्वे भवत्येकवाक्यता, अर्थपरत्वे तु यथा किमित्यपेक्षायामङ्गुल्यग्रहस्तियूथशतयो-
राधाराधेयसम्बन्धरूपोऽर्थो न सङ्गच्छते।

नन्वाप्तैरेवंविधवाक्याप्रयोगेऽपि सन्दिग्धो व्यतिरेकः किं शब्दाभावाद-यथार्थप्रत्ययानुत्पादः, उत वक्तृदोषाभावादिति ? नैतदेवम्

अनुच्चरितशब्दोऽपि पुरुषो विप्रलम्भकः ।
हस्तसंज्ञाद्युपायेन जनयत्येव विप्लवम् ॥

5 न च हस्तसंज्ञादिना शब्दानुमानं तत्कृतश्च विप्लव इति वक्तव्यम् । इत्थम-प्रतीतेः । उत्पन्ने च क्वचिन्नद्यादिवाक्याद् विज्ञाने तरङ्गिणीतीरमनुसरन् अनासा-दितफलः प्रवृत्तबाधकप्रत्ययः पुरुषमेवाधिक्षिपति 'धिक् हा तेन दुरात्मना विप्रलब्धो ऽस्मी'ति न शब्दम् । प्राप्तफलश्च पुमांसमेव श्लाघते 'साधु साधुना तेनोपदिष्टम्' । इत्यतः पुरुषदोषान्वयानुविधानात् तदभावकृत एव आप्तेषु तूष्णीमासीनेषु 10 विभ्रमानुत्पाद इति न सन्दिग्धो व्यतिरेकः । पुरुषदोषकृत एव शब्दाद् विप्लवो न स्वरूपनिबन्धनः ।

ननु पुरुषदोषास्तत्र किं कुर्युः ? पुरुषस्य हि गुणवता दोषवता वा शब्दो-च्चारणमात्रे एव व्यापारः । ततः परन्तु कार्यं शब्दायत्तमेवेति तत्स्वरूपकृत एवायं विभ्रमः । हन्त तर्हि वक्तरि गुणवति सति सरितस्तीरे फलानि सन्तीति सम्यक्-15 प्रत्ययेऽपि शब्दस्यैव व्यापारात् पुरुषस्योच्चारणमात्रे चरितार्थत्वान्नैकान्ततः शब्द-स्यार्थासंस्पर्शित्वमेव स्वभावः । युक्तश्चैतदेव यद् दीपवत् प्रकाशत्वमात्रमेव शब्दस्य स्वरूपं न यथार्थत्वम् अयथार्थत्वं वा, विपरीतेऽप्यर्थे दीपस्य प्रकाशत्वानतिवृत्तेः । अयन्तु विशेषः, प्रदीपे व्युत्पत्तिनिरपेक्षमेव प्रकाशत्वं शब्दे तु व्युत्पत्त्यपेक्षमिति । प्रकाशात्मनस्तु शब्दस्य वक्तृगुणदोषाधीने यथार्थेतरत्वे । अत एवाङ्गुलिशिखरा-20 धिकरणकरेणुशतवचसि बाधितेऽपि पुनः पुनरुच्चार्यमाणे भवति विभ्रमः, प्रकाशकत्वतद्रूपानपायात् । न त्वेष शब्दस्य दोषः ।

पदार्थानान्तु संसर्गमसमीक्ष्य प्रजल्पतः ।
वक्तुरेव प्रमादोऽयं न शब्दोऽत्रापराध्यति ॥

तदुक्तम्, प्रमाणान्तरदर्शनमत्र बाध्यते न पुनर्हस्तियूथशतमिति शाब्दो-25 ऽन्वयः, पुरुषो हि स्वदर्शनं शब्देन परेषां प्रकाशयति । तत्र तद्दर्शनञ्चेद् दुष्टम्, दुष्टः शाब्दः प्रत्ययः, अदुष्टं चेददुष्ट इति । गुणवतः पुरुषस्यादुष्टं दर्शनं भवति दोषवतो

---

तदुक्तमिति । प्राभाकरं वचो ज्ञापकत्वेनाह 'प्रमाणान्तरदर्शनम्' इति । वक्ता यद्वशेन परस्मै अर्थं प्रतिपादयति तदस्य प्रमाणान्तरदर्शनशब्देन विवक्षितम्, तच्च

दुष्टमिति। अदृष्ट्वापि वस्तु यदुपदिश्यते सोऽपि बुद्धिदोष एव। तस्मात् पुरुषगतगुणदोषान्वयव्यतिरेकानुविधायित्वात् तत्कृते एव शाब्दयथार्थत्वायथार्थत्वे। तत्तदुक्तं 'तथ्यमपि भवति वितथमपि भवति' इति।

तेनाभिधातृदौरात्म्यकृतेयमयथार्थता।
प्रत्ययस्येति शब्दानां नार्थसंस्पर्शिता स्वतः॥ 5
या तु जात्यादिशब्दार्थपराकरणवर्त्मना।
अर्थसंस्पर्शिता प्रोक्ता सा पुरस्तान् निषेत्स्यते॥

## प्रामाण्यस्य स्वतस्त्वपरतस्त्वविचारोपक्रमः

प्रमाणत्वन्तु शब्दस्य कथमित्यत्र वस्तुनि।
जैमिनीयैरयं तावत् पीठबन्धो विधीयते॥ 10
प्रामाण्यमप्रामाण्यं वा सर्वविज्ञानगोचरः।
स्वतो वा परतो वेति प्रथमं प्रविविच्यताम्॥

ननु शब्दप्रामाण्यचिन्तावसरे सकलप्रमाणप्रामाण्यविचारस्य कः प्रसङ्गः? न स्वातन्त्र्येण परीक्षणमपि तु तदर्थमेव समानमार्गत्वात्,

अथान्येषां स्वतः परतो वा प्रामाण्यम्, तथा शब्दस्यापि भविष्यतीति न हि तस्य स्वरूपमिव प्रामाण्यमपि तद् विसदृशमिति। तदुच्यते, किं विज्ञानानां प्रामाण्यमप्रामाण्यञ्चेति द्वयमपि स्वतः, उत उभयमपि परतः, आहोस्विद् अप्रामाण्यं स्वतः, प्रामाण्यन्तु परतः, उतस्वित्प्रामाण्यं स्वतः, अप्रामाण्यन्तु परतः इति, 15

## प्रामाण्यं स्वत इति मीमांसकाः

तत्र द्वयमपि स्वत इति तावदसाम्प्रतम्, प्रवृत्तस्य विसंवाददर्शनात्। यदि हि प्रामाण्यमितरद् वा स्वत एव ज्ञानस्य गम्यते तर्हि शुक्तौ रजतज्ञानं प्रमाणतया वा प्रतिपन्नम् अन्यथा वा? 20

प्रमाणत्वपरिच्छित्तौ विसंवदति तत्कथम्।
अप्रामाण्यगृहीतौ वा तस्मिन् कस्मात् प्रवर्त्तते॥ 25

---

कदाचिदज्ञानमोहाद्यपि भवति। तत्तथ्यमपि भवतीति। पौरुषेयं वच इति प्रकृतम्।

पीठबन्धः भूमिकारचनम्।

इह पुनरारब्धकार्या अनारब्धकार्या वा पटे तन्त्वादय इव वर्णे न केचिदवयवा उपलभ्यन्ते, न चानुमीयन्ते लिङ्गाभावात्, नाप्याश्रयविनाशाद् विनाशः शब्दस्यात्मादिवदनाश्रितत्वात्, आकाशाश्रितत्वपक्षे वा तन्नित्यत्वात्, न चान्यः

तस्मात् तिरोहितोऽप्यास्ते यदि शब्दः क्षणान्तरम् ।
5 मृत्योर्दुःखादपक्रान्तः पुनः केनैष हन्यते ॥

अतश्च नित्यः शब्दः, संख्याभावाद्। अष्टकृत्वो गोशब्दः प्रयुक्त इति वदन्ति न त्वष्टौ गोशब्दा इति तेनैकत्वमवगम्यते । योऽयं क्रियाभ्यावृत्तिगणने विहितः कृत्वसुच्प्रत्ययः स क्रियावतामभेदे भवति तेनोच्चारणावृत्तिमात्रम्, तदुक्तम्

क्रियावतामभेदे हि क्रियावृत्तिषु कृत्वसुच् ।
10 तत्प्रयोगाद् ध्रुवं तस्य शब्दस्यावर्त्तते क्रिया । इति ॥

संख्यावताम् ।

संख्याभिधायिनः शब्दात् कृत्वसुच्प्रत्ययं विदुः ।
तदनेन प्रकारेण प्रत्यभिज्ञानमुच्यते ॥

प्रमाणं शब्दनित्यत्वे सकलश्रोतृसाक्षिकम् ।
15 तथा ह्यस्ति स एवायं गोशब्द इति वेदनम् ।
श्रौत्रं करणकालुष्यबाधसन्देहवर्जितम् ॥

श्रोत्रेन्द्रियव्यापारान्वयव्यतिरेकानुविधानाच्छ्रौत्रमिदं विज्ञानम्। न चैतज्जनकस्य करणस्य किमपि दौर्बल्यमुपलभ्यते । न च किं स्विदिति कोटिद्वयसंस्पर्शितयेदं विज्ञानमुपजायते, नच नैतदेवमिति प्रत्ययान्तरमस्मिन् बाधकमुत्पश्यामः ।
20 इदानीन्तनास्तित्वप्रमेयाधिगमग्रहणाच्चेदमनधिगतार्थग्राह्यपि भवितुमर्हति । भवन्मते च गृहीतग्राहित्वेऽपि प्रत्यभिज्ञायाः प्रामाण्यमिष्यते, न हि तदप्रामाण्यं वक्तुं शक्यते शाक्यैरिव भवद्भिः, क्षणिकपदार्थानभ्युपगमात् ।

न सादृश्यनिमित्तत्वं वक्तुं तस्याश्च युज्यते ।
सामान्यविषयत्वं वा द्वयस्यापि निषेधनात् ॥

---

20 ब्धकार्याः साक्षात् पटस्यारम्भकास्तन्तवः, अंश्वादयस्तु साक्षात् पटस्यानारम्भकत्वादनारब्धकार्याः, अंशुभिर्हि तन्तवः साक्षाद् आरभ्यन्त न पटः एवम् अंश्वारम्भकैरप्यंशवो न तन्तवो यावत् परमाणव इति ।

कैश्चित्तिरोहिते ...... भावादित्यप्रामाण्यमुच्यते ।
तदसत् तत्प्रतीत्यैव तिरोधाननिषेधनात् ॥
जीवति त्वन्मतेऽप्येष शब्दस्त्रिचतुरान् क्षणान् ।
प्रत्यभिज्ञा च कालेन तावता न न सिद्ध्यति ॥
एकक्षणायुषि त्वस्मिन् प्रतीतिरतिदुर्लभा ।
न खल्वजनकं किञ्चिद् वस्तुज्ञानेन गृह्यत इति ॥ 5

क्षणभङ्गभङ्गे वक्ष्यते, अपि च

यथा निशीथे रोलम्बश्यामलाम्बुदडम्बरे ।
प्रत्यभिज्ञायते किञ्चिदचिरद्युतिधामभिः ॥
तथाविरतसंयोगविभागक्रमजन्मभिः ।
प्रत्यभिज्ञायते शब्दः क्षणिकैरपि मारुतः ॥ 10

## शब्दानामभिव्यक्तौ दोषाः

अत्राह, मारुतैरित्यनेनोपोद्घातेन साधु स्मृतम् । तिष्ठतु तावत्प्रत्यभिज्ञानं, प्रथममेव शब्दस्य यन्नियतग्रहणं तदभिव्यक्तिपक्षे दुर्घटम् ।

नित्यत्वाद्व्यापकत्वाच्च सर्वे सर्वत्र सर्वदा ।
शब्दाः सन्तीति भेदेन ग्रहणे किं नियामकम् ॥ 15

ध्वनयो हि नाम संयोगविभागविशेषिता वायवः, वायुवृत्तयो वा संयोगविभागास्ते हि शब्दस्य व्यञ्जका इष्यन्ते, तैश्च करणं वा संस्क्रियते कर्म वा द्रव्यं वा सर्वथा च प्रमादः ।

करणे संस्कृते तावत् सर्वशब्दश्रुतिर्भवेत् ।
गकारायैव संस्कार इत्येष नियमः कुतः ॥ 20

---

तिरोहिते भावादिति । तिरोहिते विनष्टे शब्दे प्रत्यभिज्ञानस्य भावात्, तस्य निर्विषयत्वे शब्दाविनाशितायां न प्रामाण्यमित्यर्थः ।

अनेनोपोद्घातेन प्रस्तावेन ।

अपि च स्तिमितसमीरणापसरणमेव करणस्य संस्कारः। स चायं तद्देश-व्यवस्थितसकलतद्विषयसाधारण एव।

यथा जवनिकापायप्राप्तप्रसरमीक्षणम्।
रङ्गभूमिषु तद्देशमशेषं वस्तु पश्यति॥
5 तथा प्रसरसंरोधिसमीरोत्सारणे सति।
श्रोत्रं तद्देशनिःशेषशब्दग्राहि भविष्यति॥

आकाशञ्च श्रोत्रमाचक्षते भवन्तः, तच्च विभु निरवयवं चेति, क्वचिदेव तस्मिन् संस्कृते सति सर्वे च तदैव संस्कृतकरणाः प्राणिनः सम्पन्ना इति सर्व एव शृणुयुः। विषये तु संस्क्रियमाणे तस्यानवयवस्य व्यापिनश्च संस्कृतत्वात् सर्वत्र श्रवण-
10 मिति। मद्रेष्वभिव्यक्तो गोशब्दः कश्मीरेष्वपि श्रूयेत। न हि तस्याधारद्वारक संस्कारः आकाशवदनाश्रितत्वात्, आकाशाश्रितत्वपक्षेऽपि तदेकत्वात्। नापि भागशः संस्क्रियते गोशब्दः तस्य निरवयवत्वात्। उक्तं हि

अल्पीयसा प्रयत्नेन शब्दमुच्चारितं मतिः।
यदि वा नैव गृह्णाति वर्णं वा सकलं स्फुटमिति॥

15 उभयसंस्कारपक्षे तु दोषद्वयस्याप्यनतिवृत्तिः सर्वेषां ग्रहणं सर्वत्र श्रवण-मिति। न च समानदेशानां समानेन्द्रियग्राह्याणाञ्च भावानां प्रतिनियतव्यञ्जक-व्यङ्ग्यत्वमुपलब्धम्।

गृहे दधिघटीं द्रष्टुमानीतो गृहमेधिना।
अपूपानपि तद्देशान् प्रकाशयति दीपकः॥

---

20 स्तिमितसमीरणेति। स्तिमितो निश्चलो यः श्रोत्रवर्ती समीरणः।

न हि तस्याधारद्वारक इति। यद्यपि शब्दो व्यापी तथापि तदाधाराणा-मव्यापितत्वात् तद्द्वारेण यः संस्कारः स कथं सकलदेशावस्थितशब्दसंस्कार इति शङ्कामनेन निराकरोति।

आकाशवदनाश्रितत्वात् इति। केषाञ्चिन्मीमांसकानामाकाशवदनाश्रितः शब्दः।

25 यदि वा नैव गृह्णातीति। मन्दोच्चारिते नैव वा गृह्यते, गृह्यते चेत् सकल एव वर्णो गृह्यते न तु तस्य भागा गृह्यन्त इत्यर्थः।

तस्मात् कृतकपक्षे एव नियतदेशं शब्दस्य ग्रहणं परिकल्पते नाभिव्यक्तिपक्षे इति। अपि च, अभिव्यक्तिपक्षे तीव्रमन्दविभागोऽभिभवश्च शब्दस्य शब्दान्तरेण न प्राप्नोति। न हि शब्दस्तीव्रो मन्दो वा कश्चित्, स्वतस्तस्य भेदाभावात्। संस्कारस्य च तदभिव्यक्तिहेतोर्न काचन तीव्रता मन्दता वा यदनुसारेण विषये तथा बुद्धिः स्यात्। पवनधर्मा वा तीव्रादिर्भवन् कथं श्रोत्रेण गृह्येत? सावयवे हि वस्तुनि सकल-विशेषग्रहणाग्रहणसम्भवात् तदपेक्षया प्रतीतिभेदो भवेत्, इह तु निरवयवे शब्दे न तथोपपद्यते इति। तस्मात् कृतकपक्ष एव श्रेयानिति।

## शब्दानामभिव्यक्तौ दोषपरिहारः

अत्रोच्यते, करणसंस्कारपक्ष एव तावदस्तु, तच्च करणं किञ्चिदेव मरुद्भि-रुपाहितसंस्कारं कञ्चिदेव शब्दं गृह्णाति।

यथा ताल्वादिसंयोगविभागाः केचिदेव नः।
कस्यचिद् ग्रहणे शक्तं श्रोत्रं कुर्वन्ति संस्कृतम्॥
यथा च तेषामुत्पत्तौ सामर्थ्यनियमस्तव।
तथैवैषामभिव्यक्तौ सामर्थ्यनियमो मम॥

व्यञ्जकानां नियमो न दृष्ट इति चेत्, क एवमाह, सहस्राक्षः? तथा हि पृथिव्यामेव वर्त्तमानो गन्धः समानदेशो भवति समानेन्द्रियग्राह्यश्च, घ्राणैकविषय-त्वात्। तस्य च नियमतस्तद्व्यजकव्यङ्ग्यता दृश्यते एव।

क्वचित् पावकसम्पर्कादर्कांशुस्पर्शतः क्वचित्।
क्वचित् सलिलसंसेकाद् गन्धोऽभिव्यज्यते भुवः॥

न च स्तिमितपवनापनोदनमात्रं करणस्य संस्कार इष्यते यः सर्वसाधारणः स्यात्। किन्त्वन्य एव नियतः प्रतिविषयं योग्यतालक्षणः।

यत्पुनरभ्यधायि नभसि श्रोत्रेऽभ्युपगम्यमाने सर्वप्राणिनामेकमेव श्रोत्रं भवेद् इति, तदप्यसाधु, धर्माधर्मयोर्नियामकत्वात्, आकाशस्यापि घटाकाशवद-

---

क एवमाह सहस्राक्ष इति। यस्य वि (?) सहस्रमक्ष्णां सः यद्येवं वक्तुं शक्नुयात् 'न दृष्टः' इति, न पुनरल्पदर्शी द्विदृगिति।

योग्यतालक्षणो नियतविषयग्रहणरूपकार्यानुमेयः।

न्यावच्छेदोपपत्तेः, धर्माधर्मनिबन्धन एव बधिरेतरविभागः। अपि च भवतामेवैष दोषो येषामाकाशमेव श्रोत्रमित्यभ्युपगमनियमः। मीमांसकानान्तु नावश्यमाकाशमेव श्रोत्रम्। कार्यार्थापत्तिकल्पितन्तु किमपि करणमात्रं प्रतिपुरुषनियतं श्रोत्रमिति नातिप्रसङ्गः। तथा च भर्तृमित्रः, 'पवनजनितसंस्कारपक्षो भवतु' तथापि 5 नातिप्रसङ्गः, नियतदेशस्यैव तत्र संस्कारात्। न चास्य भागशः संस्कारो निरवयवत्वात्। तथापि जातिवदस्य ग्रहणनियमो भविष्यति। तथा च भवतामेव पक्षे

यथा सर्वगता जातिः पिण्डदेशैव गृह्यते।
न च कात्स्न्र्यगृहीतापि पिण्डेऽन्यत्र न दृश्यते॥
तथा सर्वगतः शब्दो नाददेशेषु गृह्यते।
10 कात्स्न्र्येन च गृहीतोऽपि पुनरन्यत्र गृह्यते॥
पिण्डोऽभिव्यञ्जको जातेः शब्दस्य व्यञ्जको ध्वनिः।
आश्रितानाश्रितत्वादिविशेषः क्वोपयुज्यते॥

सर्वगतत्वनिरवयवत्वाविशेषात् तीव्रमन्दत्वादयश्च ध्वनिधर्मा अपि भवन्तः शब्दवृत्तितयावभान्ति। यथा स्थूलत्वकृशत्वादयः पिण्डधर्मा अपि जाति- 15 वृत्तित्वेन क्वचिद् गृह्यन्ते, अगृहीतशावलेयादिविशेषस्य कृशा गाव इत्यादिप्रतिभासदर्शनात्।

यद्वा न तीव्रमन्दादेर्वर्णधर्मतया ग्रहः।
बुद्धिरेव तथोदेति व्यञ्जकानुविधायिनी॥
तावन्त एव ते वर्णाः प्रचयापचयस्पृशः।
20 एवञ्चाभिभवोऽप्येषां स्वतो नास्ति परस्परम्॥
मरुद्भिरभिभूयन्ते मारुता एव दुर्बलाः।
तेजोभिरिव दीप्तांशोर्दिवा दीपप्रभादयः॥

द्वयसंस्कारपक्षोऽप्येवं समाहितो भवति, उभयेषामपि दोषाणामुत्सारणात्। तस्मात् प्रत्यभिज्ञाप्रत्ययप्रभावसिद्धनित्यत्वस्य शब्दस्याभिव्यक्तिरेव साधीयसी।

---

25 तथा च भर्तृमित्रेति। भर्तृमित्राख्यस्तन्त्रशुद्ध्यादिप्रकरणकृन्मीमांसकः 'कर्णशष्कुल्यां पवनजनितः संस्कारः श्रोत्रम्' इत्याह, तदन्वयव्यतिरेकानुविधायित्वाच्छब्दग्रहणस्य।

## शब्दानामभिव्यक्ति-कार्यपक्षयोर्लाघवगौरवविचारः

इदञ्चालोच्यतामार्याः कार्याभिव्यङ्ग्यपक्षयोः ।
शब्दस्य ग्रहणे गुर्वी लघ्वी वा कुत्र कल्पना ॥

तथा हि भवन्तो वैशेषिकाः, सांख्याः, जैनाः, सौगताश्च कार्यशब्दवादिनः, चार्वाकास्तु वराकाः कस्यैवंविधासु गोष्ठीषु स्मृतिपथमुपयान्ति । 5

तत्रभवतां वैशेषिकाणां शब्दस्य श्रवणे तावदेषा तुल्यैव कल्पना, संयोगाद् विभागाद् वा शब्द उपजायते, जातश्चासौ तिर्यगूर्ध्वमधश्च सर्वतोदिक्कानि कदम्बगोलकाकारेण सजातीयनिकटदेशानि शब्दान्तराण्यारभते, तान्यपि तथेत्येवं वीचीसन्तानवृत्त्यारम्भप्रबन्धप्राप्तोऽन्त्यः श्रोत्राकाशजन्मा शब्दस्तत्समवेतस्तेनैव गृह्यते इति । तदियं तावदतिघर्घरी कल्पना । 10

शब्दः शब्दान्तरं सूत इति तावदलौकिकम् ।
कार्यकारणभावो हि न दृष्टस्तेषु बुद्धिवत् ॥
जन्यन्तेऽनन्तरे देशे शब्दैः स्वसदृशाश्च ते ।
तिर्यगूर्ध्वमधश्चेति केयं वा श्रद्दधानता ॥
शब्दान्तराणि कुर्वन्तः कथञ्च विरमन्ति ते । 15
न हि वेगक्षयस्तेषां मरुतामिव कल्पते ॥
कुड्यादिव्यवधाने च शब्दस्यावरणं कथम् ।
व्योम्नः सर्वगतत्वाद्धि कुड्यमध्ये व्यवस्थितिः ॥

अथावरणात्मककुड्यादिद्रव्यसंयोगरहितमाकाशं शब्दजन्मनि समवायिकारणमिष्यते तदत्र प्रमाणं विशेषे वक्तव्यम् । 20

तुल्यारम्भे च मन्देन तीव्रस्य जननं कथम् ।
श्रूयते चान्तिकात्तीव्रःशब्दो मन्दस्तु दूरतः ॥

---

न दृष्टस्तेषु बुद्धिवदिति । यथा लिङ्गादिबुद्धिर्लिङ्ग्यादिबुद्धिमारभमाणा दृश्यते तथा न शब्दः शब्दान्तरमित्यर्थः ।

वीचीसन्तानतुल्यत्वमपि शब्दे सुदुर्वचम् ।
मूर्त्तिमत्त्वक्रियायोगवेगादिरहितात्मसु ॥

## शब्दस्य शब्दजनकत्वे प्रमाणाभावप्रदर्शनम्

यदप्युच्यते सजातीयजनकः शब्दः गुणत्वाद्रूपादिवदिति तदिदमसिद्धम-
5 सिद्धेन साध्यं गुणत्वस्यासिद्धत्वात् ।

न शब्दः पारतन्त्र्येण कदाचिदुपलभ्यते ।
द्रव्यस्थ इव रूपादिरतोऽस्य गुणता कुतः ॥

अपि च न शब्दान्तरारम्भकः शब्दो गुणत्वाद् रूपवत्, शब्दः शब्दं नारभते शब्दत्वाच्छ्रोत्रशब्दवत्, न संयोगविभागौ शब्दस्य जनकौ संयोग-
10 विभागत्वादन्यसंयोगविभागवद् इत्यादयः प्रतिहेतवोऽप्यत्र सुलभा इति यत् किञ्चिदेतद् ।

कापिलास्तु ब्रुवते श्रोत्रवृत्तिः शब्ददेशं गच्छति सा शब्देन विक्रियते इति । तत्र श्रोत्रस्य व्यामिश्रत्वान्निकटदेशेनैव शब्देन तद्वृत्तिर्विक्रियते न दूरदेशेनेत्यत्र को नियमः ? नियमाभावाच्च कान्यकुब्जप्रयुक्तो गोशब्दो गौरमूलकेऽपि श्रूयेत ।
15 अमूर्त्ता च श्रोत्रवृत्तिः प्रसरन्ती न मूर्तैः कुड्यादिभिरभिहन्तुं शक्यते इति व्यवहितस्यापि शब्दस्य श्रवणं स्यात् ।

---

मूर्तिमत्त्वक्रियायोगेति । वीच्या हि मूर्तिमत्त्वादिना वीच्यन्तरकारणजातस्य प्रेरणं क्रियते. तस्मिन् हि सति वीच्यन्तरनिष्पत्तेः । तथा चोक्तम् "देशान्तरगतं कार्यं नामूर्तस्यानभिघ्नतः" इति ।

20 पारतन्त्र्याद् गुणत्वं रूपादिवत् सेत्स्यतीत्याशङ्क्याह— न शब्दः पारतन्त्र्येणेति ।

कापिलास्तु ब्रुवत इति । श्रोत्रस्याहङ्कारिकत्वाद् व्यापकत्वेन गमनासम्भवः, शब्दाभिघातेन तु या तस्य वृत्तिरुदेति सा शब्ददेशं गच्छतीति केषाञ्चित् साङ्ख्यानां मतम् । सा शब्देन विक्रियते स्वनिर्भासा संपाद्यते ।

वायौ शब्दानुकूले च न तस्य श्रवणं भवेत् ।
गच्छन्त्याः प्रतिकूलो हि श्रोत्रवृत्तेः स मारुतः ॥

दूरेऽपि शब्दस्य श्रवणं यद् दृष्टं प्रतिवातश्च निकटेऽपि यदश्रवणं तदस्मिन् पक्षे विपरीतं स्यात् ।

वृत्तिवृत्तिमतोर्भेदो नास्तीतीन्द्रियवद्भवेत् । 5
व्यापिका वृत्तिरित्येवं कथं सर्वत्र न श्रुतिः ॥

आर्हतास्त्वाहुः सूक्ष्मैः शब्दपुद्गलैरारब्धशरीरः शब्दः स्वप्रभवभूमेः निष्क्रम्य प्रतिपुरुषं कर्णमूलमुपसर्पतीति तदेतदतिसुभाषितम् ।

वर्णस्यावयवाः सूक्ष्माः सन्ति केचन पुद्गलाः ।
तैर्वर्णोऽवयवी नाम जन्यते पश्य कौतुकम् ॥ 10
तेषामदृश्यमानानां कीदृशो रचनाक्रमः ।
केन तत्संनिवेशेन कः शब्द उपजायताम् ॥
लघवोऽवयवाश्चैते निबद्धा न च केनचित् ।
न चैनं कठिनं कर्तुं वर्णावयविनं क्षमाः ॥
कृशश्च गच्छन् स कथं न विक्षिप्येत मारुतैः । 15
दलशो वा न भज्येत वृक्षाद्यभिहतः कथम् ॥
प्रयाणकावधिः कश्च गच्छतोऽस्य तपस्विनः ।
एकश्रोत्रप्रविष्टो वा स श्रूयेतापरैः कथम् ॥
निष्क्रम्य कर्णादेकस्मात् प्रवेशः श्रवणान्तरे ।
यदीष्येत कथं तस्य युगपद् बहुभिः श्रुतिः ॥ 20

---

गच्छन्त्याः प्रतिकूलो हीति । यस्यां दिश्युत्पन्नः शब्दस्तत्र श्रोत्रवृत्तिर्यान्ती तद्दिगागतेन वायुना प्रतिहन्येत ।

यत्र शब्द उत्पन्नस्तत आगच्छन् शब्दानुकूलो वातोऽनुवातः शब्ददेशं पुनर्गच्छन् प्रतिवातः ।

सूक्ष्मैः शब्दपुद्गलैः शब्दपरमाणुभिः । 25

निबद्धा न च केनचिदिति । उदकादिना कृतमीलना इत्यर्थः ।

श्रोतृसंख्यानुसारेण न नानावर्णसंभवः ।
वक्तुस्तुल्यप्रयत्नत्वाच्छोतृभेदे तदत्यये ॥
तदलं परिहासस्य महतो हेतुभूतया ।
नग्नक्षपणकाचार्यप्रज्ञाचातुर्यचर्चया ॥

5 शाक्यप्रायास्त्वाचक्षते अप्राप्त एव शब्दः श्रोत्रशक्त्या गृह्यते इति, तदेतद-तिव्यामूढभाषितम्, अप्राप्त्या तुल्यतायां दूरव्यवहितादीनामश्रवणकारणाभावात्, प्राप्यकारिताख्यकर्मधर्मप्रसङ्गाच्च, न च चार्वाकवदपरीक्षित एवायमर्थ उपेक्षितुं युक्तः ।

## शब्दाभिव्यक्तिसमर्थनम्

10 इति कार्यत्वपक्षेऽमूः श्रुतास्तार्किककल्पनाः ।
अथाभिव्यक्तिपक्षेऽस्य शृणु श्रोत्रियकल्पनाम् ॥

विवक्षापूर्वकप्रयत्नप्रेर्यमाणस्तावद् वेगवत्तया क्रियावत्तया च कोष्ठ्यो बहि-र्निःसरति समीरण इति सुस्पष्टमेतत् । प्रत्यक्षपवनवादिनां पक्षे पवनसमये वक्तृवदननिकटनिहितहस्तस्पर्शेनैव स उपलभ्यते । अनुमेयमारुतपक्षेऽपि तदानी-15 मास्यसमीपसन्निधापिततूलककर्मणा सोऽनुमीयते ।

स गच्छन् सर्वतोदिक्कः स्तिमितानिलनोदनम् ।
करोति कर्णाकाशे च प्रयाति श्रुतियोग्यताम् ॥
स च प्रयत्नतीव्रत्वमन्दत्वेन तदात्मकः ।
शब्दे तथाविधज्ञप्तिहेतुतामवलम्बते ॥
20 स चैष गच्छन्नुद्दामवेगयोगाहितक्रियः ।
शरवद् वेगशान्त्यैव न दूरं गन्तुमर्हति ॥
स मूर्तः प्रसरन् मूर्तैरपरैः प्रतिरुध्यते ।
कुड्यादिभिरितो नास्य श्रुतिर्व्यवहितात्मनः ॥

---

अप्राप्त एवेति । महाभूतक्षोभजः शब्दस्तत्रस्थ एव गृह्यते श्रोत्रेण, श्रोत्रस्य 25 हि तद्गुणादेव तादृशी शक्तिः कल्प्यते; यथा अयस्कान्तमणेर्दूरस्थस्याप्ययसः समा-कर्षिका शक्तिर्दर्शनादेव कल्प्यते तद्वदस्येति भावः ।

स वेगगतियोगित्वादागच्छति यतो यतः ।
श्रोता ततस्ततः शब्दमायान्तमभिमन्यते ॥

स तु शङ्खादिसंयोगप्रेर्यमाणः समीरणः ।
शब्दस्यावर्णरूपस्य भवति व्यक्तिकारणम् ॥

शब्दो यद्यप्यवर्णात्मा श्रोत्रग्राह्यो न विद्यते । 5
तथापि तत्र शब्दत्वं श्रवणेन ग्रहीष्यते ।

तदिह न काचिदस्माभिरधिका कल्पना कृता, मारुतगतेरस्याः सर्वलोकप्रसिद्धत्वात् कर्णाकाशसंस्कारमात्रमदृष्टं कल्पितम्, तदपि कार्यार्थापत्तिगम्यत्वान्नापूर्वमिति ।

अपक्षपातिनः सभ्याः सत्यमुत्पत्त्यपेक्षया । 10
शब्दस्य कल्पनामाहुरभिव्यक्तौ लघीयसीम् ॥

तदेवमभिव्यक्तिपक्षे नियतग्रहणोपपत्तेः प्रत्यभिज्ञाप्रत्ययप्रामाण्यान्नित्यत्वमेवोपगन्तव्यम् ।

या त्वनैकान्तिकत्वोक्तिः धीकर्मप्रत्यभिज्ञया ।
प्रत्यक्षे चोद्यमानासौ दर्शयत्यतिमूढताम् । 15

---

शब्दो यद्यप्यवर्णात्मेति । अयमाशयः । यथा गादयो वर्णा वर्णान्तरविलक्षणेन प्रातिस्विकेन रूपेण श्रोत्रप्रत्यये प्रतिभासन्ते नैवं भेर्यादिषु शब्देषु शब्दत्वमात्रव्यतिरेकेणान्यस्य कस्यचिद् उपलब्धिरिति ।

या त्वनैकान्तिकत्वोक्तिरिति । पञ्चकृत्वो गोशब्द उच्चरित इत्यादि यत् प्रत्यभिज्ञानमुक्तं तन्न नित्यत्वसाधनायानुमानत्वेनापि त्वनित्यत्ववादिनामुना प्रत्यभि- 20 ज्ञारूपेण प्रत्यक्षेण विरुद्धतोद्भाव्यते; अनैकान्तिकत्वादयश्चानुमानदोषा न प्रत्यक्षे उद्भावयितुं युज्यन्त इति भावः ।

अथ मा भूत् प्रकृते दूषणम्, यथा पुनरनुमानं प्रत्यभिज्ञाबाधितत्वाच्छब्दानित्यत्वसाधकं प्रत्यक्षविरुद्धत्वेन न प्रमाणम्, तथा बुद्धिकर्मणोरप्यनुमानमनित्यत्वसा-

तेनानुमानदोषेण प्रत्यक्षं न हि दूष्यते ।
सिद्धान्तान्तरचिन्ता तु भवेद् भृशमसंगता ॥
निर्बाधं प्रत्यभिज्ञानमस्ति चेद् बुद्धिकर्मणोः ।
तयोरप्यस्तु नित्यत्वं नो चेत् का शब्दतुल्यता ॥

5 **शब्दनित्यत्वे सिद्धान्तिमतम्**

तस्मान्नित्यः प्रत्यभिज्ञाप्रभावात् सिद्धः शब्दः पश्यतां तार्किकाणाम् ।
अर्थापत्तिः पूर्वमुक्ता च तस्मिन्नस्थायित्वे युक्तयश्च व्युदस्ताः ॥
अस्ति च वेदे वचनं सिद्धामनुवदति यद् ध्रुवां वाचम् ।
तल्लिङ्गदर्शनादपि नित्यः शब्दोऽभिमन्तव्यः ॥
10 शिक्षाविदस्तु पवनात्मकमेव शब्दमाचक्षते तदसमञ्जसमप्रतीतेः ।
अर्हन्मतप्रथितपुद्गलपर्युदासनीत्या च वाय्ववयवा अपि वारणीयाः ॥

---

धकं प्रत्यभिज्ञाबाधितत्वादप्रमाणं कस्मान्नेष्यते । एवञ्च तयोरपि नित्यत्वं प्राप्नोतीत्याशङ्क्याह सिद्धान्तान्तरचिन्तेति ।

**निर्बाधं प्रत्यभिज्ञानमिति** । अयमाशयः । शब्दे आनुमानिक्यनित्यता, 15 प्रत्यक्षेण च प्रत्यभिज्ञानात्मना नित्यत्वमिति प्रत्यक्षस्य बलीयस्त्वान्निर्बाधा सा प्रत्यभिज्ञा । धीकर्मणोः पुनरानुमानिकी प्रत्यभिज्ञा, अनित्यताप्यामानुनिकी; ततश्च तुल्यबलत्वात् तत्रानुमानयोर्नास्ति निर्बाधता प्रत्यभिज्ञायाः । बुद्धौ कर्मणि चातीन्द्रियद्रव्याधारे अप्रत्यक्षत्वादनुमानात् प्रतीतिः प्रत्यभिज्ञाया आनुमानिकत्वमुक्तम् । अनित्यत्वमप्यानुमानिकमेव, सर्वदा कार्यानुपलब्धिगम्यत्वात् तस्येति ।

20 **पश्यतां तार्किकाणां** पश्यतस्तार्किकान् अनादृत्येत्यर्थः । **अर्थापत्तिः पूर्वमुक्ता च तस्मिन्** 'दर्शनस्य परार्थत्वात्' इति ।

**अनुवदति यद् ध्रुवां वाचं** वाचा विरूपनित्ययेत्यादिकम् ।

**शिक्षाविदस्त्विति** । ते हि मन्यन्ते वाय्ववयवा एव बहिर्निःसृताः शब्दात्मना स्थूलीभवन्ति । काष्ठेभ्य एव निःसृता धूमावयवाः सूक्ष्माः स्थूलधूमावय- 25 विजनकतया सम्पद्यन्त इति ।

येऽपि स्थूलविनाशदर्शनवशाद् ब्रूयुः क्षणध्वंसिनो
भावांस्तेऽपि न शक्नुवन्ति गदितुं शब्दस्य विध्वंसिताम् ।
अन्ते हि क्षयदर्शनात् किल तथा तेषां भ्रमोऽस्मिन् पुनः
शब्देनान्तपरिक्षयाविति कथं कुम्भादिवद् शङ्किता ॥

अत्र ब्रूमहे न खलु भवदभिहितमेतत्प्रमाणद्वयमपि शब्दनित्यतां प्रसाधयितुमर्हति, यावता यदर्थापत्तिर् अवादि दर्शनस्य परार्थत्वादिति सा क्षीणैवार्थप्रतीतेरन्यथाप्युपपन्नत्वात्, तत्र सादृश्यमप्यनभ्युपगतमेव दूषितमित्यस्थाने क्लिष्टा भवन्तः । 5

गत्वादिजातीराश्रित्य सम्बन्धग्रहणादिकः ।
अर्थावगतिपर्यन्तो व्यवहारः प्रसेत्स्यति ॥ 10
ननु गत्वं प्रतिक्षिप्तमेतदेव परीक्ष्यताम् ।
अस्मिन् समाप्यते वादो मर्मस्थानमिदञ्च नः ॥
प्रतिक्षिप्ते च गत्वादौ नार्थसम्प्रत्ययोऽन्यथा ।
प्रत्यभिज्ञानभूमिश्च नान्यास्तीति वयं जिताः ॥
सिद्धे तु गत्वसामान्ये तत एवार्थवेदनम् । 15
तदेव प्रत्यभिज्ञेयमिति यूयं पराजिताः ॥
तेनान्यत् सर्वमुत्सृज्य वादस्थानक-डम्बरम् ।
गत्वादिजातिसिद्ध्यर्थमथातः प्रयतामहे ॥

## गत्वादिसामान्यसाधनोपक्रमः

तत्रेदं विचार्यताम् य एव गकारभेदप्रतिभासः स किं व्यञ्जकभेदकृत उत वर्णभेदविषय इति । व्यञ्जकभेदकृते तस्मिन् एकत्वाद् गकारस्य किंवृत्ति 20

---

येऽपि स्थूलविनाशेति । योऽयं घटादेर्मुद्गरादिभ्यो असभागसन्ततिरूपः स्थूलो विनाशः प्रत्यक्षमुपलभ्यतेऽसौ विनश्वरस्वभावस्यावश्याभ्युपेयोऽविनश्वरस्वभावस्य वा ? अविनश्वरस्वभावस्य तदभ्युपगमे गगनादेरपि विनाशित्वप्रसङ्गात् । विनश्वरस्वभावत्वे चापेक्षणीयाभावात् प्रतिक्षणमेव विनाशकल्पनेति । सर्वदाभिव्यक्तस्योपलम्भादन्ताभावः ॥ 25

प्रतिभासात् । ननु तत्रापि विशेषग्रहणं कल्प्यते अन्यथा विच्छेदप्रतीत्यनुपपत्तेः । यद्येवं वर्णेष्वपि गगनादौ विच्छेदप्रतीतिदर्शनात् कल्प्यतां विशेषग्रहणम् ? नन्वस्त्येव तत्, किन्त्वौपाधिकः, स्फटिके रक्तताप्रत्ययवत् । विषमो दृष्टान्तः, स्फटिकस्य शुद्धस्य दृष्टत्वाल्लाक्षाद्युपाधिनिमित्तको रक्तताप्रत्ययः, वर्णानान्तु नित्यमेवोदात्तादि-
5 विशेषवतां प्रतिभासात् तद्रहितानामनुपलब्धेश्च नैसर्गिक एवायं भेदः । तद्यथा बुद्धीनां घटपटादिविषयविशेषशून्यानामसंवेदनात् प्रतिविषयं नानात्वं तथा वर्णानामपि प्रत्युदात्तादिविशेषं नानात्वम् । ननु बुद्धिरप्येका नित्या च विषयभेदोपाधिनिबन्ध-नस्तद्भेद इति साम्प्रतम्, स्वयमेव बुद्धिजन्म प्रत्यक्षमित्यभिधानात् । अस्माभिश्च बुद्धिनित्यताया उपरिष्टान्निराकरिष्यमाणत्वात्, विषयभेदाच्च तद्भेदाभिधाने
10 विषयस्यापि कुत इदानीं भेदः, बुद्धिभेदादिति चेद् इतरेतराश्रयप्रसङ्गः । तदिमाः स्वत एव भेदवत्यो बुद्धयः, विषयाणामपि स्वत इव भेदो भवति स च बुद्धिभि-र्ज्ञायते इत्यलमर्थान्तरगमनेन । यथा च शुक्लगुणस्य भास्वरधूसरादिभेदवतो

---

ननु बुद्धिरप्येका नित्या चेति साङ्ख्याभिप्रायेणाह अथवा भट्टदृष्ट्या । यथाह भट्टः

15 बुद्धीनामपि चैतन्यस्वाभाव्यात् पुरुषस्य नः ।
नित्यत्वमेकता चेष्टा भेदस्तु विषयाश्रयः ॥
स्वरूपेण यथा वह्निर्नित्यं दहनकर्मकः ।
उपनीतं दहत्यर्थं दाह्यं नान्यन्तु नान्यदा ।
यथा वा दर्पणः स्वच्छो यथा वा स्फटिकोऽमलः ।
20 यद् यन्निधीयते योग्यं तच्छायां प्रतिपद्यते ॥
तथैव नित्यचैतन्याः पुमांसो देहवृत्तयः ।
गृह्णन्ति करणानीतान् रूपादीन् धीरसौ च नः ॥
तेनोपनीतसम्बन्धभङ्गित्वाद् भङ्गिनी मतिः ।
न नित्यं दाहको वह्निर्दाह्यासन्निधितो यथा ॥ इति ।

नानात्वं तथा वर्णस्याप्युदात्तादिभेदवतः । शुक्लगुणोऽप्येक एव आश्रयभेदात्तु तद्भेद इति चेद् अहो रससमारूढो भट्टः ।

कर्मैकं बुद्धिरप्येका जगत्येकः सितो गुणः ।
तैश्च तन्नित्यमित्येताः स्त्रीगृहे कामुकोक्तयः ॥

अपि चैकात्मवादोऽप्येवमेवावतरेत् सुखिदुःख्यादिभेदस्य शरीरभेदेनाप्युपपत्तेः । 5
अद्वैतस्य च नातिदवीयानेष पन्था इत्यलमलीकविकत्थनेन । तस्माद् बुद्ध्यादिवत् सर्वदा सविशेषाणामेव वर्णानां ग्रहणान्नानात्वम् तत्रैतत् स्याद् गगनादावकारोपश्लेषकृत एव भेदप्रत्ययो न स्वरूपभेद इति, तदयुक्तम्, अकारस्यापि भवन्मते भेदाभावात् । अविद्यमाने च तदुपश्लेषे दिगजो दिग्गज इति भेदेन प्रतिभासो भवत्येव । तथा च समदः सम्मदः, पटः पट्टः, आसनम् आसन्नम्, मलः मल्लः, अविकः 10
अविक्कः, पतिः पत्तिः, पत्तनं पतनमित्यादावपि वर्णभेदप्रतीतिः, अर्थप्रतीतिभेदोऽपि च दिगजदिग्गजादौ शब्दान्तरनिमित्तको भवितुमर्हति न द्विरुच्चारणकृतः । ग्रन्थाधिक्यादर्थाधिक्यं नोच्चारणभेदात्, शतकृत्वोऽपि प्रयुक्ते गोशब्दे सास्नादिमदर्थव्यतिरिक्तवाच्यसम्प्रत्ययाभावात् । तथा च दिग्गज इति द्विगकारको निर्देश इत्याचक्षते शब्दविदो न द्विर्गकार उच्चरित इति । 15

ननु गोगुरुर्गिरिगेहादावभेदेऽपि गकारप्रत्ययानुवृत्तेरेक एवायं गकारः, मैवं वोचः, एष एव हि भेदप्रत्ययोऽस्माभिरुपदर्शितः विनापि च अनुपश्लेषं दिग्गजादौ भेदप्रत्ययो वर्णितः । न च वयमभेदप्रत्ययमपह्नुमहे किन्तु भेदप्रत्ययस्याप्यबाधितस्य भावादनन्यथासिद्धत्वाच्च गवादिवत्सामान्यविशेषरूपतां ब्रूमः, व्यञ्जकभेदनिबन्धनत्वन्तु यरलवादावपि वक्तुं शक्यमित्युक्तमेव । 20

---

अहो रससमारूढो भट्ट इति । तथाहि गुणनित्यतां प्रत्यप्यसावाह

एतयैव दिशा वाच्या शुक्लादेरपि नित्यता ।
संसर्गिभेदमात्रेण स्यात्तत्रापि हि भेदधीः ॥
स्वरूपं तु तदेवेति को जातीः कल्पयिष्यति । इत्यादि ॥

अद्वैतस्य च नातिदवीयानिति । उपलभ्यमानभेदनिराकरणद्वारेण । 25

अपि च शाबलेयादिभेदप्रत्ययस्यापि व्यञ्जकभेदनिबन्धनत्वादेक एवासौ स्यात् ।

ननु तत्र को व्यञ्जको यद्भेदकृतः पिण्डभेदप्रत्यय इष्यते । आह च

न पिण्डव्यतिरेकेण व्यञ्जकोऽत्र ध्वनिर्यथा ।
5 पिण्डव्यङ्ग्यैव गोत्वादिजातिर्नित्यं प्रतीयते ॥ इति

तदयुक्तम्, गोत्वजातेर्गत्ववदिदानीं विवादास्पदीभूतत्वात् पिण्डभेदप्रत्ययस्य चक्षुर्व्यापारभेदादप्युपपत्तेः ।

ननु सकृदपि व्यापृतलोचनस्य परस्परविभक्तपिण्डप्रतिभासो भवति, मैवम्, तदानीं गोमात्रप्रतीतिः, एष शाबलेय एष बाहुलेय इति तु विशेषणग्रहणे चक्षु-
10 र्व्यापारभेदोऽपरिहार्यः । यदि चाद्यगोपिण्डभेदे प्रथमाक्षसन्निपातजा बुद्धिः सुभगतां गता गकारभेदे तर्हि किंकृतमस्या दौर्भाग्यम् । तत्रापि प्रथमश्रोत्रव्यापारवेलायामनवगतव्यञ्जकविभागस्यापि गगनगङ्गादौ गकारभेदः प्रतिभासत एवेत्यलं प्रसङ्गेन ।

तदयं वस्तुसंक्षेपः, उपेक्ष्यतां वा सर्वत्र सामान्यविशेषव्यवहारः, इष्यतां वा
15 गोत्वादिवद्गकारभेदवृत्ति गत्वसामान्यम् ।

अत्वमपि गत्ववदप्रत्याख्येयम्, इतरेतरविलक्षणानामकाराणां ह्रस्वदीर्घप्लुतादिभेदेन प्रतिभासात्, यः पुनर(ा?)कारेऽप्यकारप्रत्यभिज्ञानं ब्रूयात् तस्यैकारोकारप्रतीतिष्वप्यकारस्यैव ग्रहणप्रसक्तिरच्त्वाविशेषात् । अथ तदविशेषेऽपि अवर्णादिवर्णस्य भेद इष्यते स तर्ह्याकारस्य न निह्नोतव्यः । एवञ्च सत्यरण्यार-

---

गत्ववदिदानीं विवादास्पदीभूतत्वादिति । यथा भेदाधिष्ठानं गत्व गव्य-
20 क्तिभेदस्यौपाधिकत्वेन स्वतो गवर्णस्य भेदाभावान्निराक्रियते तद्वत् शाबलेयादि भेदप्रतिभासस्याप्यौपाधिकत्वेन पिण्डभेदस्य स्वतोऽसम्भवाद् भेदाधिष्ठानगोत्वाभावः । चक्षुर्व्यापारभेदादप्युपपत्तेरिति । यथैकोऽपि वर्णो ध्वनिभेदाद् भिन्नः प्रतिभासते तथैकोऽपि गौः पुनः पुनश्चक्षुषा दृश्यमानः शाबलेयादिभेदेन प्रतिभासत इत्यर्थः ।

25 अत्वाभ्युपगमे अगमनशब्दवदागमनेऽप्यकारप्रत्यभिज्ञाने तुल्यार्थताशङ्कानिवारणायाह यः पुनर(ा ?)कारेऽपीति ।

रण्यशब्दाभ्यां भिन्नार्थप्रतीतिरुपपत्स्यते। उदात्तानुदात्तस्वरितसंवृतविवृतादिभेदोऽपि शब्दविदां प्रत्यक्ष एव गीतज्ञानामिव स्वरग्रामभाषाविभागः। तस्मादष्टादशभेदमकारमाक्षते, अत्वञ्च तत्सामान्यमवर्णकुलशब्देन व्यवहरन्तीति प्रतिपद्यन्ते लोका न मरुद्भ्यः। अथ मरुतामपि तथा व्युत्पत्तेरर्थप्रतीतिहेतुत्वम्? तर्हि व्युत्पत्तिरेव प्रमाणं स्याद् न शब्दः, व्युत्पत्तेरव्यभिचारात् शब्दस्य च व्यभिचारादित्यास्तामेतत्। 5

तस्माद् गत्वादिसामान्यैरर्थसम्प्रत्ययात्मनः।
कार्यस्य परिनिष्पत्तेर्न वर्णव्यक्तिनित्यता॥

## प्रभाकरमते शब्दत्वसामान्याक्षेपः

अपर आह, तिष्ठतु तावद् दूरत एव गत्वाद्यपरसामान्यं महासामान्यमपि शब्दत्वं वर्णेषु नोपपद्यते। 10

व्यक्त्यन्तरानुसन्धानं यत्रैकव्यक्तिदर्शने।
तत्रैकरूपसामान्यमिष्यते तत्कृतं हि तत्॥
गकारश्रुतिवेलायां न वकारावमर्शनम्।
बाहुलेयपरामर्शः शाबलेयग्रहे यथा॥ 15
शब्दः शब्दोऽयमित्येवं प्रतीतिस्त्वप्रयोजिका।
एषा हि श्रोत्रगम्यत्वमुपाधिमनुरुध्यते॥

## तन्मतनिरासः

तदेतन्निरनुसन्धानस्याभिधानम्, अनुसन्धानप्रत्ययस्य सामान्यसिद्धावप्रयो-

---

मरुतामपि तथा व्युत्पत्तेरिति। यथा व्यञ्जकवशाद् अकार एव दीर्घतया प्रतिभाति तथा अगमन-आगमनादौ भेदप्रतीतिदर्शनात् तथैव व्युत्पत्तिः। 20

अपर आहेति प्रभाकरः।

व्यक्त्यन्तरानुसन्धानमिति। व्यक्त्यन्तरे दृष्टे पूर्वानुभूतस्य गव्यक्त्यन्तरस्य यत्रानुसन्धानं परामर्शः। तत्कृतं हि तत्; यत् कस्याश्चिद् व्यक्तेर्व्यक्त्यन्तरेऽनुसन्धानं न सर्वासां तत् सामान्यकृतमित्यर्थः।

जकत्वात्, अनुसन्धानं हि सारूप्याद् विजातीयेष्वपि भवति गवयग्रहणसमये गोपिण्डानुसन्धानवत्, तस्मादबाधितैकरूपप्रत्ययप्रतिष्ठ एव सामान्यव्यवहारः।

समानबुद्धिग्राह्योऽपि सामान्येऽवस्थिते क्वचित्।
भवत्यन्यानुसन्धानं क्वचिद्वा न भवत्यपि ।।
5 तदस्ति खण्डमुण्डादौ पिण्डसारूप्यकारितम्।
गकारादिषु वर्णेषु तदभावात्तु नास्ति तत् ।।

न तु सामान्याभावात्। न च सारूप्यमेव सामान्यं साङ्ख्यवदभिधातुं युक्तं विजातीयेष्वपि गोगवयादिषु तस्य दृष्टत्वात्। यदि च शब्दः शब्द इत्यनुवृत्तबुद्धेः श्रोत्रगम्यत्वोपाधिकृतत्वमुच्यते तर्हि गवादावप्येकबुद्धेर्वाहदोहाद्येकार्थक्रियाका-
10 रित्वनिबन्धनत्वाद् गोत्वादिजातिनिह्नवो बौद्धवन्मन्तव्यः। न चैतदेवम्, तद् गोत्ववच्छब्दत्वमपि न प्रत्याख्येयम्।

एतेन ब्राह्मणत्वादिसामान्यमपि समर्थितं वेदितव्यम्, उपदेशसहायप्रत्यक्ष-गम्यत्वात्। न चोपदेशापेक्षणादप्रत्यक्षत्वं तस्य भवितुमर्हति गोत्वादिप्रत्ययस्यापि सम्बन्धग्रहणकाले तदपेक्षत्वदर्शनात्। उक्तञ्च न हि यद् गिरिश्शृङ्गमारुह्य गृह्यते
15 तदप्रत्यक्षमिति। न चौपाधिकः पैठीनसिपैप्पलादिप्रभृतिषु ब्राह्मणप्रत्ययः, उपाधेर-ग्रहणात्, औपाधिकत्वस्य गोत्वादावपि वक्तुं शक्यत्वात्।

अपि चोपदेशनिरपेक्षमपि चक्षुः क्षत्रियादिविलक्षणां सौम्याकृतिं ब्राह्मण-जातिमवगच्छति इत्येके। तदलमनया कथया।

---

गवयग्रहणसमये गोपिण्डानुसन्धानवदिति। अनेनानुसन्धानस्य परामर्शकत्वात् 
20 स्मरणस्वभावाभेदात् सादृश्यदर्शनमेव हेतुत्वेन कल्प्यते न सामान्यानुभव इति।

पिण्डसारूप्यकारितं पिण्डसादृश्यजनितमित्यर्थः।

एतेन ब्राह्मणत्वादीति। एतेन श्रवणग्राह्यत्वकृतशब्दः 'शब्द' इत्यभेदप्रत्यय-निराकरणेन। 'ब्राह्मणो ब्राह्मणः' इत्यादिरप्यभेदप्रत्ययो विशिष्टानुष्ठानाद्युपाधिकृत इति हि स आह। गिरिश्शृङ्गमारुह्येति। सापेक्षतया सङ्क्लेशतया तदपेक्षया
25 दृष्टान्तः।

## शब्दनित्यत्वपक्षपरिहारः

प्रकृतमुच्यते । गत्वादिभिर्जातिभिरेवार्थसम्प्रत्ययोपपत्तेर्यदुक्तम् 'नित्यस्तु दर्शनस्य परार्थत्वात्' इति एतदयुक्तम् । एतेन 'सर्वत्र यौगपद्यात्' इत्येतदपि प्रत्युक्तम्, सम्बन्धनियमस्य गत्वादिभ्य एव सिद्धेः ।

यदपि संख्याभावात् कृत्वसुच् प्रयोगदर्शनमुदग्राहि तदपि व्यभिचारि । 5

कृतं कान्तस्य तन्वङ्ग्या त्रिरपाङ्गविलोकनम् ।
चतुरालिङ्गनं गाढमष्टकृत्वश्च चुम्बनम् ॥ इति ।

तद्भेदेऽपि दर्शनात् । अथ तत्र स्त्रीपुंसयोरभेदे चुम्बनादिक्रियामात्रभेद एवेत्युच्यते तथाप्यपूर्वेषु ब्राह्मणेषु भुक्तवत्सु पञ्चकृत्वो ब्राह्मणा भुक्तवन्त इति व्यवहारो दृश्यते । 10

कविना सदनुप्रासे निबद्धेऽक्षरडम्बरे ।
गकारा बहवो दृष्टा इति व्यवहरन्ति हि ॥
यदपि प्रत्यभिज्ञानं तद्द्वारकमुदाहृतम् ।
तस्यापि सिद्धे प्रामाण्ये जात्यालम्बनता भवेत् ॥

---

एतेन 'सर्वत्र यौगपद्यादि'ति । सर्वत्र सर्वगवीषु गोशब्दादुच्चारिताद् युगपत् 15 प्रत्ययदर्शनादाकृतिवचनत्वं गवादेः शब्दस्यावगम्यते, व्यक्तिवचनत्वे हि नियतैकव्यक्तिप्रतिपत्तिः स्यात् । तत्र च द्रव्यत्व-सत्ताद्याकृतीनां बह्वीनामपि सम्भवान्नियताकृतिवचनत्वमन्वयव्यतिरेकाभ्यामसकृत्प्रयोगान्निश्चीयते. असकृत्प्रयोगश्च नित्यत्वं विना न घटत इति 'सर्वत्र यौगपद्यात्' इति सूत्रार्थः ।

एतदपि गत्वादिजात्युपलक्षितानां भिन्नानामपि प्रयोगे सिद्ध्यत्यनित्यत्वपक्षेऽ- 20 पीत्यनेनाभिप्रायेणोक्तम् पञ्चकृत्वो ब्राह्मणा भुक्तवन्त इति । अत्र भुजिक्रियावद्भोक्तॄणामप्यन्यत्वम् ।

यदपि 'सङ्ख्याभावात्' इति सूत्रम् शब्दे सङ्ख्याया अभावान्नित्यत्वमित्यस्यार्थः । सङ्ख्याया अभावाच्च यथा नित्यत्वं तथाह भाष्यकारः "अष्टकृत्वो गोशब्द उच्चरित इति हि वदन्ति नाष्टौ गोशब्दा इति । किमतो यद्येवम् ? अनेन वचनेनावगम्यते प्रत्य- 25 भिजानन्तीति" इदमेव चेदृशं भाष्यं चेतसि निधायाह यदपि प्रत्यभिज्ञानं तद्द्वारकमुदाहृतमिति । तद्द्वारकं 'कृत्वसु'प्रयोगद्वारकमित्यर्थः ।

नृत्ताभिनयचेष्टादिप्रत्यभिज्ञानतो वयम् ।
विशेषं प्रत्यभिज्ञाने न पश्यामो मनागपि ॥

शब्दस्य प्रत्यभिज्ञानवेलायामेव दृश्यते ।
शब्दरूपस्य विध्वंस इति तन्नित्यता कुतः ॥

5 **प्रत्यभिज्ञयापि न शब्दनित्यत्वसिद्धिः**

यद्यपि च क्षणभङ्गभङ्गे प्रत्यभिज्ञाप्रामाण्यमस्माभिरपि समर्थयिष्यते तथापि स्तम्भादिप्रत्यभिज्ञायाः शब्दप्रत्यभिज्ञाया एष एव विशेषो यदत्र ध्वस्तः शब्द इति तदैव प्रत्ययो जायते अत एव तिरोहितेऽपि भावादियमप्रमाणं प्रत्यभिज्ञेत्याहुः ।

10 यद्यपि ध्रियतेऽस्माकं शब्दो द्वित्रानपि क्षणान् ।
प्रत्यभिज्ञा तु कालेन तावता नावकल्पते ॥

तथा हि शब्द उत्पद्यते तावत् ततः स्वविषयं ज्ञानं जनयति, अजनकस्य प्रतिभासायोगात् । ततस्तेन ज्ञानेन शब्दो गृह्यते, ततः संस्कारबोधः, ततः पूर्वज्ञात-शब्दस्मरणम्, ततस्तत्सचिवं श्रोत्रं मनो वा शब्दप्रत्यभिज्ञानं जनयिष्यति तथा 15 शब्दो ग्रहीष्यत इति यत् कुतोऽस्य दीर्घमायुः । प्रत्यभिज्ञाप्रामाण्यादेव तावदायुस्तस्य कल्प्यते इति चेत्, सत्यं कल्प्यते यदि विनाशप्रत्ययस्तदैव न स्यात् । अपि च गोशब्दोऽयमश्वशब्दोऽयमिति तदभिधानविशेषोल्लेखात् ।

नानानुस्मरणं तस्य तदैवावश्यमापतेत् ।
विज्ञानयौगपद्याच्च कालो दीर्घतरो भवेत् ॥

20 यदप्युदितमुद्दाममेघश्यामासु रात्रिषु ।
साम्यं सौदामिनीधामजन्यया प्रत्यभिज्ञया ॥

तदसत् कालदैर्घ्येण तदवस्थितिसम्भवात् ।
विद्युद्दृष्टे च वृक्षादौ नाशसंवित्त्यसम्भवात् ॥

प्रत्यभिज्ञा नाम स्मर्यमाणानुभूयमानसामानाधिकरण्यग्राहिणी संस्कार-
25 सचिवेन्द्रियजन्या प्रतीतिरिति केचित् ।

अन्ये मन्यन्ते स्मर्यमाणपूर्वज्ञानविशेषितार्थग्राहित्वात् प्रत्यभिज्ञायास्तद्विशेषणस्य चार्थस्य बाह्येन्द्रियग्राह्यत्वानुपपत्तेः स्तम्भादावपि मानसी प्रत्यभिज्ञेति ।

निर्बन्धस्त्विह नास्माकं सा यथास्तु तथास्तु वा ।
शब्दे विनाशज्ञानात्त न सा नित्यत्वसाधिका ॥
बाध्यबाधकभावे तु नियमो ननु किंकृतः । 5
शब्दस्य प्रत्यभिज्ञानविनाशप्रतिभासयोः ॥
उच्यते प्रत्यभिज्ञानमन्यथाप्युपपद्यते ।
गत्वादिजातिविषयं यद्वा सादृश्यहेतुकम् ॥
न त्वभिव्यञ्जकध्वंसान्नाशधीरपि सेत्स्यति ।
तदसावपि बाध्यास्तु यद्वा भवतु संशयः ॥ 10
मैवं विनाशिताबुद्धिर्भेदबुद्ध्युपबृंहिता ।
सा चेयञ्चान्यथासिद्ध इति वक्तुमसाम्प्रतम् ॥
प्रत्यभिज्ञा च सापेक्षा निरपेक्षा त्वभावधीः ।
तेनैवमादौ विषये प्रत्यभिज्ञैव बाध्यते ॥

शब्दाभावस्य ग्रहणात् प्रत्यभिज्ञायाश्च पूर्वानुसन्धानादिसव्यपेक्षत्वात् । अपि 15 च प्रत्यभिज्ञा व्यभिचरति कर्मादिषु गृह्यते । तेनास्यां शब्देऽप्यभावप्रत्ययोपहतवपुषि कः समाश्वासः । न चेदं प्रत्यक्षेऽप्यनैकान्तिकत्वोद्भावनम्, अपि तु विनाशप्रत्ययप्रतिहतप्रभावा प्रत्यभिज्ञा नित्यत्वं कर्मादिष्विव शब्देऽपि न साधयितुं प्रभवतीति दृष्टान्तस्य कोऽवसरः ? सत्यम्, ग्राहिकास्तु भवादृशाः स्वयमनवबुध्यमाना एवं बुद्ध्यन्ते । 20

यत्तु प्रवृद्धरभसतया बुद्धिकर्मादावपि नित्यत्वसमर्थनं तदत्यन्तमलौकिकमित्युक्तम् ।

---

नियमो ननु किंकृत इति । विनाशधीरेव बाधिका न प्रत्यभिज्ञा इत्येवंरूपः ।

मैवं विनाशिताबुद्धिरिति । प्रत्युच्चारणं हि शब्दा भिन्ना उपलभ्यन्ते, सति चैक्ये भेदबुद्धिर्नानुगुणेति भेदबुद्धिर्विनाशावगमस्योपोद्बलिका । सा चेयमिति यथा प्रत्य- 25 भिज्ञा सादृश्यादिनाप्युपपद्यत इत्यन्यथासिद्धा नैवं विनाशधीरित्यर्थः ।

किं नाम शब्दनित्यत्वसमर्थनतृषातुरः ।
जङ्गमं स्थावरञ्चैव सकलं पातुमिच्छसि ॥

तस्मादलमतिरभसवृत्ताभिराभिर्बुद्धिकर्मादिनित्यत्वसमर्थनकथाभिः ।

## शब्दानामभिव्यक्तिपक्षनिरसनम्

5 यत्पुनरभिव्यक्तिपक्षे शब्दस्य ग्रहणे नियमाभावमाशङ्क्य श्रोत्रसंस्कारेण विषयसंस्कारेण उभयसंस्कारेण वा नियतं ग्रहणमुपवर्णितं तद्वचनामात्रम्, समानदेशानां समानेन्द्रियग्राह्याणां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वादर्शनात्, ये पुनरत्र गन्धा उदाहृतास्ते समानेन्द्रियग्राह्या भवन्ति न समानदेशाः ।

एकभूम्याश्रितत्वेन तुल्यदेशत्वकल्पने ।
10 भवेत् समानदेशत्वं हिमवद्विन्ध्ययोरपि ॥

एकत्वेऽपि भुवो भान्ति पदार्थाः पार्थिवाः पृथक् ।
व्यज्यन्ते तदधिष्ठाना गन्धास्तैस्तैर्निबन्धनैः ॥

भवन्त्वनाश्रिताः शब्दा यदि वाकाशसंश्रिताः ।
सर्वथा भिन्नदेशत्वमेषां वक्तुं न शक्यते ॥

15 ननु यथैकत्वेऽपि नभसः तद्भागकल्पनया प्रतिपुरुषं श्रोत्रेन्द्रियभेद एवं तद्भागकल्पनयैव शब्दानामपि असमानदेशत्वान्नियतव्यञ्जकव्यङ्ग्यता भविष्यति । नैवमुपपद्यते यत्रैव वक्तृमुखाकाशदेशे श्रोतृश्रोत्राकाशदेशे वा गोशब्द उपलब्धः तत्रैवाश्वशब्द इदानीमुपलभ्यते न पुनरतिमुक्तकुसुमे य उपलब्धो गन्धः स बन्धूके मधूके वा कदाचिदुपलभ्यत इति ।

20 तस्मात् समानदेशत्वान्न व्यक्तौ नियमो भवेत् ।
उत्पत्तौ तु व्यवस्थायां तद्भेद उपपद्यते ॥

नादैः संस्क्रियतां शब्दः श्रोत्रं वा द्वयमेव वा ।
सर्वथा नियमो नास्ति व्यञ्जकेष्विति निश्चयः ॥

---

ये पुनरत्र गन्धा उदाहृता इति । यथा दग्धभुवो जलसम्पर्काद् गन्धाभिव्यक्ति-
25 स्तैलस्य चातपयोगादिति ।

व्यवस्था व्यञ्जकानां चेदुच्यतेऽदृष्टकारिता ।
उत्पत्तौ दृश्यमानायां दृष्टमप्यविरोधकम् ।।

न च स्तिमितमारुतापनयनव्यतिरिक्तः कश्चन श्रोत्रसंस्कारो विद्यते । तत्र चातिप्रसङ्ग उक्त एव अतिरिक्तसंस्कारकल्पनायान्त्वदृष्टकल्पना, स्थिरे च शब्द-संस्कारग्रहणमिति पुनरनभिव्यक्तस्यापि गोशब्दस्य श्रवणं स्यात्, तद्ग्रहणहेतोः संस्कारस्य स्थिरत्वात्, तत्क्षणिकत्वे तु शब्दक्षणिकतैव साध्वी प्रतीयमानत्वात् । 5

यत्तु भर्तृमित्रस्तमेव संस्कारं श्रोत्रेन्द्रियमभ्युपैति तदिदमपूर्वं किमपि पाण्डित्यम् । इन्द्रियस्य हि संस्कार्यस्य कल्पनमनुपपन्नम् । अनश्वरत्वे तु शश्वदेव शब्दकोलाहलप्रसङ्ग इति यत्किञ्चिदेतत्, भट्टेनैव सोपहासमेष दूषितः इति किमत्र विमर्दन । 10

यदपि भट्ट आह

यदि त्ववश्यं वक्तव्यस्तार्किकोक्तिविपर्ययः ।
ततो वेदानुसारेण कार्या दिक्श्रोत्रतामतिः ।। इति

तदप्यसाम्प्रतम्

दिशां कार्यान्तराक्षेपादागमान्यपरत्वतः । 15
आहोपुरुषिकामात्रं दिग्द्रव्यश्रोत्रकल्पनम् ।।

---

भट्टेन सोपहासमेष दूषित इति । यथाह भट्टः
अनुमेव च संस्कारं शब्दग्रहणकारणम् ।।
केचित्तु पण्डितम्मन्याः श्रोत्रमित्येव मन्वते ।
संज्ञासञ्चारणादेष बहुमानः स्वचेतसि ।। 20
मुधैषां बहुमानोऽयं वस्त्वनुत्पाद्य किञ्चन ।
संस्कारव्यतिरिक्ते च सर्वलोकस्य वस्तुनि ।।
श्रोत्रशब्दः प्रसिद्धोऽयं स्वाच्छान्द्येनापनीयते ।

ततो वेदानुसारेणेति । 'दिशः श्रोत्रम्' इति वेदानुसारेण ।

दिशः कार्यान्तराक्षेपादिति । कार्यान्तरेण पूर्वापरादिप्रत्ययेन दिगाक्षिप्यते 25 सत्तया व्यवस्थाप्यते । आकाशस्य तु शब्दव्यतिरेकेणान्यत् कार्यान्तरं नास्तीति ।

इन्द्रियाणां भौतिकत्वस्य साधयिष्यमाणत्वाद् दिशश्चामूर्तत्वान्नेन्द्रियप्रकृतित्वम्, व्यापकत्वाविशेषे वा कालात्मनोरपि तथाभावप्रसङ्गः । तयोरन्यत्र व्यापारकत्वान्नेन्द्रियप्रकृतित्वमिति चेद्, दिग्द्रव्येऽपि तुल्यमेतत्, आगमस्य चान्यपरत्वम् यथा हि सूर्यं चक्षुर्गमयताद् दिशः श्रोत्रमिति पठ्यते एवमन्तरिक्षमसूनिति च पठ्यत एव, न चासवोऽन्तरिक्षप्रकृतिकाः पवनात्मकत्वात् । तस्मात् कृतं दिशा । आकाशदेश एव कर्णशष्कुल्यवच्छिन्नः शब्दनिमित्तोपभोगप्रापकधर्माधर्मोपनिबद्धः श्रोत्रमित्युक्तम् ।

ननु धर्माधर्मकृतश्रोत्रनियमवदभिव्यक्तिनियमोऽपि शब्दस्य तत्कृत एव भविष्यति, किमिति तदनियमो नित्यत्वपक्षे चोद्यते इति, नैतद्युक्तम् । चक्षुरादीन्द्रियाणां वैकल्यमदृष्टनिबन्धनमन्धकारप्रभृतिषु दृश्यते, न पुनः पदार्थस्थितिरदृष्टवशाद् विपरिवर्त्तते । व्यञ्जकधर्मातिक्रमे हि हिममपि शैत्यं स्वधर्ममतिक्रामेत् । व्यञ्जकेषु नियमो न दृष्ट इत्युक्तम्, दृष्टे च वर्णभेदे नियतोपलब्धिहेतौ सम्भवति सति किमयमदृष्टमस्तके भार आरोप्यते ? कथञ्चाभिव्यक्तिपक्षे तीव्रमन्दविभागः, तीव्रतादयो हि वर्णधर्मा वा स्युः, ध्वनिधर्मा वा । वर्णधर्मत्वे तीव्रगकारादन्यत्वं मन्दस्येत्यस्मन्मतानुप्रवेशः ।

ध्वनिधर्मत्वपक्षे तु श्रोत्रेण ग्रहणं कथम् ।<br>न हि वायुगतो वेगः श्रवणेनोपलभ्यते ।।

यत्तु व्यक्तिधर्माः कृशत्वस्थूलत्वादयो जातावुपलभ्यन्ते इति दर्शितं तत् काममुपपद्येतापि जातेर्व्यक्तेस्तद्धर्माणाञ्च समानेन्द्रियग्राह्यत्वात् ।

इह तु स्पर्शनग्राह्यः पवनोऽतीन्द्रियोऽथ वा ।<br>तद्धर्माः श्रावणे शब्दे गृह्यन्त इति विस्मयः ।।

---

आगमस्य चान्यपरत्वम् । अनेन हि 'सूर्यं ते चक्षुर्गमयताद् दिशः श्रोत्रम्' इत्यादिना पशुसंज्ञपनकाले शमिता प्रोत्साह्यते 'ते तव पशोः सम्बन्धि चक्षुरयं शमिता सूर्यं गमयतात्' इति; न च भवता शमित्रा अस्य पशोरपकारः क्रियते प्रत्युतोपकार एव, एतच्छरीरावयवानां देवमूर्तिप्राप्तिहेतुत्वाद् भवतः । पशुनिहन्ता अध्वर्युकर्मकरः शमितेत्युच्यते ।

यत्तु बुद्धिरेव तीव्रमन्दवतीति तदतीव सुभाषितम्, असति विषयभेदे बुद्धिभेदानुपपत्तेः ।

किञ्च नित्यपरोक्षा ते बुद्धिरेवञ्च नादवत् ।
तदग्रहान्न तीव्रादितद्धर्मग्रहसम्भवः ॥
अहो तीव्रादयस्तीव्रे प्रपाते पतिता अमी ।
यो गृह्यते न तद्धर्मा यद्धर्माः स न गृह्यते ॥
यश्चाभिभववृत्तान्तस्त्वन्मते मरुतामसौ ।
अनिले चाभिभूतेऽपि शब्दो न श्रूयते कथम् ॥
दीपेऽभिभूते रविणा न हि रूपं न गृह्यते ।
नियतव्यञ्जकत्वन्तु प्रतिक्षिप्तमदर्शनात् ॥
यत्तु शङ्खादिशब्दानां श्रोत्रग्राह्यत्वसिद्धये ।
शब्दत्वं तत्र तद्ग्राह्यमित्यवादि तदप्यसत् ॥
सत्यं वदत दृष्टं वा श्रुतं वा क्वचिदीदृशम् ।
आश्रयस्य परोक्षत्वे तत्सामान्योपलम्भनम् ॥
शब्दो न तेऽस्त्यवर्णात्मा न शब्दो वर्णसम्भवः ।
न नादवृत्ति शब्दत्वमिति तद्ग्रहणं कथम् ॥

## अभिव्यङ्ग्यापेक्षया कार्यपक्ष एव शब्दस्य लघुतरः

यत् पुनरिदं सन्धारितं व्यङ्ग्यकार्यपक्षयोः क्व शब्दग्रहणे गुर्वी कल्पना भवति क्व वा लघ्वीति, तदपि मौलप्रमाणविचारसापेक्षत्वादप्रयोजकम् ।

यदि मौलप्रमाणेन साधिता नित्यशब्दता ।
त्वदुक्ता कल्पना साध्वी मदुक्ता तु विपर्यये ॥

कोष्ठ्येन च बहिः प्रसरता समीरणेन सर्वतः स्मिमितमारुतापसरणं क्रियते इत्येतदेव तावदलौकिकं कल्पितम्, 'अग्नेरूर्ध्वज्वलनम्, वायोस्तिर्यग्गमनम्; अणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितानि' इति मरुतां तिर्यग्गमनस्वभावत्वादूर्ध्वमधश्च शब्दश्रवणं न भवेत् ।

यावन्न वेगिनान्येन प्रेरितो मातरिश्वना ।
तावन्नैसर्गिको वायुर्न तिर्यग्गतिमुज्झति ॥

अधोमुखप्रयुक्तोऽपि शब्द ऊर्ध्वं प्रतीयते ।
उत्तानवदनोक्तोऽपि नाधो न श्रूयते च सः ॥
कदम्बगोलकाकारशब्दारम्भो हि सम्भवेत् ।
न पुनर्दृश्यते लोके तादृशी मरुतां गतिः ॥
5 आकण्ठानद्धनीरन्ध्रचर्मावृतमुखोदितः ।
शब्दो यः श्रूयते तत्र न कोष्ठचानिलसर्पणम् ॥

कुडचादिप्रतिबन्धेन वायोरप्रसरणं भवद्भिरपि कथितमेव, निर्विवरचर्मपुटोपरुद्धोऽप्यसौ न प्रसरेत् ।

अपि च सर्वतोनिरुद्धनवद्वारस्यापि जठरे गुरगुराशब्दो मन्दाग्नेः श्रूयते, 10 अत्र कुतो व्यञ्जकानां कोष्ठचपवनानां निस्सृतिः ? रोमकूपनिःसृतानामपि सूक्ष्मतया स्तिमितबाह्यवाय्वपसरणसामर्थ्याभावः । किञ्च मनागपि बहिर्वायौ वाति न शब्दश्रवणं स्यादिति । दुर्बलोऽपि बाह्यः पवनः प्रबलादपि कोष्ठचवायोर्बलीयान् भवतीति कथं तेनापसार्येत ? अन्ये एव सूक्ष्मा वायवः शब्दावरणकारिणो, न पुनरेते परिदृश्यमानाः श्यामाः (?) श्यामाकलतालास्योपदेशिनो मातरिश्वान इति चेन्न, 15 विशेषे प्रमाणाभावात् । यश्च सूक्ष्मा अपि वायवः तिरोदधति तं सुतरां बलीयांसोऽपि विवृणुयुरिति यत्किञ्चिदेतत् । तस्मात् सजातीयशब्दसन्तानारम्भपक्ष एव युक्त्यनुगुणः । तथा हि सजातीयगुणारम्भिणो गुणास्तावद् दृश्यन्त एव रूपादयः । अमूर्त्तापि च बुद्धिर्बुध्यन्तरमारभमाणा दृश्यते, प्रदेशान्तरेऽपि सैव कार्यमारभते, पथि गच्छतो देवदत्तादेरेकस्माद् आत्मप्रदेशात् प्रदेशान्तरे बुद्ध्युत्पाददर्शनात् । कार्यारम्भ- 20 विरतिरपि भवति, अदृष्टाधीनसंसर्गाणां सहकारिणामनवस्थानात् ।

तीव्रेणापि शनैरेवमतीव्रारम्भसम्भवः ।
सीदत्सचिवसामर्थ्यसापेक्षक्षीणवृत्तिना ॥

---

प्रदेशान्तरे च सैव कार्यमारभत इति । गच्छतो धूमादिदर्शनादविनाभावसम्बन्धग्रहणद्वारेण यत्र धूमदर्शनं जातं ततो देशान्निःसृतस्य देशान्तरे वह्न्यादिबुद्धि- 25 दर्शनादिति ।

सीदत्सचिवेति । सचिवाः सहकारिणः, सीददर्शनवद् यत् सामर्थ्यं तत् सापेक्षतया मन्दा वृत्तिः स्वसामर्थ्यमिति यस्य ।

वीचीसन्तानदृष्टान्तः किञ्चित् साम्यादुदाहृतः ।
न तु वेगादिसामर्थ्यं शब्दानामस्त्यपामिव ॥

यत्तु कुड्यादिव्यवधाने किमिति विरमति शब्दसन्तानारम्भ इति, नैष दोषः, निरावरणस्य हि व्योम्नः शब्दारम्भे समवायिकारणत्वं तथादर्शनात् कल्प्यते नाकाशमात्रस्येति । 5

## शब्दे गुणत्वसिद्धिः

*किमेर्तांह शब्दस्य गुणत्वे प्रमाणम्, परिशेषानुमानमिति ब्रूमः। प्रसक्तयोर्द्रव्यकर्मणोः प्रतिषेधे सामान्यादावप्रसङ्गाच्च गुण एवावशिष्यते शब्दः। कथं पुनर्न द्रव्यं शब्दः एकद्रव्यत्वात् ? अद्रव्यं वा भवति द्रव्यम्, आकाशपरमाण्वादि, अनेकद्रव्यं वा द्व्यणुकादि कार्यद्रव्यम्। एकद्रव्यं तु शब्द एकाकाशाश्रितत्वात्, 10 तस्मान्न द्रव्यम् । नापि कर्म शब्दः शब्दान्तरजनकत्वात् । कर्मणो हि समानजात्यारम्भकत्वं नास्ति । सत्ताशब्दत्वादिसामान्यसम्बन्धाच्च सामान्यादित्रयप्रसङ्गोऽस्य नास्तीति पारिशेष्याद् गुण एव शब्दः ।*

यदपि गुणत्वमसिद्धं शब्दस्येति, तत्र केचिद् आश्रितत्वाद् गुणत्वमाचक्षते । तदयुक्तम् 15

आश्रितत्वं गुणत्वे हि न प्रयोजकमिष्यते ।
षण्णामपि पदार्थानामाश्रितत्वस्य सम्भवात् ॥
दिक्कालपरमाण्वादिनित्यद्रव्यातिरेकिणः ।
आश्रिताःषडपीष्यन्ते पदार्थाः कणभोजिना ॥

---

अद्रव्यं वा भवति द्रव्यमिति । न विद्यते जनकं द्रव्यं यस्य । अनेकद्रव्यं जनकं यस्येति च विग्रहोनेकद्रव्यमित्यत्र । 20

आश्रिताः षडपीष्यन्ते पदार्थाः कणभोजिनेति । तदुक्तम्—"षण्णामाश्रितत्वमन्यत्र नित्यद्रव्येभ्यः" इति ।

---

*. टीकाकारधृतग्रन्थप्रतीकक्रममनुसृत्यैवास्माभिरत्र ग्रन्थक्रमो निर्दिष्ट इति मन्तव्यम् ।

न च व्योमाश्रितत्वमपि शब्दस्य प्रत्यक्षम्, अप्रत्यक्षे नभसि तदाश्रितत्व-स्याप्यप्रत्यक्षत्वात् ।

कथमाधारपारोक्ष्ये शब्दप्रत्यक्षतेति चेत् ।
यथैवात्मपरोक्षत्वे बुद्ध्यादेरुपलम्भनम् ॥

5 एतदेवासिद्धमिति चेद् अलं वादान्तरगमनेन, उपरिष्टान्निर्णेष्यमाणत्वात् ।

ननु गुणत्वसिद्धौ सत्यामाकाशाश्रितत्वं शब्दस्य भविष्यति, गुणस्य द्रव्यानाश्रितस्यादर्शनात्, पृथिव्यादीनाञ्च शब्दाश्रयत्वानुपपत्तेः । ततश्च गुणत्वे सत्येकद्रव्यत्वम्, एकद्रव्यत्वे सति गुणत्वमितीतरेतराश्रयत्वम् । तथा च समानजातीयारम्भकत्वमपि गुणत्वसिद्धिमूलमेव, गुणत्वे सति शब्दस्याकाशाश्रितत्वात् तदात्मकेन 10 श्रोत्रेण ग्रहणम्, तच्च देशान्तरगतसंयोगविभागप्रभवस्य शब्दस्य सन्तानमन्तरेण श्रोत्रदेशप्राप्त्यभावान्न सिद्ध्यतीति गुणत्वसिद्धिमूला सन्तानकल्पना । सन्तानकल्पनायाञ्च समानजात्यारम्भकत्वात् कर्मव्यवच्छेदे सति गुणत्वसिद्धिरितीतरेतराश्रयत्वमेव।

उच्यते । नोभयत्राप्येष दोषः । श्रोत्रग्राह्यत्वादेव शब्दस्याकाशाश्रितत्वं 15 कल्प्यते, समानजातीयारम्भकत्वञ्च गुणत्वात् । आकाशैकदेशो हि श्रोत्रमिति प्रसाधितमेतत् । प्राप्यकारित्वञ्चेन्द्रियाणां वक्ष्यते । न चाकाशानाश्रितत्वे शब्दस्य श्रोत्रेण प्राप्तिर्भवति, न चाप्राप्तस्य ग्रहणमिति तदाश्रितत्वं कल्प्यते । एवं समानजातीयारम्भकत्वमपि तत एव श्रावणत्वात् दूरवर्तिनः शब्दस्य श्रवणे सति कल्प्यते न तु गुणत्वादिति नेतरेतराश्रयत्वम् । कार्यत्वादाकाशाश्रितत्वं कल्प्यते 20 इत्येके ।

ननु कार्यत्वादप्याकाशाश्रितत्वकल्पनायां तदवस्थमेवेतरेतराश्रयत्वम् । कार्यत्वादाकाशाश्रितत्वम्, आकाशाश्रितत्वे सति नियतग्रहणमूलं पूर्वरीत्या कार्यत्वमिति । नैतदेवम् । भेदविनाशप्रतिभासाभ्यामेव कार्यत्वसिद्धेः । किमर्थंस्तर्हि

---

नियतग्रहणमूलमिति । नियतदेशं यदेतच्छब्दस्य ग्रहणमस्य कार्यत्वमेव मूलं 25 हेतुः, नित्यत्वपक्षे हि मद्रेष्वभिव्यक्तो गोशब्दः कश्मीरेषु श्रूयेतेत्यादिना नियतदेशतया ग्रहणाभावः प्रतिपादितः ।

नियतग्रहणसमर्थनाय अयमियान्प्रयासः क्रियते ? नियतग्रहणमपि कार्यपक्षानुगुणमिति दर्शयितुम् । न पुनरेषैव कार्यत्वे युक्तिरित्यलं सूक्ष्मेक्षिकया ।

अपर आह परिस्पन्दविलक्षणस्य प्रत्यक्षत्वादकर्मत्वं शब्दस्य साध्यते, न समानजातीयारम्भकत्वादितीतरेतराश्रयस्पर्शोऽपि नास्तीति । तस्मात् सर्वथा परिशेषानुमानाच्छब्दस्य गुणत्वसिद्धिः । 5

कथं तर्ह्यस्य महत्त्वादियोगो निर्गुणा गुणा इति काणादाः, अस्ति हि प्रतीतिर्महान् शब्द इति ? समानजातीयगुणाभिप्रायं तत् कणादवचनमिति न दोषः, तस्मादाकाशगुणः शब्दः । अपि च

यथात्मगुणता ह्रीच्छाद्वेषादेरुपपत्स्यते ।
शब्दो नयेन तेनैव भविष्यति नभोगुणः ।। 10

ये तु समानजातीयशब्दारम्भकत्वनिषेधहेतवः शब्दत्वादित्यादयः परैरुपन्यस्तास्तेषामप्रयोजकत्वान्न साधनत्वम् ।

इत्थं सन्तानवृत्त्या च शब्दग्रहणसम्भवे ।
कल्पनाल्पतरास्माकं न शब्दव्यक्तिवादिनाम् ।।
शाक्यकापिलनिर्ग्रन्थग्रथितप्रक्रियां प्रति । 15
यत्तु दूषणमाख्यातमस्माकं प्रियमेव तत् ।।

तस्मात् कार्यपक्षे नियतग्रहणोपपत्तेः, अभिव्यक्तिपक्षे च तदभावात् कार्य एव शब्द इति स्थितम् ।

## शब्दानित्यतायां सूत्रकारसम्मतिः

तदिदमुक्तं सूत्रकृता 'आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्चानित्यः शब्द' इति । आदिमत्त्वादिति । संयोगविभागादीनां शब्दे कारकत्वं न व्यञ्जकत्वमिति दर्शितम्, अतश्च न प्रयत्नान्तरीयकत्वमनैकान्तिकम् ऐन्द्रिय- 20

---

न समानजातीयारम्भकत्वादिति । समानजातीयारम्भकत्वेनाकर्मत्वसाधने हीतरेतराश्रयत्वं स्यादिति भावः ।

आदिमत्त्वादिति । आदिः अनुत्पन्नस्योत्पादः । न प्रयत्नानन्तरीयकत्वम् अनै- 25

कत्वादिति । कार्यपक्षे एव शब्दस्य नियतं ग्रहणमित्युक्तम्, प्रतिपुरुषं प्रत्युच्चारणञ्च शब्दभेदस्यैन्द्रियकत्वादिति वा हेत्वर्थः । तेन प्रत्यभिज्ञादुराशा श्रोत्रियाणामपाकृता भवति । कृतकवदुपचारादिति । तीव्रमन्दविभागाभिभवादिव्यवहारदर्शनात् सुखदुःखादिवदनित्यः शब्द इति दर्शितम् । तथा "प्रागुच्चारणादनुपलब्धेः,
5 आवरणानुपलब्धेश्च" इत्यनेन सूत्रेण शब्दाभावकृतमेव तदग्रहणमिति । न हि स्तिमिता वायवः शब्दमावरीतुमर्हन्ति, मूर्त्तं हि मूर्त्तेन व्यवधीयते नामूर्तमाकाशादिवत् । न च प्रकृत्यैवाकाशादिवदतीन्द्रियः शब्दः, तस्मात् क्षणिकप्रतीतेस्तत्कालमेव शब्दस्यावस्थानमित्यस्थानहेतोरपि नान्यथासिद्धत्वम् । वार्त्तिककृता शब्दानित्यत्वे साधनमभिहितम्, अनित्यः शब्दो जातिमत्वे सत्यस्मदादिबाह्यकरणप्रत्यक्ष-
10 त्वाद् घटवदिति ।

यत्त्वत्र जातीनामपि जातिमत्त्वादनैकान्तिकमुद्भावितम् 'एकार्थसमवायेन जातिर्जातिमती यतः' इति तदत्यन्तमनुपपन्नम्, निस्सामान्यानि सामान्यादीनीति सुप्रसिद्धत्वात्, न हि घटे घटत्वपार्थिवत्वे स्त इति घटत्वसामान्येऽपि पार्थिवत्वसामान्यमस्तीति शक्यते वक्तुम् । अतो निरवद्य एवायं हेतुः । तेन यदुच्यते

15 जातिमत्त्वैन्द्रियत्वादिवस्तुसन्मात्रबन्धनम् ।
शब्दानित्यत्वसिद्ध्यर्थं, को वदेद् यो न तार्किकः ।। इति

तदविदिततार्किकपरिस्पन्दस्य व्याहृतम् । इह त्वप्रयोजका हेतवो भवन्ति ।

ह्यस्तनोच्चारितस्तस्माद् गोशब्दोऽद्यापि वर्त्तते ।
गोशब्दज्ञानगम्यत्वाद् यथोक्तोऽद्यैष गौरिति ।।

---

20 कान्तिकमिति । अभिव्यङ्ग्येऽपि भावादिति । यदुक्तम् आवरणानुपलब्धेश्चेति सूत्रावयवम् 'न हि स्तिमिता वायवः' इत्यनेन व्याख्यातुमाह । वार्तिककृतापीति उद्योतकरेण ।

एकार्थसमवायेन इत्यस्योत्तरमर्धम् 'आधारत्वमथोच्येत नामूर्ताधीयते ह्यसौ' इति । एकस्मिन् गवादावर्थे समवेता या सत्ता गोत्वेन सह, तथा जातिमत्ता गोत्वेन सह,
25 तथा जातिमत्ता गोत्वादीनाम् ।

वस्तुसन्मात्रबन्धनमिति । जातिमत्त्वादिना वस्तुनः सन्मात्रं साधयितुं शक्यते, न पुनरनित्यत्वादिर्विशेष इत्यर्थः ।

विज्ञानग्राह्यता नाम वस्तुस्वाभाव्यबन्धना ।
नित्यत्वे कृतकत्वे वा न खल्वेषा प्रयोजिका ।।

अप्रयोजकता चैवम्प्रायाणां चैवमुच्यते ।
स्वयञ्चैते प्रयुज्यन्ते हेतुत्वेनेति किन्त्विदम् ।।

एवं नित्यत्वे दुर्बलो युक्तिमार्गः 5
तस्मान् मन्तव्यः कार्य एवेति शब्दः ।

वाचोयुक्तित्वे वैदिको योऽनुवादः
न्याये प्रयुक्ते किंफलस्तत्प्रयोगः ।।

## अनित्यस्यापि शब्दस्य न क्षणिकत्वम्

क्षणभङ्गिभावस्याभावादपि शब्दस्य क्षणिकतां न वक्तुमलम् । स्थूलवि- 10
नाशभावादिति यदुक्तं तदपि नृत्तम् ।

सूक्ष्मविनाशापेक्षी नाशः स्थूलस्थिरस्य कुम्भादेः ।
प्रकृतितरलस्य नाशः शब्दस्य स एव हि स्थूलः ।।

सत्त्वाद् यदि क्षणिकतां कथयेत् पुरो वा
शब्दस्तदैष कथमक्षणिकोऽभिधेयः । 15
गत्यन्तराद् यदि तदेव हि तर्हि चिन्त्यं
किं प्रौढवादिबहुमानपरिग्रहेण ।।

---

न्याये प्रत्युक्ते किंफलस्तत्प्रयोग 'न्यायोक्ते लिङ्गदर्शनम्' इति भवद्भिरेव व्यवस्थापितत्वात् । न च शब्दनित्यत्वसिद्धौ न्यायोऽस्ति अतो निष्फलो 'वाचाविरूप- नित्यया, इत्यादिलिङ्गदर्शनोपन्यासः । 20

सत्त्वाद् यदीति । न हि बौद्धानां स्थूलविनाशदर्शनमेव क्षणिकत्वे हेतुरपि तु सत्त्वाद्यपीत्याह । गत्यन्तरादनित्यत्वेऽर्थप्रत्यायकत्वानुपपत्तिलक्षणात् । शक्त्यन्तरादिति वा पाठे शक्त्यन्तरादर्थप्रत्यायनसामर्थ्यलक्षणात् । किं प्रौढवादिबहुमानपरिग्रहेण ।

अलमतिविततोक्त्या त्यज्यतां नित्यवादः
कृतक इति नयज्ञैर्गृह्यतामेष शब्दः ।
सति च कृतकभावे तस्य कर्ता पुराणः
कविरविरलशक्तिर्युक्त एवेन्दुमौलिः ॥

5 इति श्रीजयन्तभट्टविरचितायां न्यायमञ्जर्यां तृतीयमाह्निकम् ।

---

मत्पक्षो युक्तो यावद् भवत्पक्षः सर्वथैव नोपपद्यत इति वादेन यः प्रौढवाद्यहमिति बहु-मानस्तदाश्रयणेन ।

कविः क्रान्तदर्शनः ॥

भट्टश्रीशङ्करात्मजचक्रधरकृते न्यायमञ्जरीग्रन्थिभङ्गे तृतीयमाह्निकम् ।

# चतुर्थमाह्निकम्

## शब्दानामनित्यत्वात् वेदाः कर्तृपूर्वकाः

एवं कृतकत्वे वर्णानां साधिते सति वर्णात्मनः पदात् प्रभृति सर्वत्र पुरुषस्य स्वातन्त्र्यं सिद्धं भवति ।

पदनित्यत्वपक्षेऽपि वाक्ये तद् रचनात्मके । 5
कर्तृत्वसम्भवात् पुंसो वेदः कथमकृत्रिमः ॥

तथा च वैदिक्यो रचनाः कर्तृपूर्विकाः रचनात्वाल्लौकिकरचनावत् । एष च पञ्चलक्षणो हेतुः प्रयोजकश्चेति गमक एव न हेत्वाभासः । न तावदयमसिद्धो हेतुः 'शन्नो देवीरभीष्टये' इत्यादिषु वेदवाक्यसन्दर्भेषु पदरचनायाः स्वरक्रमादिविशेष- 10 वत्याः प्रत्यक्षत्वेन पक्षे हेतोः वर्तमानत्वात् । नापि विरुद्धः कर्तृत्ववति सपक्षे कुमार-सम्भवादौ रचनात्वस्य विद्यमानत्वात् । नाप्यनैकान्तिकः कर्तृरहितेषु गगनादिषु गगनकुसुमादिषु वा रचनाया अदृष्टत्वात् । नापि कालात्ययापदिष्टः प्रत्यक्षेणागमेन वा वेदे वक्त्रभावनिश्चयानुत्पादात् । नापि सत्प्रतिपक्षः प्रकरणचिन्ताहेतोः स्थाणु-पुरुषविशेषानुपलब्धेरिव हेतुत्वेनानभिधानात् । नापि परमाण्वनित्यतायामिव मूर्त्तत्वम् प्रयोजकमिदं साधनम्, रचनाविशेषाणां कर्त्तृव्यापारसाध्यत्वावधारणात् । 15 यथा धूमस्य ज्वलनाधीन आत्मलाभो ज्ञप्तिस्तु धूमादग्नेस्तथेह कर्त्रधीना रचना-नामभिनिर्वृत्तिः, प्रतीतिस्तु ताभ्यः कर्त्तुरिति । तस्मात् प्रयोजक एवायं हेतुः ।

## वेदानामपौरुषेयत्वे मीमांसकानां पक्षः

ननु सत्प्रतिपक्षत्वे विवदन्ते च, तथा च मीमांसकैः प्रतिहेतुरिह गीयते ।

वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् । 20
वेदाध्ययनवाच्यत्वादधुनाध्ययनं यथा ॥ इति ।

---

जटाजूटभरस्यन्ददगङ्गाम्बुघनदुर्द्दिने ।
उल्लसच्चन्द्रकं वन्दे नीलकण्ठस्य ताण्डवम् ॥

॥ ॐ नमः शिवाय ॥ प्रकरणचिन्ताहेतोरिति । यत एव प्रकरणे पक्षे चिन्ता

नैतद्युक्तम्, एवम्प्रायाणां प्रयोगाणामप्रयोजकत्वात् । न हि तच्छब्दवाच्यत्व-कृतमनादित्वमुपपद्यते । अनैकान्तिकश्चायं हेतुर्भारतेऽप्येवमभिधातुं शक्यत्वात्, भारताध्ययनं सर्वं गुर्वध्ययनपूर्वकं भारताध्ययनवाच्यत्वाद्, इदानीन्तनभारता-ध्ययनवदिति,

5 ननु भारते कर्तृस्मृतिरविगीता विद्यते । यद्येवं वेदेऽपि प्रजापतिः कर्त्ता स्मर्यत एव । अथ वैदिकमन्त्रार्थवादमूलेयं प्रजापतिस्मृतिः, प्रजापतिना चत्वारो वेदा असृज्यन्त चत्वारो वर्णाश्चत्वार आश्रमा इति तत्र पाठादिति ।

उच्यते । हन्त तर्हि भारतेऽपि तत्र वचनमूलैव पाराशर्यस्मृतिरिति शक्यते वक्तुम् ।

10 यथा प्रजापतिर्वेदे तत्र तत्र प्रशस्यते ।
भारतेऽपि तथा व्यासस्तत्र तत्र प्रशस्यते ।।
अथ प्रणेता वेदस्य न दृष्टः केनचित् क्वचित् ।
द्वैपायनोऽपि किं दृष्टो भवत् पितृपितामहैः ।।
सर्वेषामविगीता चेत् स्मृतिः सत्यवतीसुते ।
प्रजापतिरपि स्रष्टा लोके सर्वत्र गीयते ।।

15 आः किमिति सदसद्विवेकविकलशाकटिकादिप्रवादविप्रलब्ध एवं भ्राम्यसि? किल स्वल्पमपि कर्म पित्रा मात्रा वोपदिश्यमानं तद्वचनप्रत्ययादनुष्ठीयते ? तद-यमियाननेकक्लेशवित्तव्ययादिनिर्वर्त्यो वैदिकः कर्मकलाप एवमेव तदुपदेशि-नमाप्तमस्मृत्वैव क्रियत इति महान् प्रमादः । एवञ्चोच्चावचकविरचितजरत् पुस्त-कलिखितकाव्यवद् अस्मर्यमाणकर्तृकेण वेदेन व्यवहारानुपपत्तेरवश्यस्मरणीयस्तत्र

20 कर्त्ता स्यात् । न च कदाचन वेदेषु व्यवहारविच्छेदः सम्भाव्यते, येन तत्कृतं जरत् कूपारामादिष्विव तेषु कर्त्रस्मरणं स्यात् । तस्मादवश्यं स्मर्येत कर्त्ता, न च संस्मर्यते स्मर्त्तुं शक्यते वा । स्मृत्तिर्हि भवन्ती तदनुभवमूला भवति न च मूलेऽपि

---

संशयः । अविगीता अविप्रतिपत्त्या स्थिता ।

25 ननु सृष्टिकाले कर्तृदर्शनं [स्मृतेर्मूलं भविष्यतीत्याह न च मूल इति प्रथमत इत्यर्थः ।

कर्त्रनुभवः कस्यचिज्जातः सर्गादेरभावात्, भावे वा कर्त्तुरशरीरत्वेन दर्शनयोग्यत्वाभावात् ।

सशरीरत्वपक्षे वा पुरुषः कोऽपि तादृशः ।
तदानीं दृश्यमानोऽपि वेदं कुर्वन्न दृश्यते ॥

अधीयमाने दृष्टेऽस्मिंस्तदा संशेरते जनाः ।
किमेष रचयेद् वेदमुत वान्यकृतं पठेत् ॥ 5

यत्कृतं वा पठेदेष तस्मिन्नपि हि संशयः ।
भङ्ग्या वेदमनादित्वमुन्मीलदिव दृश्यते ॥

असत्यादिप्रमाणे च कर्त्तृतानुभवं प्रति ।
स्मृतिः प्रबन्धसिद्धापि स्पृशत्यन्धपरम्पराम् ॥ 10

योगिभिर्ग्रहणं कर्तुरित्येतदपि दुर्वचम् ।
कर्त्तृता हृदि दुर्बोधा कथं गृह्येत तैरपि ॥

योगिभिः सा गृहीतेति वयमेतन्न मन्महे ।
अमन्वानाश्च गच्छेम विस्रब्धास्तत्पथं कथम् ॥

वेदात् कर्त्रवबोधे तु स्पष्टमन्योन्यसंश्रयम् ।
ततो वेदप्रमाणत्वं वेदात् कर्तुश्च निश्चयः ॥ 15

तस्मात्पौर्वापर्यपर्यालोचनारहितयथाश्रुतमन्त्रार्थवादमूला भ्रान्तिरेषा न पुनः परमार्थतः कश्चित् कश्चिद्वेदस्य कर्त्तारं स्मरति। तस्मादकृतका वेदाः, अवश्यस्मरणीयस्यापि कर्त्तुरस्मरणात् । न च व्यधिकरणो हेतुरस्मर्यमाणकर्तृकत्वादित्येवं साधनप्रयोगात् । 20

---

तस्मात् पौर्वापर्यपर्यालोचनेति । विधायकवाक्यानङ्गत्वेन केवलानां मन्त्रार्थवादानां विश्वतश्चक्षुरित्यादीनां अदर्शनाद् 'रौद्रं चरुं निर्वपेत्' इत्यादिविधिवाक्यैकवाक्यतया व्यवस्थितानपि तान् पृथग् गृहीत्वा भ्राम्यन्ति । यथा 'घृतघटीमानय, यावद् आपणाद् घृतं गृह्येत' इत्येतद्वाक्यैकवाक्यतया 'घृतघटीमानय' इति स्थितं रिक्तघृतघटीसंप्रत्यायकं पृथक् क्रियमाणं पूर्णघृतघटीभ्रमं जनयति । 25

## वेदपौरुषेयत्वसिद्धौ युक्तिः

अत्रोच्यते, अपि तद्गुर्वध्ययनपूर्वकत्वं साधनमुपेक्षितं याज्ञिकैः, अयमभिनवो हेतुरस्मर्यमाणकर्तृकत्वादिति प्रयुक्तः। तस्मादस्तु नाम। नैनान् हेत्वन्तरोपन्यासिनो निगृह्णीमः। अक्षुद्रकथेयं प्रस्तुता। अयमपि तु अस्मर्यमाणकर्तृकत्वादिति हेतुः किं
5 स्वतन्त्र एवाकर्तृकत्वसिद्धये प्रयोज्यते उतास्मदुपचरितरचनात्वप्रतिघातायेति ? तत्र न तावदनुमानमनुमानान्तरपरिपन्थि कथयितुमुचितम्, प्रत्यक्षागमवदनुमानस्याप्य-नुमानबाधकत्वानुपपत्तेः। नहि तुल्यबलयोरनुमानयोर्बाध्यबाधकभावस्तुल्यबलत्वा-देव। अतुल्यबलत्वे तु यत्कृतमन्यतरस्य दौर्बल्यं तत एव तदप्रामाण्यसिद्धेः किमनु-मानबाधया? तद्विडम्बनार्थं तदभिधानमिति चेत्, तदप्ययुक्तम्। एकत्र धर्मिणि
10 युगपदितरेतरविरोधिधर्मद्वयप्रयोजकहेतुद्वयोपनिपातायोगात्। न हि द्व्यात्मकानि वस्तूनि भवितुमर्हन्ति इत्यवश्यमन्यतरस्तत्राप्रयोजकहेतुः, अप्रयोजकत्वादेव तस्या-गमकत्वे किं विडम्बनार्थेन हेत्वन्तरेण प्रयुक्तेन। विरुद्धाव्यभिचार्यपि नाम न कश्चिद्धेत्वाभास इति वक्ष्यामः, प्रकरणसमोऽपि न यः कश्चित् सत्प्रतिपक्षो हेतु-रिष्यतेऽपि तु संशयबीजभूतोऽन्यतरविशेषानुपलम्भे भ्रान्त्या हेतुत्वेन प्रयुज्यमान-
15 स्तथोच्यते इति दर्शयिष्यामः। तस्मात् परोदीरितं हेतुं निराचिकीर्षता वादिना तद्गतपक्षवृत्तितादिधर्मपरीक्षणे मनः खेदनीयम्। न हि प्रतिहेतुत्वान्वेषिणा वृथाटाटचा कर्त्तव्या।

ननु कतरदनयोः साधनयोरप्रयोजकं रचनात्वादस्मर्यमाणकर्तृकत्वादिति च। उच्यते। रचनात्वमेव प्रयोजकं न हि पुरुषमन्तरेण क्वचिदक्षरविन्यासो दृष्टः।

20 भो भगवन्तः सभ्याः क्वेदं दृष्टं क्व वा श्रुतं लोके।
यद् वाक्येषु पदानां रचना नैसर्गिकी भवति॥
यदि स्वाभाविकी वेदे पदानां रचना भवेत्।
पटे हि हन्त तन्तूनां कथं नैसर्गिकी न सा॥

'शन्नो देवीरभिष्टये','नारायणं नमस्कृत्य','अस्त्युत्तरस्यां दिशि देवतात्मा',
25 इति तुल्ये रचनात्वे क्वचित् कर्तृपूर्वकत्वमपरत्र तद्विपर्यय इति महान् व्यामोहः। एवं धूमोऽपि कश्चिदग्निमान् कश्चिदनग्निक इत्यपि स्यात्। किमिदानीं कुमारसम्भव-तुल्योऽसौ वेदः सम्पन्नः ? अहो सर्वास्तिकधुर्येण वेदप्रामाण्यं साधितं नैयायिकेन।

अलमुपहासेन, रचनामात्रमेव तुल्यं वेदस्य कुमारसम्भवेन नान्यत्। न चेयतोपहसितुं युक्तम्। किमस्य शब्दत्वं सामान्यं शङ्खशब्दसाधारणं नास्ति, सत्तासामान्यं वा सर्वसाधारणमिति।

ननु याः कालिदासादिरचनाः कर्तृपूर्विकाः।
ताभ्यो विलक्षणैवेयं रचना भाति वैदिकी॥ 5

इहाध्ययनवेलायां रूपादेव प्रतीयते।
अकृत्रिमत्वं वेदस्य भेदैस्तैस्तैरनन्यगैः॥

नामाख्यातोपसर्गादिप्रयोगगतयो नवाः।
स्तुतिनिन्दापुराकल्पपरकृत्यादिनीतयः॥

शाखान्तरोक्तसापेक्षविक्षिप्तार्थोपवर्णनम्। 10
इत्यादयो न दृश्यन्ते लौकिके सन्निबन्धने॥

तेनाध्येतृगणाः सर्वे रूपाद् वेदमकृत्रिमम्।
मन्यन्ते एव लोके तु पीतं मीमांसकैर्यशः॥

---

**नामाख्यातेति**। नाम्नामभिनवत्वं सूचयति कृतणत्वस्याग्निशब्दस्य क्वचित् प्रयोगः। आख्यातस्याभिनवत्वं 'होता यजतु' इत्यत्रार्थे 'होता यक्षत्' इति प्रयोगे। 15 उपसर्गस्य 'सं ते वायुर्वातेन गच्छताम्' इत्यादौ व्यवहितस्य प्रयोगः। **स्तुतिः** प्रशंसा यथा—'सर्वजिता वै देवाः समयजन् सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाप्नोति सर्वं जयति' इत्यादि। अनिष्टफलवादो **निन्दा**। 'स एष वाव प्रथमो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वाऽन्येन यजते स गर्ते पतत्ययमेवैतज्जीर्यते वा प्रमीयते वा' इत्यादि। अन्यकर्तृकस्य व्याहतस्य विधेर्वादः **परकृतिः**। "हुत्वा वपामेवाग्रेऽभिघारयन्ति अथ 20 पृषदाज्यं तदु ह कठचरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिघारयन्ति प्राणा वै पृषदाज्यमिति वदन्तः" इत्यादि। ऐतिह्यसमाचरितो विधिः **पुराकल्पः**। 'तस्माद्वा एतेन पुरा ब्राह्मणा बहिष्पवमानं सामस्तोममस्तौषन् योने यज्ञं प्रतनवामहे" इत्यादि न्यायभाष्योक्तानि स्तुत्याद्युदाहरणानि। विशिष्टनामधेयकर्तृसम्बन्धनिर्वर्त्यकर्मप्रतिपादकसामान्यकर्तृमात्रनिर्वर्त्यकर्मप्रतिपादकयोरर्थद्वारेण वाक्ययोस्तु मीमांसकाः परकृतिपुराकल्पता- 25 माहुः। आदिग्रहणमनुवादादिपरिग्रहार्थम्। **शाखान्तरोक्तिसापेक्षेति**। शाखान्तरोक्ति-

वेदा न पठिता यैस्तु त्वादृशैः कुण्ठबुद्धिभिः ।
कार्यत्वं ब्रुवते तेऽस्य रचनासाम्यमोहिताः ॥

उच्यते । मीमांसका यशः पिबन्तु पयो वा पिबन्तु बुद्धिजाड्यापनयनाय ब्राह्मीघृतं वा पिबन्तु वेदस्तु पुरुषप्रणीत एव नात्र भ्रान्तिः ।

5 यथा घटादिसंस्थानाद् भिन्नमप्यचलादिषु ।
संस्थानं कर्तृमत् सिद्धं वेदेऽपि रचना तथा ॥

यच्चात्र किञ्चिद् वक्तव्यं तत्पूर्वमेव सविस्तरमुक्तम् । अपि च यद् विलक्षणेयं रचना तद्विलक्षण एव कर्तानुमीयतां न पुनस्तदपलापो युक्त इत्यप्युक्तम् । याश्चैता निर्विवादसिद्धकर्तृकाः कालिदासादिरचनाः चमत्कारिण्य स्तासामन्योन्य-
10 विसदृशं रूपमुपलभ्यत एव ।

अमृतेनेव संसिक्ताश्चन्दनेनेव चर्चिताः ।
चन्द्रांशुभिरिवोद्घृष्टाः कालिदासस्य सूक्तयः ॥

प्रकटरसानुगुणविकटाक्षररचनाचमत्कारितसकलकविकुला बाणस्य वाचः, प्रतिकाव्यञ्च तानि तानि वैचित्र्याणि दृश्यन्ते एव । नामाख्यातादिवैचित्र्यमात्रेण
15 कर्त्रभावो वेदे रूपादेव प्रतीयते इति नूतनेयं वाचोयुक्तिः । अपि च यदि रूपे समाश्वसिति भवतो मनः तदादिमद् अर्थाभिधानमपि वेदस्य रूपं कथं न परीक्षसे ? 'बबरः प्रावाहणिरकामयत' 'कुसुरविन्दः औद्दालकिः अकामयत, 'पुरूरवो मा मृथा'

---

सापेक्षत्वेन विक्षिप्तो योऽर्थः । तथाहि सामवेदे 'एष वाव प्रथमो यज्ञानां यज्ज्योतिष्टोमः' इति ज्योतिष्टोमस्य प्राथम्यविधायकं वाक्यम् । न च तत्र ज्योतिष्टोमो विहितोऽस्ति,
20 अतः शाखान्तरविहितसापेक्षता ।

बबरः प्रावाहणिरकामयतेति पशुमान् स्यामिति । स एतामिष्टिमपश्यत् स तां निरवपत् स पशून् प्रत्यपद्यतेत्यादि वाक्यशेषो "बबरः प्रावाहणिरकामयत" इत्यस्य शाखान्तरप्रसिद्ध इत्याहुः । प्रवाहणस्य राज्ञोऽपत्यं प्रावाहणिः । उद्दालकस्यर्षेरपत्य-मौद्दालकिः । पुरूरवो मा मृथा इति ।

25 पुरूरवो मा मृथा मा प्र पप्तो मा त्वा वृकासो अशिवास उ क्षन् ।
न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता । इति

इति । प्रतिसर्गं पुनस्तेषां आवादनादित्वमिति चेत्, प्रतिसर्गं तर्हि वेदान्यत्वमपि भविष्यति । यथोक्तम् "प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते" इति

रूपादकृत्रिमत्वञ्च कल्पनाकल्पितैव सा ।
आदिमद् वस्तुबुद्धिस्तु वाचकैरक्षरैः स्फुटैः ।।

तेषामन्यथा व्याख्यानन्तु व्याख्यानमेव । पठन्त एव त्वध्येतारस्तत आदिमतोऽर्थान् बहूनवगच्छन्तीति नानादिर्वेदः । तस्मान्न रचनात्वमप्रयोजकम् ।　5

कर्त्रस्मरणमेव त्वप्रयोजकमसिद्धत्वात् । सिद्धमपि वा वेदे कर्त्रस्मरणमन्यथासिद्धम्, वेदकरणकालस्यातिदवीयस्त्वात् । तत्प्रणेतुश्च पुंसः सकलपुरुषविलक्षणत्वान्नियतशरीरपरिग्रहाभावाद् इदन्तयास्य पाणिनिपिङ्गलादिवत् स्मरणं नास्ति, न तु स नास्त्येव, अनुमानागमाभ्यां तदवगमात् । कथं पक्षधर्मतया ग्रहीतुं शक्यते कर्त्रस्मरणम्, तद्ध्येतत्पुरुषसम्बन्धि व्यभिचरति सर्वपुरुषसम्बन्धि तु दुरवगमम्, सर्वे पुमांसः कर्तारं वेदस्य न स्मरन्तीति कथं जानाति भवान् ? न हि तव सकललोकहृदयानि प्रत्यक्षाणि, सर्वज्ञत्वप्रसङ्गात् । न च यत् त्वं न जानासि तदन्योऽपि न जानातीति युक्तम्, अतिप्रसङ्गात् । तस्मादस्मर्यमाणकर्तृकत्वं दुर्बोधमेव । अपि च　10

---

उर्वशीवियोगे कृतमरणाध्यवसायं विहितप्रपातपातस्थं निश्चितहिंस्रप्राणिशरीरप्रदानं राजानं पुरूरवसं मुनिर्निषेधति हे पुरूरवः मा मृथाः प्राणान् मा त्याक्षीः, मा च प्रपप्त प्रपातपातं मा च कृथाः, मा च पतितं सन्तं त्वां वृका हिंस्राः प्राणिनः अशिवा भीषणाः क्षन् वधिषुः, यतः स्त्रीकृते भवतैतत् सर्वं क्रियते न च तासां स्त्रीणां सम्बन्धीनि सख्यानि प्रीतयः सन्ति । न स्थिरस्नेहा योषित इत्यर्थः । सालावृकाणां मर्कटानां हृदयं चित्तमिव चला ह्येता इति । प्रपप्त इति सिबू-अङि 'पतः पुम्" इति पुमागमे च रूपम् , उ इत्यनर्थको निपातः; क्षन्निति हन्तेर्घश्लादेशे लुङिच्छान्दसं रूपम् । एवं चादिमतः पूर्वमनुष्ठितस्यार्थस्याभिधानाद् वेदस्याप्यादिमत्त्वम्, असत्यर्थे तदभिधानासम्भवात्, एवंविधार्थपश्चाद्भावित्वं वेदस्येति ।　15 20

तेषामन्यथा व्याख्यानं त्विति । तथा च प्रावाहणिरित्यस्य व्याख्यान्तरं कृतम् । प्रवहतीति प्रावाहणिर्वायुरुच्यते स च नित्य एवेति । तदुक्तम् "परं तु श्रुतिसामान्यमात्रम्" इति ।　25

कर्तुरस्मरणे सति सुतरां वेदार्थानुष्ठानं प्रेक्षावतां शिथिलीभवेत्, न ह्यकर्तृक एवोपदेशः सम्भवति, सम्भवन्नपि वा प्रामाण्यनिश्चयनिमित्ताभावात् कथं विस्रम्भभूमिरसौ भवेत् ? बाधकाभावमात्राच्च न प्रामाण्यनिश्चयो वचसामित्युक्तं प्राक्। तस्माद् आप्तप्रत्ययादेव निर्विचिकित्सं वेदार्थानुष्ठानं सप्रतिष्ठानां सम्भवति नान्यथेति। तस्मान्न कर्त्रस्मरणस्य रचनात्वप्रतिपक्षतयोपन्यास उपपन्नः।

नापि स्वतन्त्रमेवेदं कर्त्रभावसाधनं भवितुमर्हति, अनुपलब्धिरियमनेन प्रकारेण किलोच्यते सानुपपन्ना, मानेन कर्तुरुपलम्भात्, अनुमानेनापि यदुपलब्धं तदुपलब्धमेव भवति। ननु कर्त्रभावस्मरणबाधितत्वादनुमानमिदमयुक्तम्। इतरेतराश्रयप्रसङ्गात्। अनुपलब्धौ सिद्धायामनुमाननिरासः, अनुमाननिरासे च सत्यनुपलब्धिसिद्धिः। अनुमानप्रामाण्येऽपि समानो दोष इति चेद्, न, तस्य प्रतिबन्धमहिम्ना प्रामाण्यसिद्धेः। न हि तस्यानुपलब्धिसिद्धिनिरासापेक्षं प्रामाण्यम्।

तत्रैतत् स्याद्। न वयं कर्त्रभावे प्रामाण्यं ब्रूमः। सकललोकपदार्थव्यवहारिणो हि मीमांसकाः। परन्तु वेदस्य पौरुषेयतां ब्रुवाणं प्रमाणं पृच्छामः। तच्चास्य नास्तीति बलादनुपलब्ध्या तदभावनिश्चयो व्यवतिष्ठते इति। स्यादेतदेवं यद्यनुमानं न स्यात्, उक्तञ्च रचनात्वादित्यनुमानम्।

यत् पुनरवादि वेदेषु पुरुषस्य कर्तृत्वमशक्यं ग्रहीतुमिति, तदप्यसाधु। परोक्षस्य कुविन्दादेरपि अभिनवावरकपटादौ कार्ये कथं कर्तृतावगम्यते।

पटादिरचनां दृष्ट्वा तस्य चेत् सानुमीयते।
वेदेऽपि रचनां दृष्ट्वा कर्तृत्वं तस्य गम्यताम्॥

शरीरपरिग्रहमन्तरेण प्राणिनामुपदेशस्य कर्तुमशक्यत्वात् कदाचिदीश्वरः शरीरमपि गृह्णीयादिति कल्प्यते। नियतशरीरपरिग्रहाभावाच्च व्यासादिवदसौ न स्मर्यते। ततश्च

अद्य सद्यः कविः काव्ये यथा कर्त्तेति मीयते।
तथा तत्कालजैः पुम्भिः सोऽपि कर्त्तेति मास्यते॥

---

अनुपलब्धिरियमनेनेति। न चेत् स्मर्यते नास्ति तस्योपलब्धिः, अतोऽनुपलब्धेरभावस्तस्य॥

यथा परकृताशङ्का तस्मिन् काव्ये व्यपैति ते ।
वेदेऽप्यन्यकृताशङ्का तथा तेषां व्यपैष्यति ॥
परोक्षमनुमानेन यच्च बुद्ध्यामहे वयम् ।
प्रत्यक्षं योगिनां तच्चेत्युक्तं प्रत्यक्षलक्षणे ॥
प्रत्यक्षमनुमानञ्च तदेवं कर्तृतामितौ । 5
मूलप्रमाणमस्तीति स्मृतौ निन्दापरम्परा ॥
मन्त्रार्थवादमूलत्वं तत एव न तत्स्मृतेः ।
यथोदितानुमानादिप्रमाणान्तरसम्भवात् ॥

यदपीतरेतराश्रयमभाषि पुरुषोक्ते वेदे प्रामाण्यं वेदप्रामाण्यात् पुरुषसिद्धि-रिति, तदपि न सम्यक्, पूर्वं परिहृतत्वात् । अनुमानात् प्रसिद्धे कर्त्तरि वेदवाक्यै-स्तत्प्रतीतेरुपोद्बलनमिष्यते, न त्वागमैकशरण एव कर्त्रवगमः । उक्तश्च पूर्वमपि पृथिव्यादिना कार्येण कर्तु रनुमानम् । 10

## वेदकर्तुरेव पृथिव्यादिरचयितृत्वम्

किं येनैव कर्त्रा पृथिव्यादि कार्यं निर्मितं तेनैव वैदिक्यो रचना निर्मिता इति चेद् ? ओमित्युच्यते । किमत्र प्रमाणमिति चेत् ? 15

उच्यते तर्हि सर्वज्ञः स्रष्टुं प्रभवतीदृशम् ।
विचित्रं प्राणिभृत्कर्मफलभोगाश्रयं जगत् ॥
तत्कर्मफलसम्बन्धविदा तदुपदेशिना ।
तेनैव वेदा रचिता इति नान्यस्य कल्पना ॥
एकेनैव च सिद्धेऽर्थे द्वितीयं कल्पयेम किम् । 20
अनेककल्पनाबीजं न हि किञ्चन विद्यते ॥

---

**मन्त्रार्थवादमूलत्वमिति** । 'विश्वतश्चक्षुरित्या'देर्मन्त्रार्थवादादन्यथागृहीतादीश्वर-सत्तां गृहीत्वा स्मरन्तीति ।

**उपोद्बलनमिष्यत** इति । उद्गतं बलमुद्बलमधिकमुद्बलमुपोद्बलं तस्य करणम् उपोद्बलनं तेन । 25

## जगत्स्रष्टुरेकत्वमेव

जगत्सर्गे तावदेक एवेश्वर इष्यते न द्वौ बहवो वा, भिन्नाशयकल्पने एकत्र वैयर्थ्याद्, इतरत्र व्यवहारवैशसप्रसङ्गेन तत एकस्येश्वरस्य विधानात्। तथा हि

5 अनेकेश्वरवादो हि नातीव हृदयङ्गमः।
ते चेत् सदृशसङ्कल्पाः कोऽर्थो बहुभिरीश्वरैः ॥
सङ्कल्पयति यदेकः शुभमशुभं वापि सत्यसङ्कल्पः।
तत् सिद्ध्यति तद्विभवादित्यपरस्तत्र किं कुर्यात् ॥
भिन्नाभिप्रायतायान्तु कार्यविप्रतिषेधतः।
10 नूनमेकः स्वसङ्कल्पविहत्यानीश्वरो भवेत् ॥
एकस्य किल सङ्कल्पो राजायं क्रियतामिति।
हन्यतामिति चान्यस्य तौ समाविशतः कथम् ॥
राज्यसङ्कल्पसाफल्ये विहता वधकामना।
तस्याः सफलतायां वा राज्यसङ्कल्पविप्लवः ॥
15 तेन चित्रजगत्कार्यसंवाहानुगुणाशयः।
एक एवेश्वरः स्रष्टा जगतामिति साधितम् ॥

## वेदकर्तुरपि नानात्वे प्रमाणाभावः

एवं जगत्सर्गवत् स एव वेदानामप्येकः प्रणेता भवितुमर्हति, नानात्वकल्पनायां प्रमाणाभावात् कल्पनागौरवप्रसङ्गाच्च। तेन यदुच्यते

20 नन्वेकः सर्वशाखानां कर्त्तेत्यवगतं कुतः।
बहवो बहुभिर्ग्रन्थाः कथं न रचिता इमे ॥

इति तत्परिहृतं भवति। अतश्चैककर्त्तृका वेदा यतः परस्परव्यतिषक्तार्थोपदेशिनो दृश्यन्ते। एकमेव हि कर्म वेदचतुष्टयोपदिष्टैः पृथग्भूतैरप्येकार्थसमवायि-

---

चित्रजगत्कार्येति। चित्रं जगल्लक्षणं यत् कार्यं तद् यैर्गुणैः समाहर्तुं शक्यते
2 सर्वज्ञतादिभिस्तेषामाशयः स्थानम्।

भिरङ्गैरन्वितं प्रयुज्यते। तत्र हि हौत्रमृग्वेदेन यजुर्वेदेनाध्वर्यवम्, औद्गात्रं सामवेदेन ब्रह्मत्वमथर्ववेदेन क्रियते। पैप्पलादादिशाखाभेदोपदिष्टञ्च तत्तदङ्गजातं तत्र तत्रापेक्ष्यते। तत्र सर्वशाखाप्रत्ययमेकं कर्मेत्याहुः। एतच्चादूरएवाग्रे निर्णेष्यते।

एकाभिप्रायबद्धत्वं तेन सर्वत्र गम्यते।
भवेद् भिन्नाशयानां हि कथमेकार्थमीलनम्॥　　5

काव्यसमस्यापूरणे का वार्त्तेति चेत्?

तत्रापि प्रथमस्यैव कवेस्तद्वस्तुदर्शनात्।
तदभिप्रायवेदी तु सोऽन्यस्तमनुवर्त्तते॥
अन्यथानन्वितं काव्यं स्याद् विश्ववसुकाव्यवत्।
अन्वितत्वे तु सा नूनमाद्यस्यैव कवेर्मतिः॥　　10
इहाप्येकाशयाभिज्ञद्वितीयेश्वरकल्पने।
एकाभिप्रायतैव स्यात् किं स्यात्तत्कल्पने फलम्॥

तस्मादेक एव कर्त्ता सर्वशाखानाम्, काठकादिव्यपदेशस्तु प्रकृष्टाध्ययननिबन्धनो भविष्यतीति भवद्भिरप्युक्तम्। अपि च यथा तरोर्विक्षिप्ताः

---

हौत्रं होतृकर्म याज्यानुवाक्यापाठादि। आध्वर्यवमध्वर्युकर्म पुरोडाशादिकरणं　15
होमश्च। औद्गात्रमुद्गातृकर्म स्तोत्रादिपाठः। सर्वशाखाप्रत्ययमिति। सर्वशाखाधीनः प्रत्ययः प्रतीतिर्यस्य। न ह्येकस्यां शाखायां निरपेक्षं कर्म प्रतीयते।

काव्यसमस्यापूरण इति। यत्रैकः पादः कविना रच्यते द्वौ वा शिष्टमन्यैः पूर्यते सा काव्यसमस्या। यथा 'समुद्राद् वह्निरुत्थितः' इति 'सीतासमागमासह्यादाकर्णाकृष्टधन्वनः। राघवस्य शराङ्गारैः' इति पादत्रयेण पूरयन्ति।　　20

विश्ववसुकाव्यम् ''जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मत्तकानि' इत्यादिकम्। प्रसिद्धपदार्थापेक्षयानन्वितार्थमिति वर्णयन्ति, मीमांसकभाष्यकृतास्यैवानन्वितार्थोदाहरणत्वेन प्रदर्शनात्।

प्रकृष्टाध्ययननिबन्धनो भविष्यतीति। कठेनासाधारण्येनैवैषा शाखा प्रोक्ता शिष्येभ्यो निगदिता। भवद्भिरप्युक्तम्। 'वेदांश्चैके सन्निकर्षम् पुरुषाख्या' इति पूर्व-　25
पक्षयित्वा 'आख्या प्रवचनात्' इति सिद्धान्तयद्भिः।

शाखा भवन्ति न च कृत्स्नं पुष्पफलपत्रमेकस्यां शाखायां सन्निहितं भवति किन्तु कस्याञ्चित् कस्याञ्चित्, एवं वेदस्यापि शाखाः पृथगङ्गकर्मोपदेशिन्यो विक्षिप्ताश्च।

तासाञ्च वृक्षशाखानामेकस्माज्जन्म बीजतः।
तथैव सर्वशाखानामेकस्मात् पुरुषोत्तमात् ॥

कर्त्ता य एव जगतामखिलात्मवृत्ति-
कर्मप्रपञ्चपरिपाकविचित्रताज्ञः।
विश्वात्मना तदुपदेशपराः प्रणीता-
स्तेनैव वेदरचना इति युक्तमेतत् ॥

आप्तं तमेव भगवन्तमनादिमीश-
माश्रित्य विश्वसिति वेदवचःसु लोकः।
तेषामकर्तृकतया न हि कश्चिदेवं
विस्रम्भमेति मतिमानिति वर्णितं प्राक् ॥

एवञ्च पदवाक्यरचनादौ तावद् वेदेषु पुरुषापेक्षित्वमुपपादितम्।

## शब्दार्थयोः सम्बन्धस्वरूपविचारः

यदपि सम्बन्धकरणे पुरुषानपेक्षत्वमुच्यते चित्रभानोरिव दहनशक्तिः शब्दस्य नैसर्गिकी वाचकशक्तिः। व्युत्पत्तिस्तु वृद्धेभ्य एव व्यवहरमाणेभ्य उपलभ्यते इति किमत्र पुरुषः करिष्यतीति ? तदप्यघटमानम्, पुरुषपरिघटितसमयसम्बन्धव्यतिरेकेण शब्दादर्थप्रत्ययानुत्पत्तेः।

ननु नैव शब्दस्यार्थेन सम्बन्धः कश्चिदस्ति, कस्येदं पुरुषसापेक्षत्वं तन्निरपेक्षत्वं वा चिन्त्यते ? न हि शब्दार्थयोः कुण्डबदरयोरिव संयोगस्वभावः तन्तुपटयोरिव समवायात्मा वा सम्बन्धः प्रत्यक्षमुपलभ्यते, तन्मूलत्वाच्च सम्बन्धान्तराण्यपि न सन्ति। तदुक्तं मुखे शब्दमुपलभामहे भूमावर्थमिति। नाप्यनुमीयते शब्दस्यार्थेन सम्बन्धः क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणानुपलम्भात्। न च शब्ददेशे अर्थः सम्भवति न चार्थदेशे शब्दः स्थानकरणप्रयत्नानां तद्धेतूनां घटाद्यर्थदेशेऽनुपलम्भात्। व्यापकत्वन्तु शब्दस्य प्रतिषिद्धमेव।

उच्यते। न संश्लेषलक्षणः शब्दार्थसम्बन्धोऽस्माभिरभ्युपगम्यते। तत् किं कार्यकारणनिमित्तनैमित्तिकाश्रयाश्रयिभावादयः शब्दस्यार्थेन सम्बन्धाः। एतेऽपि नतराम्। न तर्हि तस्य कश्चिदर्थेन सम्बन्धः? न नास्ति शब्दस्यार्थेन सम्बन्धः, प्रत्ययनियमहेतुत्वाद् धूमादिवत्। तत् किं शब्दार्थयोरविनाभावः सम्बन्धः? सोऽपि नास्ति एवं हि शब्दोऽनुमानमेव स्यात्। कस्तर्हि समय इति ब्रूमः। कोऽयं समयो नाम, अभिधानाभिधेयनियमनियोगः समय उच्यते। यद्येवं किमनाशङ्कनीयसंश्लेष-परिचोदनेन तद्दूषणेन च? उच्यते। शब्दार्थभेदवादिनां हि वैयाकरणानामेष संश्लेषः, उपपत्तिमान् समयोऽप्ययमनुपपन्न एव, स हि पुरुषकृत सङ्केतो न च पुरुषे-च्छया वस्तुनियमोऽवकल्पते तदिच्छाया अव्याहतप्रसरत्वात्। अर्थोऽपि किमिति वाचको न भवति, न चैवमस्ति न हि दहनमनिच्छन्नपि पुरुषो धूमान्न तं प्रत्येति जलं वा तत इच्छन्नपि प्रतिपद्यते, तत्र यथा धूमाग्न्योर्नैसर्गिक एवाविनाभावो नाम सम्बन्धः ज्ञप्तये तु भूयोदर्शनादि निमित्तमाश्रीयते एवं शब्दार्थयोःसांसिद्धिक एव शक्त्यात्मा सम्बन्धः, तद्व्युत्पत्तये तु वृद्धव्यवहारप्रसिद्धिसमाश्रयणम्। स्वाभाविके सम्बन्धे सति दीपादिवत् किं तद्व्युत्पत्त्यपेक्षणेनेति चेद्, न, शब्दस्य ज्ञापकत्वात्, ज्ञापकस्य धूमादेरेतद्रूपं यत् सम्बन्धग्रहणापेक्षं स्वज्ञाप्यज्ञापकत्वम्, उद्द्योतादयस्तु

---

तत्किं कार्यकारणेति। कार्यकारणलक्षणः सम्बन्धो बीजाङ्कुरयोरिव, निमित्त-नैमित्तिकलक्षणः कुविन्दपटयोरिव, आश्रयाश्रयिभावलक्षणस्तु कुण्डबदरयोरिव। आदि-ग्रहणात् कार्योत्पादेऽप्यनिवृत्तः कारणविशेषयोनिस्तत्कृतः सम्बन्धः पितापुत्रयोरिव। प्रत्ययनियमहेतुत्वादिति। विशिष्टार्थविषयप्रत्ययस्तेनासम्बन्धान्नोपपद्यत इति भावः।

नियोगेति। व्यवस्थया नियोगो नियोजनम्।

शब्दार्थभेदवादिनां हीति। शब्द उच्चरिते शब्दाकारतया प्रथमं बुद्धिर्विवर्तते, सा तथा विवृत्ता सती ततोऽर्थाकारतया विपरिणमते, तस्याञ्च तथाभूतायां बुद्धौ शब्दस्वरूपमेवार्थाकारतया निर्वृत्तमवगम्यत इत्यादि युक्त्युपन्यासपूर्वकं शब्दार्थयोर-भेदमाहुः शाब्दाः। संश्लेष इति। संश्लेषरूपसम्बन्ध इति, प्रागुक्तनीत्या शब्दसंसृष्टस्यै-वार्थस्यावगमात्। सांसिद्धिक एवेति। स्वाभाविक एव शक्तिद्वयनियमलक्षणसम्बन्ध इत्यर्थः। उद्योतादयः प्रदीपादयः।

प्रत्यक्षसामग्र्यन्तर्गतत्वान्न व्युत्पत्त्यपेक्षा भवन्ति, शक्तिस्तु नैसर्गिकी यथा रूप-प्रकाशिनी दीपादेस्तथा शब्दस्यार्थप्रतिपादने, तस्मान् न समयमात्रादर्थप्रतिपत्तिः।

अपि चाभिधानाभिधेयनियमनियोगरूपः समयो ज्ञानमेव न ततोऽर्थान्तरम्। ज्ञानञ्चात्मनि वर्त्तते न च शब्दार्थयोरिति न तयोः सम्बन्धः स्यात्। किञ्च समयः 5 क्रियमाणः प्रत्युच्चारणं वा क्रियते प्रतिपुरुषम्, सर्गादौ वा सकृदीश्वरेणेति। प्रत्यु-च्चारणं प्राक्तन एव क्रियते नूतनो वा। नवस्य तावत् क्रियमाणस्य कथमर्थप्रत्यायन-सामर्थ्यमवगम्यते। तदवगतौ वा किं तत्करणेन। पूर्वकृतस्य तदा कृतत्वादेव पुनः करणमनुपपन्नम्। एकस्य वस्तुनो ज्ञप्तिरसकृदावर्त्तते नोत्पत्तिः। प्रतिपुरुषमपि सम्बन्धो भिन्नोऽभिन्नो वा क्रियते। भेदपक्षे कथमेकार्थसञ्ज्ञानं गोशब्दस्य सास्नादि-10 मानर्थः केसरादिमानश्वशब्दस्येति। अभेदेऽपि तथैव कृतस्य करणायोगाज् ज्ञान-मेव सम्बन्धस्य न करणम्। सर्गादावपि सकृत् सम्बन्धकरणमयुक्तं तथाविधकाला-सम्भवादेव। न हि शब्दार्थव्यवहाररहितः कश्चित् काल उपपद्यते। तस्मान्नित्यस्यैव सम्बन्धस्य लोकतो व्युत्पत्तिः न पुनः करणम्। व्युत्पत्तिपक्षञ्च न करणपक्षाभिहिता दोषाः स्पृशन्ति प्रत्यक्षसिद्धत्वात्। प्रत्यक्षं हीदमुपलभ्यते वृद्धानां हि स्वार्थे व्यव-15 हरमाणानामुपशृण्वन्तो बालास्ततस्ततः शब्दात्तं तमर्थं प्रतियन्ति। तेऽपि वृद्धा यदा बाला आसंस्तदान्येभ्यो वृद्धेभ्यस्तथैव प्रतिपन्नवन्तस्तेऽप्यन्येभ्य इति नास्त्यादिः संसारस्येति।

अपि च समयमात्रशरणः शक्तिशून्यः शब्दः कथमक्षिनिकोचहस्तसंज्ञादिभ्यो भिद्येत? स हि तदानीं कशाङ्कुशप्रतोदाभिघातस्थानीय एव भवेत्, तथा च शब्दादर्थं 20 प्रतिपद्यामहे इति लौकिको व्यपदेशो बाध्येत समयादर्थं प्रतिपद्यामहे इति स्यात्। समयपक्षे च यदृच्छाशब्दतुल्यत्वं सर्वशब्दानां प्राप्नोति, तेन गवाश्वादीनां शब्दानां नियतविषयत्वं न स्यात्।

यत् पुनरुच्यते जातिविशेषे चानियमात् समयरूपः सम्बन्ध इति, जातिशब्दे-नात्र देशो विवक्षितः। किल क्वचिद्देशविशेषे कश्चिच्छब्दो देशान्तरप्राप्तप्रसिद्धमर्थ-25 मुत्सृज्य ततोऽर्थान्तरे वर्तते। यथा चौरशब्दस्तस्करवचन ओदने दाक्षिणात्यैः प्रयु-ज्यते, एतच्च समयपक्षे युज्यते, नित्ये तु सम्बन्धे कथं तदर्थव्यभिचार इति, तदप्य-युक्तम्। सर्वशब्दानां सर्वार्थप्रत्यायनशक्तियुक्तत्वात् क्वचिद्देशे केनचिदर्थेन व्यव-

हारः। अत एव चानवगतसम्बन्धे श्रुते सति सन्देहो भवति कमर्थं प्रत्याययितुमनेनायं शब्दः प्रयुक्तः स्यादिति। असत्यां हि शक्तौ अकृतसमये निरवलम्बना प्रत्यायकत्वाशङ्केति। अथ वार्यदेशप्रसिद्ध एव शब्दानामर्थः, इतरस्तु म्लेच्छजनसम्मतो नादरणीय एव। तस्मात् समयपक्षस्यातिदौर्बल्यादकृत्रिम एव शब्दार्थयोः सम्बन्ध इति न तत्र पुरुषस्य प्रभविष्णुता। 5

अत्रोच्यते। न नित्यः सम्बन्ध उपपद्यते, शब्दवदर्थवच्च तृतीयस्य तस्य प्रत्यक्षादिना प्रमाणेनाप्रतीयमानत्वात्।

ननु शक्तिरूपः सम्बन्ध इत्युक्तः शक्तिश्च तदाश्रितेति कथं धर्म्यन्तरवत् पृथक्तया प्रतीयते? नैतत् साम्प्रतम्। स्वरूपसहकारिव्यतिरिक्तायाः शक्तेः सूक्ष्मायाः प्रागेव विस्तरतः प्रतिक्षिप्तत्वात्। न च शक्तिः प्रत्यक्षगम्या द्रव्यस्वरूपवदनुपलम्भात्, नानुमेया कार्याणामन्यथापि घटमानत्वात्। कल्पयित्वा च शक्तिमपरिहार्यः समयः, समयमन्तरेणार्थप्रतिपत्तेरसिद्धेः। सिद्धे च समये तत एवार्थसिद्धेः किं नित्यसम्बन्धाश्रयणेन? 10

यत्तूक्तं समयस्य पुरुषेच्छाधीनत्वात् तस्याश्चाव्याहतप्रसरत्वाद् वाच्यवाचकव्यत्ययः स्यादिति तदयुक्तम्। शक्त्यभावे शब्दस्यैव वाचकत्वे योग्यत्वात्। का पुनः शक्त्यभावे योग्यतास्येति चेद्, योऽयं गत्वादिजातियोगः क्रमविशेषोपकृता गत्वौत्वादिसामान्यसम्बन्धो हि यस्य भवति स वाचकत्वे योग्य इति। इतरस्तु वाच्यत्वे। यथा द्रव्यत्वाद्यविशेषेऽपि वीरणत्वादिसामान्यवताञ्च पटनिष्पत्तौ, न च तत्र शक्तिरस्तीत्युक्तम्। न च कारणे कार्यं सदिति सांख्यैरिव भवद्भिरिष्यते। तस्यामसत्यामपि शक्तौ सामान्यविशेषसम्बन्धस्य नियामकत्वान्न वाच्यवाचकयोर्व्यत्यय इति न शक्तिरूपः शब्दार्थयोः सम्बन्धः। न च तयोरविनाभावे धूमाग्न्योरिव सम्बन्धः, तत्र हि सम्बन्धः प्रतीयमान एवं प्रतीयते धूमोऽग्निं विना न भवतीति। इह पुनरयमस्मात् प्रतीयते इति एतावदेव व्युत्पत्तिपर्यवसानम्। अत एवावगतिपूर्विकैवावगतिरिहेत्यनुमानाच्छब्दस्य भेद उक्तः। प्रकाशकत्वमपि शब्दस्य समयप्रसादो- 15 20

---

एवं प्रतीयते 'धूमोऽग्निं विना न भवति' इति न पुनः 'धूमादग्निः प्रतीयते' इत्येवम्। यदि प्रत्यायकत्वं शब्दस्य स्वाभाविकं तत् प्रथमश्रुत एव कस्मान्न प्रत्याय- 25

पनतमेव न स्वाभाविकम् । सांसिद्धिके हि तथात्वे भ्रमित्वादिप्रयुक्तादन्यतो वा यतः कुतश्चिदभिनवादपि दीपादिव शब्दादर्थप्रतीतिः स्यात् ।

यत्तु नैसर्गिकेऽपि प्रकाशकत्वे शब्दस्य धूमादेरिव ज्ञापकत्वात् सम्बन्धग्रहण-सापेक्षत्वमुक्तम्, स एष विषम उपन्यासः । न हि धूमादेः प्रत्यायकत्वं स्वाभाविकम्, 5 अनलाविनाभावित्वन्तु तस्य निजं बलम्, तत्र चागृहीते तस्मिन् प्रतीतिरेव न जायते इति युक्तं तद्ग्रहणं प्रतीत्यर्थम् । इह तु प्रतीतिशक्तिरेव स्वाभाविकी भवताऽभ्यु-पगम्यते । सा चेत् स्वाभाविकी किं व्युत्पत्त्यपेक्षणेनेति । यच्चोच्यते प्रत्यायक इति प्रत्ययं दृष्ट्वा अवगच्छामो न प्रथमश्रवण इति यावत्कृत्वः श्रुतेनेयं संज्ञा अयं संज्ञीत्य-वगम्यते तावत्कृत्वः श्रुतादर्थावगम इति सोऽयं समयोपयोग एव कथितो भवति । 10 संज्ञासंज्ञिसम्बन्धो हि समय एवोच्यते, तदुपयोगमन्तरेण प्रत्यायकत्वानवगमान्न स्वाभाविकी शक्तिः ।

यत्त्वभ्यधायि समयस्य ज्ञानात्मकत्वादात्मनि वृत्तिः न शब्दार्थयोरित्ये-तदप्यचतुरश्रम् । तदाश्रयत्वाभावेऽपि ज्ञानस्य तद्विषयत्वोपपत्तेः ।

यदप्यभाणि समयमात्रशरणे सृणिप्रतोदनोदनर्निविशेषे शब्दे शब्दादर्थं 15 प्रतिपद्यामहे इति व्यपदेशो न स्यादिति, तदपि न किञ्चित् । नैसर्गिकशक्तिपक्षेऽपि शक्तेरर्थं प्रतिपद्यामहे न धूमादिति स्यात् । तदङ्गत्वादविनाभावादेर्न तथा व्यपदेश इति चेत् । तदितरत्रापि समानम् ।

> धूमे हि व्याप्तिपूर्वत्वं शब्दे समयपूर्वता ।
> नानयोस्तदपेक्षायां करणत्वं विहन्यते ।।

20 अपि च । लौकिको व्यपदेशः समयपक्षसाक्षितामिव भजते । देवदत्तेनोक्तम् अमुतः शब्दादमुमर्थं प्रतिपद्यस्वेति एवं हि व्यपदिशति लोकः । तस्मात् समय एव । अतश्चैवं देशान्तरे सङ्केतवशेन तत एव शब्दादर्थान्तरप्रतिपत्तिः ।

नन्वत्रोक्तं सर्वशब्दाः सर्वार्थप्रत्यायनयुक्ता इति केनचिदर्थेन क्वचिद्-व्यवहार इति, तदेतदयुक्तम् । शक्तीनां भेदाभेदविकल्पानुपपत्तेः । न शब्दस्वरूपाद् 25 भिन्नाः शक्तयः तथानवभासात् । अव्यतिरेके चैकस्माच्छब्दादनन्यत्वात् परस्परम्-

---

येदित्याशङ्कानिवारणायेदं शाबरं भाष्य "प्रत्यायक इति प्रत्ययं दृष्ट्वा" इति ।

सृणिरङ्कुशः ।

व्यतिरेकस्तासां स्यात्। न च भिन्नकार्यानुमेया भिन्नाः शक्तयः, कार्यभेदस्यान्यथाप्युपपत्तेः। सर्वशक्तियोगे च सर्वार्थप्रत्ययप्रसङ्गः। समयोपयोगो नियामक इति चेत्, स एवास्तु किं शक्तिभिः?

यदप्यगादि शब्दश्रवणे सति सर्वार्थविषयसन्देहदर्शनात् सर्वत्र तस्य शक्तिः कल्प्यते इति, तदप्यसारम्। न हि शक्तिकृतः सन्देहः, किन्तु गत्वादिवर्णसामान्यनिबन्धनः। तथा च गत्वादिजातिमतां वर्णानामर्थे वाचकत्वमवगतम्, अमी तज्जातियोगिनो वर्णाः कस्यार्थस्य वाचकाः स्युरिति भवति सन्देहः।

यत्पुनरवादि स एव शब्दस्यार्थो यत्रैनमार्याः प्रयुञ्जते न म्लेच्छजनप्रसिद्ध इति, तदेतत् कथमिव शपथमन्तरेण प्रतिपद्येमहि। न हि म्लेच्छदेशेऽपि तदर्थप्रत्ययो न जायते बाध्यते वा सन्दिग्धो वेति कथं न शब्दार्थः? आर्यप्रसिद्धिर्बाधिकेति चेद्, 10 आर्यप्रसिद्धेरपि म्लेच्छप्रसिद्धिः कथं न बाधिका? अक्षादिवच्च विकल्पमानार्थोपपत्तेः व्यवस्थितविषय एव विकल्पो भविष्यति। पिकनेमतामरसादिशब्दानाञ्च

---

कार्यभेदस्यान्यथाप्युपपत्तेः समयभेदेनाप्युपपत्तेः।

न च वाच्यं कथमेकस्य शब्दस्य नानार्थतेति, यतो दृष्टमेतदक्षादिषु शब्देषु; तदाह अक्षादिवदिति। यथा विभीतकादित्रयवाचिनो अक्षशब्दस्य युगपत् त्रयवाचि- 15 त्वासम्भवात् विकल्पेन त्रयवाचित्वेऽपि प्रकरणादिवशात् क्वचिदेव व्यवस्थिते नियते विषये वृत्तिः। एवं देशान्तरे अन्यस्मिन्नन्यस्मिन् स्वार्थे प्रयुक्तानां शब्दानां विकल्पेनानेकार्थवाचित्वेऽपि देशवशान्नियतपदार्थे वृत्तिर्भविष्यति। ततश्च 'यव'शब्दमार्या दीर्घशूकेषु प्रयुञ्जते, म्लेच्छास्तु प्रियङ्गुषु, तत् म्लेच्छप्रसिद्धिं बाधित्वा दीर्घशूकेष्वयं यवशब्दः प्रयोक्तव्यो न प्रियङ्गुष्विति न वाच्यम्, उभयवाचकत्वेऽपि देशवशाद् व्यव- 20 स्थायाः सिद्धेः। पिकनेमतामरसादिशब्दानामिति। पिकनेमाधिकरणे हि "चोदितं तु प्रतीयेताविरोधात् प्रमाणेन" इत्यत्रैतच्चिन्तितम्। भवतु यवादिशब्दानामार्यप्रसिद्ध एवार्थः, ये तु पिकनेमतामरसादयः आर्यैर्न क्वचित् प्रयुज्यन्ते तेषां किं म्लेच्छप्रसिद्ध एवार्थ उत व्याकरणादिव्युत्पत्तिसमाश्रयणेनार्थान्तरं कल्पनीयमिति। तत्राशिष्टाचारत्वान्म्लेच्छव्यवहारस्य वरं व्याकरणादिनैवार्थकल्पनेति पूर्वपक्षयित्वोक्तम् "अशिष्टैरपि 25 यच्चोदितं शिष्टानवगतं तदपि प्रतीयेत प्रत्येतव्यं प्रमाणेनाविरुद्धं सत् न चात्रम्लेच्छप्रसिद्ध्याश्रयणे कश्चित् प्रमाणविरोधः" इत्यर्थः "चोदितं तु प्रतीयेत" इति सूत्रस्य।

भवद्भिः म्लेच्छप्रयोगादर्थनिश्चय आश्रित एव । अवेष्ट्यधिकरणे च राज्यशब्द-मान्ध्रप्रसिद्धेऽर्थे वर्णितवन्तो भवन्त इत्यलमवान्तरचिन्तनेन । तस्मात् समय एव सम्बन्ध इति युक्तम् । तदुक्तं जातिविशेषे चानियमादिति ।

अथ यदुक्तं समयः प्रत्युच्चारणं प्रतिपुरुषञ्च तत्करणम्, अनभ्युपगतमेव 5 दूषितम् । सर्गादौ सकृदेव समयकरणमिति नः पक्षः । अत एव न सर्वशब्दानां यदृच्छातुल्यत्वम् । केषाञ्चिदेव शब्दानामस्मदादिभिरद्यत्वे सङ्केतकरणात् त एव यदृच्छाशब्दा उच्यन्ते । सर्गादिश्च समर्थित एव, ईश्वरसिद्धावव्यविकल्पमनुमान-मुपन्यस्तम् । एष एव चावयोर्विशेषो यदेष शब्दार्थसम्बन्धव्यवहारस्तवानादिर्मम तु जगत्सर्गात् प्रभृति प्रवृत्त इति । अद्यत्वे तु शब्दार्थसम्बन्धव्युत्पत्तौ तुल्य एवावयोः

10 पिकः कोकिलः । नेमोऽर्धम् । तामरसं पद्मम् । अवेष्ट्यधिकरणे चेति । अवेष्टौ यज्ञसंयोगात् क्रतुप्रधानमुच्यते" इत्यत्रावेष्ट्यधिकरणे । अत्र हीयं चिन्ता कृता । 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यत्र नानापशुसोमेष्टिसमुदायात्मकराजसूयाख्ययाग-मध्येऽवेष्टिर्नामेष्टिराम्नाता, "आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा ऐन्द्रमेका-दशकपालमृषभो दक्षिणा, वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा, मैत्रावरुणीमामिक्षां वशा दक्षिणा, बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा" इति पञ्चेष्टिसमुदा-15 यात्मिका, तामेतामवेष्टिमधिकृत्याह—एतयान्नाद्यकामं याजयेदिति । पुनश्च तामेवाधि-कृत्य श्रूयते "यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाभिघारयेत्, यदि वैश्यो वैश्वदेवम्, यदि राजन्य ऐन्द्रम्" इति । तत्र संदेहः किं राज्यस्य कर्ता राजेति व्युत्पत्तिसमाश्रयणेन जनपदपुरपरिपालनरूपराज्यकर्तृत्वेन ब्राह्मणवैश्ययोरपि राजशब्द-योगसम्भवाद् राजसूयेऽधिकाराद् बार्हस्पत्यादिमध्यनिधानादिलक्षणस्य गुणस्य विधौ 20 ब्राह्मणत्वादिजातिनिमित्तत्वेनोपादानम्, आहोस्विद् आन्ध्रेषु क्षत्रियजातौ राजशब्द-प्रयोगात् तदाश्रयेण ब्राह्मणवैश्ययोरप्राप्तत्वात् 'एतयान्नाद्यकामं याजयेदि'ति विशिष्ट-फलकामयोस्तयोरपूर्वोपदेश इति । तत्र पूर्वपक्षः आर्यप्रसिद्ध्यनुग्रहात् राज्यकर्तरि राजशब्दप्रयोगसामर्थ्यनिमित्तार्थत्वेन ब्राह्मणाद्युपादानं समर्थितम्, सिद्धान्ते तु आन्ध्र-25 प्रयोगाश्रयणेनाप्यार्यप्रसिद्धेर्बाधात् तत्समाश्रयणेन क्षत्रियजातावेव राजशब्दप्रयोग इति निश्चित्यापूर्वविधिरेवेति स्थापितम् । सूत्रार्थस्तु अवेष्टौ ब्राह्मणादिप्रतिपादनं क्रतुप्रधानम-प्राप्तमेव तयोर्यज्ञकर्म विधातुम्, कुतः ? यज्ञसंयोगात्, राज्ञो हि क्षत्रियस्य राजसूययज्ञेन संयोगः सम्बन्धो न तयोः, अतोऽप्राप्तविधिरेवायं ब्राह्मणवैश्ययोरित्यर्थः ।

पन्थाः, तत्रापि त्वयं विशेषो यत्तव शक्तिपर्यन्ता व्युत्पत्तिर्मम तु तद् वर्जमिति । तथा चेयमियती व्युत्पत्तिर्लोके दृश्यते, यदयमस्य वाच्योऽयमस्य वाचक इति । न पुनः शक्तिपर्यन्ता व्युत्पत्तिरस्ति । तथा हि यत्र शृङ्गग्राहिकया शब्दमर्थञ्च निर्दिश्य सम्बन्धः क्रियते तत्रेयन्तमेवैनं क्रियमाणं पश्यामः, अयमस्य वाच्योऽयमस्य वाचक इति । यत्रापि च वृद्धेभ्यो व्यवहरमाणेभ्यो व्युत्पद्यते तत्रापीयदेवासौ जानाति अयमर्थः अमुतः शब्दादनेन प्रतिपन्न इति । न त्वन्यास्य काचिच्छक्तिरस्तीति । इयत्यैव च व्युत्पत्त्या शब्दादर्थप्रत्ययोपपत्तेरस्याश्च अपरिहार्यत्वादधिककल्पना-बीजाभावाच्च न नित्यः शब्दार्थसम्बन्धः । अत एव च 'सम्बन्धस्त्रिप्रमाणकः' इति यत्त्वयोच्यते तदस्माभिर्न मृष्यते । 'शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति' इति सत्यं "श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया" इत्येतदपि सत्यम् । "अन्यथानुपपत्त्या च वेत्तिशक्तिं द्वयाश्रिताम्" इत्येतत्तु न सत्यम्, अन्यथाप्युपपत्तेरित्युक्तत्वात् । तस्माद् द्विप्रमाणकः सम्बन्धनिश्चयो न त्रिप्रमाणकः । तदेवं शब्दस्य नैसर्गिक-शक्त्यात्मकसम्बन्धाभावाद् ईश्वरविरचितसमयनिबन्धनः शब्दार्थव्यवहारो नानादिः ।

नन्वीश्वरोऽपि सम्बन्धं कुर्वन् अवश्यं केनचिच्छब्देन करोति तस्य केन कृतः सम्बन्धः? शब्दान्तरेण चेत् तस्यापि केन कृतस्तस्यापि केनेति न कश्चिदवधिः तस्मादवश्यमनेन सम्बन्धं कुर्वता वृद्धव्यवहारसिद्धाः केचिदकृतसम्बन्धा एव शब्दा अभ्युपगन्तव्या अस्ति चेद्, व्यवहारसिद्धिः । किमीश्वरेण किं वा तत्कृतेन समये-नेत्यनाद्यपक्ष एव श्रेयान् । उच्यते

अस्त्रमायुष्मता ज्ञातं विषयस्तु न लक्षितः ।
अस्मदादिषु दोषोऽयमीश्वरे तु न युज्यते ॥
नानाकर्मफलस्थानमिच्छयैवेदृशं जगत् ।
स्रष्टुं प्रभवतस्तस्य कौशलं को विकल्पयेत् ॥

---

तव शक्तिपर्यन्ता व्युत्पत्तिरिति । व्युत्पत्तिः शक्तिद्वयनियमलक्षणसम्बन्धावगम इति । यथोक्तम्—"अन्यथानुपपत्त्या च वेत्ति शक्तिं द्वयाश्रिताम्" अन्यथाप्युपपत्ते-रित्युक्तत्वादिति । 'अयमस्य वाचकः अयश्च वाच्यः' इत्येतावन्मात्रव्युत्पत्तावप्युपपत्तेः ।

इच्छामात्रेण पृथिव्यादेरियतः कार्यस्य करणमस्मदादीनां यन्मनोरथपदवीमपि नाधिरोहति तदपि यतः सम्पद्यते तस्य कियानयं प्रयासः ? तदत्रेश्वरसद्भावे परं विप्रतिपत्तयः ? तस्मिंस्तु सिद्धे क एवं विकल्पानामवसरः ? उक्तश्च तत्सिद्धौ निरपवादमनुमानम् । वयन्तु न कर्त्तार एव सम्बन्धस्य यत एवमनुयुज्येमहि

5 अङ्गुल्यग्रेण निर्दिश्य कञ्चिदर्थं पुरः स्थितम् ।
व्युत्पादयन्तो दृश्यन्ते बालानस्मद्विधा अपि ॥

तस्माद् ईश्वरविरचितसम्बन्धाधिगमोपायभूतबृद्धव्यवहारलब्धतद्व्युत्पत्तिसापेक्षः शब्दोऽर्थमवगमयतीति सिद्धम् । न च नित्यसम्बन्धाभावेऽपि शब्दस्यार्थास्पर्शित्वं समयबलेनार्थप्रत्ययस्याबाधितस्य सिद्धेरित्युक्तत्वाद् इत्यलं विस्तरेण ।

10 तस्मात् पदे च वाक्ये च सम्बन्धे च स्वतन्त्रता ।
पुरुषस्योपपन्नेति वेदानां तत्प्रणीतता ॥

## आप्तोक्तत्वाद् वेदाः प्रमाणम् न स्वतः

तस्मादाप्तोक्तत्वादेव वेदाः प्रमाणं न नित्यत्वात् । नन्वाप्तोक्तत्वस्य हेतोः पक्षधर्मत्वं कथमवगम्यते ? न प्रत्यक्षेण क्षोणीधरधर्मत्वमिव धूमस्य वेदानामाप्त-
15 प्रणीतत्वमवगम्यते, श्रवणयुगलकरणलब्धजन्मनि प्रत्यये वेदाख्यस्य शब्दराशेरेव प्रतिभासात् । न चोदात्तादिवद्वर्णधर्मत्वेन आप्तोक्तत्वं गृह्यते । नाप्यनुमानमस्मिन्नर्थे सम्भवति, लिङ्गाभावात् । प्रामाण्ये हि वेदस्याप्तोक्तत्वं लिङ्गम्, आप्तोक्तत्वानुमितौ तु न लिङ्गान्तरमुपलभामहे इति कुतस्त्यः पक्षधर्मत्वनिश्चयः ? उच्यते । अलं सरस्वतीक्षोदेन उक्त एव पक्षधर्मत्वनिश्चयोपायः, तथाहि—

20 शब्दस्य साधितं तावदनित्यत्वं सविस्तरम् ।
रचनाः कर्तृमत्यश्च रचनात्वादिति स्थितम् ॥

कर्त्ता सर्वस्य सर्वज्ञः पुरुषोऽस्तीति साधितम् ।
कार्येणानुगुणं कल्प्यं निमित्तमिति च स्थितम् ॥

प्रत्यक्षादिविसंवादो वेदे परिहरिष्यते ।
25 व्याघातपौनरुक्त्यादिदोषश्च वचनान्तरे ॥

विध्यर्थवादमन्त्राणामुपयोगश्च वक्ष्यते ।
न मात्रामात्रमप्यस्ति वेदे किञ्चिदपार्थकम् ॥
शब्दब्रह्मविवर्त्तादिकल्पनाश्च पुरोदिताः ।
सर्वाः परिहरिष्यन्ते कार्यत्वस्य विरोधिकाः ॥

इत्थञ्च स्थिते किमन्यदवशिष्टं वेदेऽनाप्तोक्ततानिश्चयस्य ? सोऽयं सकल- 5
शास्त्रार्थस्थितौ सत्यां पक्षधर्मत्वनिश्चयो हेतोराप्तोक्तत्वस्य गीयते ।

## आप्तोक्तत्वनिश्चये मानाभावनिरसनम्

यत्तु प्रत्यक्षमनुमानं वा तन्निश्चयनिमित्तमिति विकल्पितं तत्र प्रत्यक्ष-मास्ताम् । अनुमानानि तु यानि रचनात्वादीन्युक्तानि यानि च परदर्शनद्वींषि वक्ष्यन्ते तानि सर्वाण्याप्तोक्ततायाः पक्षधर्मतासिद्धावौपयिकानीत्यलं विस्तरेण । 10

व्याप्तिः पुनरस्य हेतोरायुर्वेदादिवाक्येषु निश्चीयते । पिप्पलीपटोलमूलादेरस्यौ-षधस्येत्थमुपयोगादिदमभिमतमासाद्यते, अस्य च क्षीरतक्रादिविरोध्यशनस्य परि-हारादिदमनिष्टमुपशाम्यतीत्यादिष्वायुर्वेदशास्त्रेषु प्रत्यक्षेण तस्यार्थस्य तथा निश्च-यादर्थाविसंवादित्वं नाम प्रामाण्यं प्रतिपन्नम् । तच्चेदमाप्तवादप्रयुक्तम्, यतो यत्राप्त-वादत्वं तत्र प्रामाण्यमिति व्याप्तिर्गृह्यते । तथा मन्त्राणां प्रयोगे वृश्चिकभुजगदष्टस्य 15
भक्षितविषस्य वा निर्विषत्वम्, अपस्मारपिशाचरूपिकागृहीतस्य तदुन्मोचनम्, अतिरभसोज्जिहानेषु दुष्टमेघेषु सस्यरक्षणमित्येवमुपलब्धम् । अतस्तेषां विषभूता-शनिशमनकुशलानामाप्ता उपदेष्टार इति तत्रापि तथैव व्याप्तिनिश्चयः ।

## आयुर्वेदादीनां नाप्तोक्तत्वात् प्रामाण्यम् इति शङ्कानिरसनम्

नन्वायुर्वेदादौ प्रामाण्यं प्रत्यक्षादिसंवादात् प्रतिपन्नम्, नाप्तप्रामाण्यात् । अतः 20
कथमाप्तोक्तत्वस्य तत्र व्याप्तिग्रहणम् ? नैतदेवम् । प्रत्यक्षादिसंवादात् तन्निश्चीयतां

---

शब्दब्रह्म इति । शब्दब्रह्मणोऽनादिनिधनस्यायमाद्यो विवर्तो वेदाः न पुनः केनचित् कृता इति वैयाकरणा यदाहुः "त्रयीरूपेण तज्ज्योतिः प्रथमं परिवर्तते" इत्यादि तदिदमपवर्गाह्निके निराकरिष्यते ।

अतिरभसोज्जिहानेष्विति । अतिरभसेन साटोपमुपगच्छत्सु । 25

नाम प्रामाण्यम्, उत्थितन्तु तदाप्तोक्तत्वात् । प्रत्यक्षादावप्यर्थक्रियाज्ञानसंवादात् प्रामाण्यस्य ज्ञप्तिरुत्पत्तिस्तु गुणवत्कारककृतेत्युक्तम् । नद्यादिवाक्यानि च विप्रलम्भकपुरुषभाषितानि विसंवदन्ति लोके दृश्यन्ते, तेनाप्तप्रणीतत्वमेव तेषां प्रामाण्यकारणम्, कारणशुद्धिमन्तरेण सम्यक्प्रत्ययानुत्पादात् । निश्चयोपायस्तु
5 प्रत्यक्षं भवतु न तु तत्कृतमेव प्रामाण्यम् । अतो युक्तमाप्तोक्ततया आयुर्वेदादौ व्याप्तिग्रहणम् ।

नन्वेवमपि न युक्तम्, आप्तोक्तत्वस्य तत्र परिच्छेत्तुमशक्यत्वात् । अन्वयव्यतिरेकमूलमेवायुर्वेदवाक्यानां प्रामाण्यं नाप्तकृतम् । अन्वयव्यतिरेकौ च यावत्येव दृश्येते तावत्येवार्थे प्रामाण्यम्, यथा हरीतक्यादिवाक्यार्थे । यत्र तु तयोरदर्शनं
10 तत्र अप्रामाण्यम् । यथा सोमराज्युपयोगे समाः सहस्रं जीव्यते । आप्ते तु कल्प्यमानेऽर्धजरतीयं स्यात्, अर्धे तस्याप्तत्वमर्धे च कथमनाप्तत्वमिति । तदिदमनुपपन्नम्, अन्वयव्यतिरेकयोर्ग्रहीतुमशक्यत्वात् । तौ हि स्वात्मनि वा ग्रहीतुं शक्येते व्यक्त्यन्तरे वा । व्यक्त्यन्तरेऽपि सर्वत्र क्वचिदेव वा व्यक्तिविशेषे । सर्वथा संकटोऽयं पन्थाः । व्याधीनां तन्निदानानां तदुपचयानां तदुपशमोपायानामौषधानां तत्संयोगवियोग-
15 विशेषाणां तत्परिमाणानां तद्रसवीर्यविपाकानां देशकालपुरुषदशाभेदेन शक्तिभेदस्यैकेन जन्मना ग्रहीतुमशक्यत्वात्, जन्मान्तरानुभूतानाञ्च भावानामस्मरणात् ।

जनोऽनन्तस्तावन्निरवधिरिह व्याधिनिवहो
न संख्यातुं शक्या बहुगुणरसद्रव्यगतयः ।
विचित्राः संयोगाः परिणतिरपूर्वेति च कुतः
20 चिकित्सायाः पारं तरति युगलक्षैरपि नरः ॥
यदेव द्रव्यमेकस्य धातोर्भवति शान्तये ।
योगान्तरात् तदेवास्य पुनः कोपाय कल्पते ॥

---

अर्धजरतीयं स्यादिति । यथा जरत्या अर्धं जघनमेव कामयतेऽर्धं न वदनादि । अथवान्नादिसंस्कारचातुर्येण तां कामयते भद्रिकां प्रतिपद्यते न तूपभोगेत्यर्धजरतीयम् ।
25 तत्परिमाणानामिति । अस्य द्रव्यस्येयान् भागोऽस्येयानिति । यथा 'कर्षः कर्षोऽर्धपलं पलत्रयं स्यात्, तथार्धकर्षश्च । मरिचस्य पिप्पलीनां दाडिमगुडयावकशूकानाम्' इत्यादौ परिमाणविशेषः संयोगविशेषश्च ।

या द्रव्यशक्तिरेकत्र पुंसि नासौ नरान्तरे ।
हरीतक्यापि नोद्भूतवातकुष्ठे विरेच्यते ॥
शरद्युद्रिक्तपित्तस्य ज्वराय दधि कल्पते ।
तदेव भुक्तं वर्षासु ज्वरं हन्ति दशान्तरे ॥
न चोपलक्षणं किञ्चिदस्ति तच्छक्तिवेदने । 5
येनैकत्र गृहीतासौ सर्वत्रावगता भवेत् ॥

यो वा ज्ञातुं प्रभवति पुरुषस्तत्सामर्थ्यं निरवधिविषयम् ।
स्यात् सर्वज्ञः स इति न विमतिस्तस्मिन् कार्या स्ववचनकथितैः ॥

## आयुर्वेदस्य सर्वज्ञप्रणीतत्वसाधनम्

अथोच्यते, अनादिरेवैषा चिकित्सकस्मृतिर्व्याकरणादिस्मृतिवत्, संक्षेप- 10
विस्तरविवक्षयैव चरकादयः कर्त्तारो न तु ते सर्वदर्शिनः। न च स्मृतावन्धपरम्परा-
दोषः, समूलत्वात् । यथा व्याकरणस्मृतेः शिष्टप्रयोगो मूलमेवमिहान्वयव्यतिरेकौ।
शिष्टविरोधे सति यथा मूलविरोधिनी पाणिन्यादिस्मृतिरप्रमाणं तथा चाहु 'रिह
न भवत्यनभिधानादि'ति, एवं वैद्यस्मृतिरप्यन्वयव्यतिरेकविरुद्धा न प्रमाणमिति ।
तदेतदयुक्तम् । अन्वयव्यतिरेकयोर्यथोक्तनयेन परिच्छेदासम्भवेन तन्मूलत्वानुपपत्तेः। 15
यदि ह्यन्वयव्यतिरेकाभ्यामशेषद्रव्यशक्तीर्निश्चित्य चरकादिभिर्विरचितं शास्त्र-
मिति ईदृशमन्वयव्यतिरेकित्वमुच्यते, तदपाकृतम् । अद्यत्वे यावन्तावन्वयव्यतिरेकौ
वयमुपलब्धुं शक्नुमस्तावद्भ्यां ताभ्यामेकदेशसंवादात् प्रामाण्यकल्पनात् तत्र प्रवर्त्तनं
न तु तौ तावन्तौ शास्त्रस्य मूलं भवितुमर्हतः, सर्वैरस्मदादिभिस्तादृशशास्त्रप्रणयन-
प्रसङ्गात् । अनादित्वमपि शास्त्राणां वेदवदनुपपन्नम्, चरकादिकर्तृस्मृतेः, कालि- 20
दासादिस्मृतिवदविगीतत्वात्, न च चिकित्सास्मरणप्रबन्ध एवमनादिः, तथात्वेऽन्ध-
परम्पराकारणानवधारणात् । न च तदुक्तं तन्मूलं भवितुमर्हति व्युदस्तत्वात्,
तस्मात् सर्वज्ञप्रणीत एवायुर्वेदः ।

---

न च स्मृतावन्धपरम्परादोषः कस्यचित् साक्षाद् द्रष्टुरभावादिति । यथा
कुम्भं करोतीति कुम्भकार इत्यत्र "कर्मण्यण्" तथा हिमवन्तं शृणोतीत्यत्र कस्मान्न 25
भवतीति चोदिते सयाह—इह न भवत्यनभिधानादिति ।

ननु अविदुषामुपदेशो नावकल्पते इति विद्वांसश्चरकादयः कल्प्यन्ताम्, ते तु प्रत्यक्षेणैव सर्वं विदितवन्त इत्यत्र किं मानम् ? उच्यते । अन्वयव्यतिरेकयोर्निरासान्नानुमानस्यैष विषयः, वेदमूलत्वमपि मन्वादिस्मृतिवदयुक्तं कल्पयितुम्, कर्त्तृसामान्यासम्भवादिति वर्णयिष्यामः । पुरुषान्तरोपदेशपूर्वकत्वे चरकेणैव
5 किमपराद्धम् ? उपमानमनाशङ्कनीयमेवास्मिन्नर्थे । अर्थापत्तिस्तु न प्रमाणान्तरम्, अप्रामाण्यन्तु नास्ति बहुकृत्वः संवाददर्शनात्, अतः परिशेषात् प्रत्यक्षीकृतदेशकालपुरुषदशाभेदानुसारिसमस्तव्यस्तपदार्थसार्थशक्तिनिश्चयाश्चरकादय इति युक्तं कल्पयितुम्। यद्येवं कथं तर्हि सोमराज्यादिवाक्येषु व्यभिचारः ? व्यभिचारे चार्धजरतीयमित्युक्तम्, नैष दोषः, कर्मकर्त्तृसाधनवैगुण्यादेषु व्यभिचारो भविष्यति, वैदिकेषु
10 च कर्मसु मीमांसकस्य समानो दोषः ।

कारीर्यादौ का ते वार्त्ता यस्यां न स्याद्दिष्टौ वृष्टिः ।
वैगुण्यञ्चेत् कर्त्रादीनामत्राप्येवं शक्यं वक्तुम् ॥

यदि विधुरमभुक्तं कर्म शास्त्रीयमन्यत्
फलविघटनहेतुः कल्प्यते सापि तुल्यः ।
15 क्वचिदथ फलसम्पद् दृश्यते तत्प्रयोगे
तदिह दृढशरीराः सन्ति दीर्घायुषश्च ॥

आयुर्वेदश्च तस्मादाप्तकृतो नान्यमूल इति सिद्धम् ।
एवं फलवेदादौ प्रकाशमाप्तप्रणीतत्वम् ॥

तस्माद् आप्तोक्तत्वस्य सिद्धमायुर्वेदादौ व्याप्तिग्रहणम् । व्याप्तिप्रदर्शनायैव सूत्रकृता "स द्विविधो दृष्टादृष्टार्थत्वात्" इत्युक्तम् । दृष्टार्थशब्दे गृहीताविनाभाव-
20 माप्तोक्तत्वम्, अदृष्टार्थेऽपि प्रामाण्यं साधयतीति । अत एवोक्तम्, "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्" इति ।

---

ते तु प्रत्यक्षेणैव सर्वं विदितवन्तो न पुनरनुमानागमाभ्यामपीति । अविदुषामुपदेशो नावकल्पत इत्यनया युक्त्या विद्वांसः कल्पन्तां नामेति ।

25 एवं फलवेदादाविति । फलवेदः शस्यपालशास्त्रम् ।

नन्वत्रापि न वैद्यकं विरचयन् दृष्टो मुनिः सर्ववित्
तद्व्याप्तिग्रहणं जने यदि मृषायुर्वेदसङ्कीर्त्तनम् ।
सत्यं किन्तु दृढा तथापि चरकाद्याप्तस्मृतिर्वैद्यके
नासौ चार्यनिबन्धनेति कथिता तस्येह दृष्टान्तता ॥
इत्यायुर्वेदवाक्यप्रभृतिषु भवति व्याप्तिराप्तोक्ततायाः 5
पूर्वोक्तेन क्रमेण स्फुटमकथि तथा पक्षधर्मत्वमस्याः ।
न प्रत्यक्षागमाभ्यामपहृतविषया नानुमानान्तरेण
व्याधूता वेति सैषा भजति गमकतां पञ्चरूपोपपत्तेः ॥
अनपेक्षतया न वेदवाचां घटते निष्प्रतिमः प्रमाणभावः ।
क्व गिरामयथार्थतानिवृत्तिः पुरुषप्रत्ययमन्तरेण दृष्टा ॥ 10

तत्प्रत्ययाद् बहुलद्रविणव्ययादि-
साध्येषु कर्मसु तपःसु च वैदिकेषु ।
युक्तं प्रवर्त्तनमबाधनकेन नैव
तत्सिद्धिरित्यलमसम्मत एष मार्गः ॥

तस्मादाप्तोक्तत्वादेव वेदाः प्रमाणमिति सिद्धम् । 15

## वेदप्रामाण्यसाधने प्रकारान्तरम्

अन्ये त्वन्यथा वेदप्रामाण्यं वर्णयन्ति । तस्य हि प्रामाण्येऽभ्युपगतपरलोकोऽनभ्युपगतपरलोको वा परो विप्रतिपद्यते । तत्रानभ्युपगतपरलोकं प्रति तावदात्मनित्यतादिन्यायपूर्वकं परलोकसमर्थनमेव विधेयम् । परलोकवादिनान्तु मते यदेतत् सुखिदुःख्यादिभेदेन जगतो वैचित्र्यं दृश्यते तदवश्यं कर्मवैचित्र्यनिबन्धनमेव । 20 कर्माणि चाननुष्ठितानि नात्मानं लभन्ते । अलब्धात्मनाञ्च नभःकुसुमनिभानां कुतो विचित्रसुखदुःखादिफलसाधनत्वम् ? तस्मादनुष्ठानमेषामेषितव्यम् । अनुष्ठानञ्च

---

तद्व्याप्तिग्रहणं जने यदीति । लोके सत्यार्थमाप्तप्रणीतं वचो दृष्टम्, वचनमपि च सत्यार्थम्, तस्मादाप्तप्रणीतमिति । मृषायुर्वेदसङ्कीर्तनम् । येन तस्याप्तप्रणीतत्वं सिद्ध्यति तेनैव वेदस्य सेत्स्यतीति । अकथि कथितम् अनपेक्षतया न वेदवाचामिति । 25 नित्यत्वेन पुरुषगुणापेक्षाया अभावादित्यर्थः ।

नाविदितस्वरूपाणां कर्मणामुपपन्नम् । अजानन् पुरुषस्तपस्वी किमनुतिष्ठेत् ? तदवश्यं ज्ञात्वानुष्ठेयानि कर्माणि । तदिदानीं तेषां परिज्ञाने कोऽभ्युपायः ? न प्रत्यक्षमस्मदादीनां स्वर्गाद्यदृष्टपुरुषार्थसाधनानि कर्माणि दर्शयितुं प्रभवति ।

नाप्यनुमानम्, अन्वयव्यतिरेकाभ्यां तृप्तिभोजनयोरिव स्वर्गयागयोः साध्य-साधनसम्बन्धानवधारणात् । जगद्वैचित्र्यान्यथानुपपत्त्या तु विचित्रं कारणमात्रमनुमीयते न च तावतानुष्ठानसिद्धिः । उक्तञ्च

अधर्मे धर्मरूपे वाप्यविभक्ते फलं प्रति ।
किमप्यस्तीति विज्ञानं नराणां क्वोपयुज्यते ।। इति ।

उपमानन्त्वत्र शङ्क्यमानमपि न शोभते । नापि परस्परमुपदिशन्तो लौकिकाः कर्माणि परलोकफलानि जानीयुरिति वक्तुं युक्तम्, अज्ञात्वा उपपादयतामाप्तत्वायोगात् । ज्ञानन्तु लौकिकानां दुर्घटं प्रमाणाभावाद् इत्युक्तत्वात् । एवमेव हि पुरुषोपदेशपरम्पराकल्पनायामन्धपरम्परान्यायः स्यात् । तस्माद् अवश्यमभ्युपगतपरलोकैः परलोकफलानि कर्माणि कुर्वद्भिः शास्त्रात् कर्मावबोधोऽभ्युपगन्तव्यः । शास्त्रञ्च वेदा एवेति सिद्धं तत्प्रामाण्यम् ।

## लोकप्रसिद्धेर्न धर्माधर्मज्ञापकत्वम्

ननु लोकप्रसिद्धित एव धर्माधर्मसाधनानि कर्माणि ज्ञास्यन्ते, किं शास्त्रेण ? उपकारापकारौ हि धर्माधर्मयोर्लक्षणमिति प्रसिद्धमेवैतत् । तथाह व्यासः

इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये ।
आचण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम् ।। इति ।

नैतद्युक्तम् । लोकप्रसिद्धेर्निर्मूलायाः प्रमाणत्वानुपपत्तेः । लोकप्रसिद्धिर्नाम लौकिकानामविच्छिन्ना स्मृतिः । स्मृतिश्च प्रभवन्ती प्रमाणान्तरमूला भवति न स्वतन्त्रेत्यवश्यमस्या मूलमन्वेषणीयम् । तच्च प्रत्यक्षादि नोपपद्यते इति नूनं शास्त्रमूलैव लोकप्रसिद्धिः, विरुद्धानेकप्रकारत्वाच्च लोकप्रसिद्धेर्न तस्यां स्वतन्त्रायां

---

अधर्मे धर्मरूपे वेति । विचित्रं धर्माधर्माख्यं कारणमात्रमर्थापत्त्यावगम्यते, न पुनर्विभागेनार्थापत्तितोऽवगतिरस्ति, अमुष्मात् कर्मणोऽनुष्ठिताद् इदमिष्टं फलमवाप्यतेऽमुष्मात्त्विदमनिष्टमिति । क्वोपयुज्यतेऽनुष्ठानानौपयिकत्वात् ।

पदद्वये वस्तुद्वये । विरुद्धानेकप्रकारत्वादिति । विरुद्धो घूकचटकन्यायेन हिंसा

समाश्वसिति लोकः। न चोपकारकमात्रलक्षणावेव धर्माधर्मौ वक्तुं युज्येते, जपशीधुपानादौ तदभावात् गुरुदारगमनादौ च विपर्ययात्, इत्यवश्यं शास्त्रशरणावेव तावेषितव्यौ ।

अपि चेदमिष्टिसत्रादिकमेव फलम् । अयमस्मिन्नधिकृत इति। इयमितिकर्त्तव्यता, एष देश, इमे ऋत्विज इत्यादि किं लोकप्रसिद्धेरधिगन्तुं शक्यते ? तस्मादवश्यं शास्त्राधीन एव विशिष्टकर्मावबोध एषितव्यः । शास्त्रञ्च वेद एवेत्युक्तम् । अतस्तस्य निर्विवादसिद्धमेव प्रामाण्यमिति ।   5

## एतावता कर्मप्रभृतीनामनादित्वे वेदस्यानादित्वान्नित्यत्वमपीति शङ्कानिरसनम्

एवन्तु वर्ण्यमाने संसारानादित्वं तावदुक्तं स्यात्। वेदस्यानादित्वं कर्मज्ञानानादित्वात् । यतश्च मीमांसकवर्त्मनैव प्रमाणता सिद्ध्यति नाप्तवादात्, तस्माद् यथोदाहृत एव मार्गः प्रमाणतायामनुवर्त्तनीयः । अथवा   10

वयमपि न विशिष्मोऽनादिसंसारपक्षं
युगपदखिलसर्गध्वंसवादे तु भेदः ।
अकथि च रचनानां कार्यता तेन सर्गात्   15
प्रभृति भगवतेदं वेदशास्त्रं प्रणीतम् ॥

अनादिरेवेश्वरकर्तृकोऽपि सदैव सर्गप्रलयप्रबन्धः ।
सर्गान्तरेष्वेव च कर्मबोधो वेदान्तरेभ्योऽपि जनस्य सिध्येत् ॥

---

धर्म इत्येवमादिरूपोऽनेकप्रकारो यस्याः । गुरुदारगमनादौ च विपर्ययात् । निषिद्धत्वेनाधर्मरूपेऽप्युपकारापेक्षया धर्मत्वप्राप्तेः ।   20

इष्टिसत्रादीति । इष्टयो दर्शपूर्णमासाद्याः सत्राणि द्वादशाहादीनि ।

युगपदखिलसर्गेति। अस्माकमप्यनादिरेव संसारः। कदाचित् तु युगपत् सर्वं प्रलीय पुनरुद्भवति । भवतान्तु क्रमेण सृष्टिप्रलयाविति विशेषः । अकथि च रचनानां कार्यता

अन्यत्वे किं प्रमाणं ननु तव सुमते किं तदैक्यप्रमाणं
ध्वस्तं तावत् समस्तं भुवनमिति तदा वेदनाशोऽप्यवश्यम् ।
एकस्त्वीशोऽवशिष्टः स च रचयति वा प्राक्तनं संस्मरेद् वा
वेदे स्वातन्त्र्यमस्मान्नियतमुभयथाप्यस्ति चन्द्रार्धमौले: ॥

5 एकस्य तस्य मनसि प्रतिभासमानो
वेदस्तदा हि कृतकान्न विशिष्यतेऽसौ ।
प्रत्यक्षसर्वविषयस्य तु नेश्वरस्य
युक्ता स्मृतिः करणमेव ततोऽनवद्यम् ॥

तेनाप्तनिर्मिततयैव निरत्ययार्थ-
10 सम्प्रत्ययोपजननाय जनस्य वेदे ।
शास्त्रं सुविस्तरमपास्तकुतर्कमूल-
मोहप्रपञ्चमकरोन्मुनिरक्षपादः ॥

## त्रय्याः प्रामाण्येऽपि नाथर्ववेदस्येति शङ्का

अत्र कश्चिदाह, युक्तमितरेतरव्यतिषक्तार्थोपदेशित्वेनैककर्तृकत्वानुमान-
15 द्वारकं त्रिवेद्याः प्रामाण्यम्, अथर्ववेदस्य तु त्रय्याम्नातधर्मोपयोगानुपलब्धेस्त्रयी-
बाह्यत्वेन (न?) तत् समानयोगक्षेमत्वम्। अनपेक्षत्वलक्षणप्रामाण्यपक्षेऽपि विक्षिप्त-

---

कथितेत्यर्थः। नेश्वरस्य युक्ता स्मृतिरिति। स्मृतिर्हि परोक्षे भवति, तस्य च सकलदर्शित्वात् तदानीमनुभव एव वैदिकानां शब्दानां वक्तव्यः। अनुभवाश्रयणे च वर्तमानकालविशिष्टस्यानुभवोऽङ्गीकार्यः तत्कालविशिष्टस्य वा ? तत्कालविशिष्टस्यानुभवे वर्तमाने सर्गे प्राणिनां वेदाग्रहणं स्यात्, वर्तमानकालविशिष्टस्य त्वनुभवे प्राक्तनादन्य-
20 त्वात् प्राङ्नीत्या शब्दानित्यत्वादवश्यमपूर्वकरणमेवायाति । संस्काराच्च ज्ञाने विनष्टे कालान्तरे संस्कारप्रबोधात् स्मृतिर्भवति, नित्यज्ञानत्वाच्च भगवतः कथं स्मृति-सम्भव इति ।

अनपेक्षत्वलक्षणप्रामाण्यपक्षेऽपीति । मीमांसकपक्ष इत्यर्थः । होत्रध्वर्य्वादि-
25 व्यापाराणां व्यतिषङ्गः परस्परसम्बन्धः ।

शाखान्तरोपदिष्टविशिष्टज्योतिष्टोमाद्यनेककर्मानुप्रविष्टहौत्राध्वर्यवादिव्यापारव्यतिषङ्गदर्शनात् तदर्था त्रय्येव यथा प्रमाणभावभागिनी भवितुमर्हति न तथा पृथग्व्यवहारा आथर्वणश्रुतिः। तथा च लोके चतस्र इमा विद्याः प्राणिनामनुग्रहाय प्रवृत्ता आन्वीक्षकी त्रयी वार्ता दण्डनीतिरिति प्रसिद्धिः।

श्रुतिस्मृती अपि तदनुगुणार्थे एव दृश्येते, श्रुतिस्तावद् "ऋग्भिः प्रातर्दिवि देव ईयते यजुर्वेदेन तिष्ठति मध्येऽह्नः सामवेदेनास्तमेति वेदैरशून्यस्त्रिभिरेति सूर्यः" इति, तथा "प्रजापतिरकामयत बहु स्यां प्रजायेयेति स तपोऽतप्यत स तपस्तप्त्वेमांस्त्रींल्लोकानसृजत पृथिवीमन्तरिक्षं दिवमिति तांल्लोकानभ्यतपत्तेभ्यस्त्रीणि ज्योतींष्यजायन्त अग्निरेव पृथिव्या अजायत वायुरन्तरिक्षाद्दिव आदित्य इति तानि ज्योतींष्यभ्यतपत् तेभ्यस्त्रयो वेदा अजायन्त अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात् सामवेद" इति, तथा 'सैषा विद्या त्रयी तपती'ति स्मृतिरपि मानवी प्रतिवेदं द्वादशवार्षिकब्रह्मचर्योपदेशिनी दृश्यते 'षाट्त्रिंशदब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतमि'ति। श्राद्धप्रकरणेऽपि

> यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम्।
> शाखान्तगमथाध्वर्युं छन्दोगं वा समाप्तिगमिति॥

त्रिवेदपारगानेव श्राद्धभुजो ब्राह्मणान् दर्शयति नाथर्ववेदाध्यायिनः। प्रत्युत निषेधः क्वचिदुपदिश्यते 'तस्मादाथर्वणं न प्रवृञ्ज्यादि'ति।

---

प्रजापतिरकामयतेति। बहुः स्यामेको वर्तमानोऽनेकः स्यामित्यर्थः। कथञ्च तथात्वमित्याह प्रजायेयेति भूतात्मनोत्पद्येयेत्यर्थः। स तपोऽतप्यत इति। तप इव तप इति 'तपः' शब्देन सङ्कल्पोऽभिहितः। सत्यसङ्कल्पत्वात् परमेश्वरस्य, तपसा यद्राप्यते तस्य सङ्कल्पमात्रेणैव सिद्धेः। उक्तञ्च "यस्य ज्ञानमयं तपः" इति। तपोऽतप्यत सङ्कल्पमकरोदित्यर्थः। तांल्लोकानभ्यतपत् सारोद्धरणायालोचयत्। षाट्त्रिंशदब्दिकमित्यस्योत्तरमर्धम् "तदर्धिकं पादिकं वा ग्रहणान्तिकमेव वा" इति। ब्रह्मचारिणा चर्यं चरणीयं ब्रह्म। क्व? गुरौ गुरुगृहे। किमर्थम्? त्रैवेदिकं त्रिवेदग्रहणार्थम्। किंकालावच्छिन्नम्? तदाह "षाट्त्रिंशदब्दिकम्" षट्त्रिंशतोऽब्दानां समाहारः षट्त्रिंशदब्दं तत्र भवं षाट्त्रिंशदब्दिकम्। "ग्रहणान्तिकमेव वा" इति यावता कालेन वेदत्रयं ग्रहीतुं शक्नोति तावन्तं कालमित्यर्थः। 'आथर्वणेन न प्रवृञ्ज्यात्' इति आथर्वणेन कर्मणा त्रय्युक्तं कर्म न प्रवृञ्ज्यान्न मिश्रयेदिति ब्राह्मण उपदेशः।

## पूर्वोक्तशङ्कायाः समाधानम्

एवमाक्षेपे सति केचिदाचक्षते

यदि यज्ञोपयोगित्वं नेहास्त्याथर्वणश्रुतेः ।
अर्थान्तरे प्रमाणत्वं केनास्याः प्रतिहन्यते ॥
शान्तिपुष्टचभिचारार्था एकब्रह्मर्त्विगाश्रिताः ।
क्रियास्तया प्रमीयन्ते त्रय्येवात्मीयगोचराः ॥ इति ।

एवं तत्तु सर्वं न साध्वभिधीयते । तथा हि 'तत्प्रमाणं बादरायणस्यानपेक्षत्वादि'ति य एष वेदप्रामाण्याधिगतौ जैमिनिना निरदेशि पन्थाः, यो वाक्षपादेन कणादेन प्रकटितः 'तद् वचनादाम्नायस्य प्रामाण्यमि'ति 'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यादि'ति स चतुर्ष्वपि वेदेषु तुल्यः । तत्र विशेषतुषोऽपि न कश्चिदस्ति प्रयत्नेनान्विष्यमाणः प्राप्यते । न हि मीमांसकपक्षे एवं वक्तुं शक्यते त्रय्येवानादिमती नाथर्वणश्रुतिः, तस्यां कर्त्तृस्मरणसम्भवादिति । नापि नैयायिकादिपक्षे एवं शक्यम् आप्तप्रणीतास्त्रयोवेदाश्चतुर्थस्तु नाप्तप्रणीत इति । तेन प्रामाण्याधिगमोपायाविशेषात् समानयोगक्षेमतया चत्वारोऽपि वेदाः प्रमाणम् द।

---

यदि यज्ञोपयोगित्वमिति । "क्रीतराजकभोज्यान्न" इत्येतद् वाक्यमथर्ववेदेऽरित । "अग्नीषोमीये संस्थिते दीक्षितस्य गृहे नाश्नीयात्" इत्येतच्च त्रय्यां श्रूयते । अथर्ववेदस्य यज्ञोपयोगशून्यत्वेन प्रामाण्यमेव नास्त्यतः कथमस्य त्रयीगतेन "अग्नीषोमीये संस्थि तेदीक्षितस्य गृहे नाश्नीयात्" इत्यनेन सह विरोध इत्याशङ्क्य तन्त्रटीकायामुक्तम्

क्रीतराजकभोज्यान्नवाक्यं चाथर्ववैदिकम् ।
न च तस्याप्रमाणत्वे किञ्चिदप्यस्ति कारणम् ॥

यज्ञानुपयोगः कारणमिति चेन्नेत्याह यदि यज्ञोपयोगित्वमिति । आत्मीयगोचरा इति । आत्मीयः स्वसम्बन्धी पदार्थो गोचरो विषयो यासाम् । यः पदार्थो यस्मिन् वेद उत्पन्नः स पदार्थस्तस्य वेदस्यात्मीयः, अतस्तेन वेदेन तत्पदार्थविषयाः क्रियाः । यथासौ पदार्थः क्रियतेऽनुष्ठीयते तथा प्रमीयते प्रतिपाद्यते नान्यपदार्थगोचराः । यथा यजुर्वेद उत्पन्नयोर्दर्शपूर्णमासयोः क्रिया यजुर्वेदेन प्रतिपाद्यते न सामवेदोत्पन्नस्य श्येनादेरिति । एकब्रह्मर्त्विगाश्रिता इति । ऋत्विगन्तरनिरपेक्षेण ब्रह्मणैव निर्वर्त्यन्ते याः ।

## व्यवहारादितोऽप्यथर्ववेदस्य प्रामाण्यम्

व्यवहारोऽपि सर्वेषां सारेतरविचारचतुरचेतसां चतुर्भिरपि वेदैश्चतुर्णां वर्णा-
नामाश्रमाणाश्चतसृषु दिक्षु चतुरब्धिमेखलायामवनौ प्रसिद्ध इति कोऽयमत्रान्यथा-
त्वभ्रमः ? श्रुतिस्मृतिमूलश्चार्यावर्त्तनिवासिनां भवति व्यवहारः। ते च श्रुतिस्मृती
चतुरोऽपि वेदान् समानकक्षानभिवदतः। ऋग्यजुःसामवेदेष्वपि अथर्ववेदाशंसीनि 5
भूयांसि वचांसि भवन्ति। तद् यथा शतपथे अथ तृतीयेऽहनीत्युपक्रमस्याश्वमेधे
पारिप्लवोपाख्याने 'सोऽयमाथर्वणो वेद' इति श्रूयते, छान्दोग्योपनिषदि च
"ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ" इति पठ्यते।

नन्वितिहासपुराणानि पञ्चम इति तत्र पठ्यत एव किञ्चातः ? किमि-
यताथर्वणश्चतुर्थो न भवति वेदः ? चतुर्थशब्दोपादानादितिहासादितुल्योऽसौ न 10
वेदसमानकक्ष इति चेत्, केयं कल्पना ? चतुर्थशब्दोपादानादप्राधान्ये 'त्रयो वेदा
असृज्यन्त, इत्यादौ त्रित्वसंख्योपादानात् तेऽपि न प्रधानतामधिगच्छेयुः?इतिहासादि-
भिर्वा सह परिगणनमप्राधान्यकारणं यदुच्यते तदपि सर्ववेदसाधारणमिति यत्कि-
ञ्चिदेतत्। तथा शताध्ययनेऽपि 'ऋचो वै ब्रह्मणः प्राणाः, इत्यभ्युपक्रम्य 'आथर्वणो वै
ब्रह्मणः समान' इति पठ्यते, तथा 'येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्योदीच्यो मधु- 15
नाड्योऽथर्वाङ्गिरस एव मधुकृत' इति, तथा तैत्तिरीये 'तस्माद् वा एतस्मात् प्राणमया-
दन्योऽन्तर आत्मा मनोमयः' इति प्रस्तुत्य 'तस्य यजुरेव शिरः ऋग् दक्षिणः पक्षः सामो-
त्तरः पक्षः आदेश आत्माथर्वाङ्गिरसः पुच्छं प्रतिष्ठा'इति पठ्यते, तथान्यत्र 'ऋचां

---

अश्वमेधे पारिप्लवोपाख्यान इति। तत्र राजानमभिषिञ्चतीति राज्ञोऽभिषेक-
समयेऽभिषेचनीयेष्टिक्रमे आख्यानानि सन्तीति। हरिश्चन्द्रोपाख्यानं शौनकोपाख्यानं 20
विशिष्टर्षिराजचरितसम्बन्धा ग्रन्थविशेषाः पाठ्यत्वेन चोदिताः, तत्र च पारिप्लवो-
पाख्यानस्याथर्ववेदतया स्तुतिः कृता।

तथा येऽस्य प्रत्यञ्चो रश्मय इति। तत्र 'आदित्यो वै देवमध्वि'ति प्रकृते येऽस्य
देवमध्वात्मन आदित्यस्य। मधुनाड्यो नु मधुधारिण्यः ऋच एव पुष्पं मधुजनकम्।
अथर्वाङ्गिरस इत्यथर्ववेदमन्त्राणामाख्या। अथर्वाङ्गिरस एव मधुकृत इत्यत्रेतिहास- 25
पुराणं पुष्पमिति ग्रन्थशेषः। मनोमय इति। आशुगतित्वाद्। पुरुषविधतां रूपयित्वा
तदवयवविभागमाह यजुरेव शिर इत्यादि। आदेशः "आदित्यो वै ब्रह्म" इत्यादिको

प्राची महती दिगुच्यते दक्षिणामाहुर्यजुषाम् साम्नामुतराम् अथर्वणामङ्गिरसां प्रतीची महती दिगुच्यते, इति, शतपथे ब्रह्मयज्ञविधिप्रक्रमे "मध्यमे पय आहुतयो वा एता देवानां यदृचः' इत्युपक्रम्य 'मेद आहुतयो वा एता देवानां यदथर्वाङ्गिरसः स्म य एवं विद्वानथर्वाङ्गिरसोऽहरहः स्वाध्यायमधीते मेद आहुतिभिरेव देवान् स
5 तर्पयति त एनं तृप्तास्तर्पयन्ति' इति मन्त्रा अपि तदर्थप्रकाशनपरा अनुश्रूयन्ते। "त्वामग्ने पुष्करादध्यथर्वा निरमन्थत" इत्यादयो न चैषामथर्वा नाम कश्चिदृषि-रित्येवम्प्रकारं व्याख्यानं युक्तम्, अन्यत्राप्यसमाश्वासप्रसङ्गात्। इत्येवञ्जातीय-कास्तावदुदाहृताः श्रुतिवाचः। स्मृतिवाक्यानि खल्वपि, मनुस्तावत् "श्रुतीरथ-र्वाङ्गिरसीः कुर्यादित्यभिचारयन्" इति श्रुतिशब्देन त्रयीवद् व्यवहरति।
10 याज्ञवल्क्यः चतुर्दशविद्यास्थानानि गणयन्

पुराणतर्कमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ।। इति

चतुर एव वेदानावेदयते, नान्यथा हि चतुर्दशसंख्या पूर्यते, स्मृत्यन्तरे च स्पष्टमेवोक्तम्

---

15 रहस्यविधिरूपो अंशविशेषः। **प्रतिष्ठेति**। पुच्छे हि सति लब्धप्रतिष्ठो भवति। **ब्रह्म-यज्ञविधिप्रक्रम** इति। ब्रह्मयज्ञो यत्र वेदाध्ययनमेव विशिष्टयेतिकर्तव्यतया क्रियते। तत् क्रियमाणं यज्ञशब्दवाच्यम्। **त्वामग्नेपुष्करादिति**। "त्वामग्ने पुष्करादध्यथर्वा निरमन्थत। मूर्ध्नो विश्वस्य वाघतः" इत्यग्निनिर्मथने मन्त्रः। अत्राथर्वशब्देनाथर्वविद् ब्रह्माभिहितः। हे अग्ने त्वां पुष्करादरणिषु शिरारूपादाकाशाद् अथर्वा अथर्वविद्
20 ब्रह्मा निरमन्थत निर्मथितवानुदपादयत्। अरणिस्पर्शनरूपव्यापारवत्त्वेन तत्कर्मणि तस्य मुख्यत्वात्। कथञ्च निरमन्थत ? अधि आधिपत्येन युक्तः, ऋत्विगन्तराणामनु-ज्ञादानेन तस्य प्रशास्तृत्वात्। तदनन्तरन्तु विश्वस्य मूर्ध्नो मूर्धानः प्रधानभूता वाघत ऋत्विजोऽग्निं निर्मथितवन्तः, होत्रादयः वाघत ऋत्विजः, 'ऋत्विजो भरताः कुरवो वाघतः' इति ऋत्विङ्नामसु पाठात्। अत्र ब्रह्मण ऋत्विक्त्वेऽपि मुख्यत्वेन पृथङ्निर्देशो
25 'ब्राह्मणा आगता वशिष्ठाश्च' इतिवत्। **श्रुतीरथर्वाङ्गिरसीरित्यस्यान्त्यमर्धम्** 'वाक्छस्त्रं ब्राह्मणस्य तेन हन्यादरीन् द्विजः' इति। वागत्राभिचाररूपा विवक्षिता। अथर्वमन्त्रैराभिचारिकैः शत्रूनभिचरेदित्यर्थः। **कुर्यात्** प्रयुञ्जीत।

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश ॥ इति ।

अन्यत्राप्युक्तम् 'पुराणं धर्मशास्त्रं मीमांसा न्यायश्चत्वारो वेदाः षडङ्गानीति चतुर्दश विद्यास्थानानी'ति । शातातपोऽप्याह

ऋक्सामयजुरङ्गानामथर्वाङ्गिरसामपि ।
अणोरप्यस्य विज्ञानाद् योऽनूचानः स नो महान् ॥ इति ।

तथान्यत्र 'चत्वारश्चतुर्णां वेदानां पारगा धर्मज्ञाः परिषदि'त्युक्तम् । शङ्खलिखितौ च 'ऋग् यजुः सामाथर्वविदः षडङ्गविद् धर्मविद् वाक्यविद् नैयायिको नैष्ठिको ब्रह्मचारी पञ्चाग्निरिति 'दशावरा परिषदि'त्यूचतुः । प्राचेतसे 'चत्वारो वेदविदो धर्मशास्त्रविदिति पञ्चावरा परिषदि'त्युक्तम् । तथा च पङ्क्तिपावनप्रस्तावे चतुर्वेदः षडङ्गवित् ज्येष्ठसामगोऽथर्वाङ्गिरसोऽप्येते पङ्क्तिपावना गण्यन्ते । तदयमेवमादिवेदचतुष्टयप्रतिष्ठाप्रगुण एव प्राचुर्येण धर्मशास्त्रकाराणां व्यवहारः । अन्येऽपि शास्त्रकारास्तथैव व्यवहरन्तो दृश्यन्ते । यथा च महाभाष्यकारो भगवान् पतञ्जलिरथर्ववेदमेव प्रथममुदाहृतवान् 'शन्नो देवीरभिष्टये, इति, मीमांसाभाष्यकारेणापि वेदाधिकरणे 'काठकं कालापकं मौद्गलं पैप्पलादकम्' इति यजुर्वेदादिकवद्अथर्व-

---

अणोरप्यस्य विज्ञानादिति न केवलम्, अपि तु

न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः ।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥ इति ।

'वर्षादिकृतज्यैष्ठ्यव्यतिरेकेण साङ्गवेदाध्ययनबललब्धानूचानव्यपदेशो नोऽस्माकं महान् ज्यायान्' इत्येवम् ऋषयो धर्ममर्यादां कृतवन्तः । यावदस्य पूर्वोक्तस्य ऋगादेः सम्बन्धिनोऽणोरपि स्वल्पस्यापि अर्थद्वारेण विज्ञानादपि यो लब्धानूचानव्यपदेशः सोऽपि नो महानिति ऋषयो धर्मं चक्रिर इत्यर्थः ।

नैष्ठिको ब्रह्मचारी यो ब्रह्मचर्येणैव शरीरं निष्ठाम् अन्तं नयति । पञ्चाग्निः सभ्यावसथ्याभ्यां सह त्रेतया । वेदाधिकरण इति । यत्र 'वेदांश्चैके सन्निकर्षं पुरुषाख्या' इति कठादिकृतत्वेन काठकादिसमाख्यावशात् कृतकत्वेन वेदानां पूर्वपक्षः कृतः, वेदांश्चैके सन्निकर्षं सन्निकृष्टकालभवं वाक्यजातं मन्यन्ते । यतः पुरुषैः काठकादिभिस्तस्य

वेदेऽपि पैप्पलादकमुदाजह्रे। सर्वशाखाधिकरणेऽपि वेदान्तरशाखान्तरवन्मौद्गल-
पैप्पलादकाख्ये अथर्वशाखे अप्युदाहृत्य विचारः कृतः। तथा च प्रथमयज्ञो नाम
चतुर्षु वेदेषु न कश्चिदस्तीत्यधिकरणान्तरे एव लिखितम्। एवं श्रुतिस्मृतिशिष्टा-
चारव्यवहारविदामत्र विप्रतिपत्तिसम्भावनैव नास्ति।

5 आह, न ब्रूमोऽथर्ववेदो न प्रमाणमिति, किन्तु त्रयीबाह्य इति। उच्यते।
त्रयीयमथर्ववेदबाह्यैव न केवलम्, एवं त्रय्यामपि परस्परबाह्यत्वमस्त्येव। ऋक्सा-
मबाह्यानि यजूंषि, यजुःसामबाह्या ऋचः, ऋग्यजुर्बाह्यानि सामानीति किया-
नयं दोषः ? सर्वभावानामितरेतरसाङ्कर्यरहितत्वात्। ये हि शब्दात्मानो ग्रन्थसंदर्भ-
स्वभावा ये च तदभिधेया अर्थस्वभावास्ते सर्वेऽन्योन्यसंमिश्रितात्मान एव। न च
10 परेणात्मानममिश्रयन्तोऽपि ते स्वरूपमपि हारयन्तीति।

अथोच्यते नेदृशं त्रयीबाह्यत्वमथर्ववेदे विवक्षितम्, अपि तु यदेष न त्रयी-
प्रत्ययं कर्मोपदिशति न तत्सम्बद्धं किञ्चिदिति तदस्य त्रयीबाह्यत्वमिति। एतदपि

---

आख्येति, ततः सिद्धान्तितम् 'आख्या प्रवचनात्' इति। प्रवचननिमित्ताप्याख्या भवति
न केवल कर्तृनिमित्ता। यतः कठेन प्रकर्षेणाध्ययनमस्य कृतमतः काठकमित्यभिधीयते,
15 "तेन प्रोक्तम्" इति प्रोक्तेऽपि तद्धितस्मरणात्। सर्वशाखाधिकरणेऽपीति। सर्व-
शाखाधिकरणं यत्र प्रतिशाखं श्रूयमाणानि अग्निहोत्रादिकर्माणि किमन्यान्यानि आहो-
स्विद् एकमेव तत्कर्मेति चिन्त्यते। तत्र काठकं कालापकमित्याद्यभिधानाद् भेदः,
क्वचिदग्नीषोमीय एकादशकपालः श्रूयते क्वचिद् द्वादशकपाल इत्यादिरूपभेदादिभ्यश्च
भिन्नत्वमिति पूर्वपक्षमाशङ्क्य सर्वशाखास्वेकतया प्रत्यभिज्ञायमानत्वात् सर्वशाखा-
20 पेक्षोत्पत्तिकं सर्वशाखाप्रत्ययमेकं कर्मेति व्यवस्थापितम्। अधिकरणान्तर इति।
"सङ्ख्यायुक्तं क्रतोः प्रकरणात्" इत्यत्र। अत्र हि "एष वाव प्रथमो यज्ञानां यज्ज्योति-
ष्टोमः" इति वचनसमाश्रयणेन ज्योतिष्टोमस्य प्रथमयज्ञत्वं पूर्वपक्षे व्यवस्थाप्य सिद्धान्ते
प्रथमप्रयोगाभिप्रायेण प्रथमयज्ञशब्दो निरूपितः 'प्रथमं प्रयुज्यमानो यज्ञः प्रथमयज्ञः'
इति। अत्र प्रसङ्गे चेदनुक्तम् "न चैतदस्ति यज्ञस्यैष वाद इति। चतुर्ष्वपि वेदेषु न
25 प्रथमयज्ञ इत्येवंसंज्ञकः कश्चिद् यज्ञोऽस्ति" इति।

न त्रयीप्रत्ययमिति त्रयीप्रत्ययं त्रयीप्रतिपाद्यम्। तत्सम्बद्धम् त्रयीप्रत्यय-

न साधूपदिष्टम्। इष्टिपश्वेकाहाहीनसत्रादिकर्मणां तत्रोपदेशदर्शनात्। सर्वशाखाप्रत्ययमेकं कर्मेति न्यायात् त्रय्युपदिष्टेऽपि कर्मणि अथर्ववेदात्। सम्बद्धसर्वशाखाप्रत्ययमेव नाथर्वशाखाप्रत्ययम्, यतः सोमयागादिकर्मणामृग्वेदेन हौत्रं यजुर्वेदेनाध्वर्यवं सामवेदेनौद्गात्रं क्रियते नाथर्ववेदेन किञ्चिदिति। तदयुक्तम्, अथर्ववेदेन ब्रह्मत्वस्य करणात्। तथा च गोपथब्राह्मणम् 'प्रजापतिः सोमेन यक्ष्यमाणो वेदानुवाच कं वो होतारं वृणीयमि'ति प्रक्रम्य 'तस्मादृग्विदमेव होतारं वृणीष्व स हि हौत्रं वेद यजुर्विदमेवाध्वर्युं वृणीष्व स हि आध्वर्यवं वेद सामविदमेवोद्गातारं वृणीष्व स हि औद्गात्रं वेद अथर्वाङ्गिरोविदमेव ब्रह्माणं वृणीष्व स हि ब्रह्मत्वं वेदे'ति। एवमभिधाय पुनराह 'अथ चेन्नैवंविधं होतारमध्वर्युमुद्गातारं ब्रह्माणं वा वृणुते पुरस्तादेव वैषां यज्ञो रिच्यते इति तस्मादृग्विदमेव होतारं कुर्याद् यजुर्विदमेवाध्वर्युं सामविदमेवोद्गातारम् अथर्वाङ्गिरसोविदमेव ब्रह्माणमि'ति। तथा 'यज्ञे यदूनं च विरिष्टं च यातयामं च करोति तदथर्वणां तेजसाप्याययतीति। अथ नर्ते भृग्वङ्गिरोविद्भ्यः सोमः पातव्य' इति।

नन्वेताः श्रुतीरथर्वाण एवाधीयते नान्ये त्रयीविदः। ते त्वेवं पठन्ति 'यदृचा हौत्रं क्रियते यजुषाध्वर्यवं साम्ना औद्गात्रम्। अथ केन ब्रह्मत्वं क्रियते इति त्रय्या

---

सम्बद्धम्। इष्टिपश्विति। इष्टयः दर्शपूर्णमासाद्याः। पशवोऽनूबन्ध्याद्याः। एकाहा ज्योतिष्टोमादयः। अहीना अहर्गणद्विरात्रादयः। सत्राणि द्वादशाहादीनि। त्रय्युपदिष्टेऽपि कर्मणि अथर्ववेदादिति। तस्माद् ब्रह्मा पुरस्ताद् होमसंस्थितहोमैर्यज्ञं परिगृह्णीयादित्यनारभ्य वाक्यमिष्टिपशुसोमादिष्वाथर्वणं पुरस्ताद्धोमं संस्थितहोमं च ब्रह्मणा क्रियमाणं दर्शयति, अथर्ववेद एव तयोर्होमयोराम्नानादिति। वेदानुवाच कं वो होतारमित्यत्र कं किंज्ञमिति व्याख्येयम्, उत्तरे ऋग्विदमित्यादिश्रवणात्। वः युष्माकं मध्यात् किंज्ञं वृणोमीत्यर्थः। पुरस्तादेवैषां यज्ञो रिच्यते प्रथमत एव रिक्तो भवति। यज्ञे यदूनमिति। ऊनमङ्गैरसम्पूर्णम्। विरिष्टं विशेषेण रिष्टं, हिंसितमसम्यक्कृतमन्त्रादिप्रयोगम्। यातयामं निर्वीर्यम्। अथर्वणां मन्त्राणाम्। नर्ते भृग्वङ्गिरोविद्भ्य इति। यावद् भृग्वङ्गिरोविद ऋत्विजो ब्रह्माख्या न भवन्ति तावदन्यवेदविदि सत्यपि ब्रह्मणि सोमपानाधिकारो नास्तीत्यर्थः।

विद्ययेति ब्रूयादिति। तथा च यदृचैव हौत्रमकुर्वत यजुषाध्वर्यवं साम्नौद्गात्रं यदेव त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वमिति'।

उच्यते। वयमप्येवमादीनि वाक्यानि न नाधीमहि किन्त्वेषामयमेवार्थोऽथर्वाङ्गिरोविदेव ब्रह्मेति। कथम् ? यतो न त्रयी नाम किमपि वस्त्वन्तरम्, अपि 5 तु त्रयाणां वेदानां समाहार इति। समाहारश्च समाह्रियमाणनिष्ठो भवति। समाह्रियमाणाश्च ऋग्वेदादयस्त्रयो हौत्रादिपरत्वे चरितार्था न पुनस्तत्र भेदमर्हन्ति। एकैकशः चरितार्थानां समुदायोऽपि चरितार्थ एव। समुदायबुद्धौ हि विभज्यमानायां समुदायिन एव प्रस्फुरन्ति नावयविवदर्थान्तरम्, ते चान्यत्र व्यापृताः। किं नु खलु ऋग्वेदादीनां ब्रह्मत्वं कुर्वतामतिभारो भवति ? न ब्रूमोऽतिभार इति। 10 किन्तु त्र्यात्मकत्वेन ब्रह्मत्वकर्त्तव्यतोपदिश्यते। त्र्यात्मकश्चान्यतमोऽपि तेषां न भवति वेदः। अथर्ववेदस्तु त्र्यात्मक एव। तत्र हि ऋचो यजूंषि सामानि इति त्रीण्यपि सन्ति। तेन ब्रह्मत्वं क्रियमाणं त्रय्या कृतं भवति।

ननु यस्त्रीन् वेदानधीते तेन चेद् ब्रह्मत्वं क्रियेत तत् किं तया न कृतं भवति ? बाढमित्युच्यते। सोऽपि 'एकस्मै वा कामायान्ये यज्ञक्रतवः समाह्रियन्ते सर्वेभ्यो 15 ज्योतिष्टोमः सर्वेभ्यो दर्शपूर्णमासावि'ति श्रुतावपि योगसिद्ध्यधिकरणन्यायेनान्यतममेव बुद्धावादाय विदध्यान्न समुदायं बुद्धावारोपयितुं शक्नुयादित्येकेनैतत् कृतं भवति न त्रय्येति।

नन्वन्येऽपि त्र्यात्मका वेदाः, यद्येवं सुतरामथर्ववेदो न पृथक् करणीयः, सर्वेषां रूपाविशेषात्। तेषां पृथक्प्रतिष्ठैः स्वैः स्वैर्ऋगादिभिरेव व्यपदेश इति

---

20 योगसिद्ध्यधिकरणन्यायेनेति। योगसिद्ध्यधिकरणे हि 'एकस्मै वा कामायान्या इष्टय आह्रियन्ते, सर्वेभ्यो दर्शपूर्णमासौ, एकस्मै वान्ये क्रतवः कामायाह्रियन्ते सर्वेभ्यो ज्योतिष्टोमः'' इति श्रुतिवाक्यमुदाहृत्य चिन्तितम् 'किं सकृत्प्रयोगे सर्वे कामा उत पर्यायेण इति'। तत्र सकृत्प्रयोगेणेति पूर्वं पक्षितम्, सर्वनिमित्तत्वेन श्रवणात्; कः खलु विशेषोऽयं भवत्ययं न भवतीति। तथा चाह ''तत्र सर्वे अविशेषात्'' इति। ततः 25 सिद्धान्तितं ''योगासिद्धिर्वार्थस्योत्पत्तियोगित्वात्'' इति। अस्यार्थः, न वा सर्वे कामा युगपत्, पर्यायेण योगसिद्धिः कामसम्बद्धसिद्धिः। यदा यदा यः कामस्तदा तदा तस्य सिद्धिरित्यर्थः। अर्थस्य कामस्य युगपदुत्पत्तेरसम्भवाद्विरोधाच्च। न हि आयुष्कामना-

न ते समुदायशब्दव्यपदेश्याः । यत्तु वाक्यान्तरे 'त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वमि'ति तत्रेयं चतुर्थी षष्ठ्याः स्थाने प्रयुक्ता । शुक्रमिति सारमाचक्षते । तेन त्रयीविद्यायाः सारेण ब्रह्मत्वं क्रियते इत्युक्तं भवति । न च त्रय्येव त्रय्याः शुक्रं भवति न चात्यन्तं ततोऽर्थान्तरमेव । तेनेदमथर्ववेदात्मकमेव त्रय्याः शुक्रम् । शुक्रमिति च गुह्यमाहुः, अथर्वशब्दोऽपि रहस्यवचनो 'यज्ञाथर्वाणं वै काम्या इष्टय' इति । तेन त्रयीशुक्ररूपेणाथर्ववेदेन ब्रह्मत्वमितीत्थमथर्ववेदस्य न त्रयीबाह्यत्वम् । इत्थं सर्वशाखाप्रत्ययमेकं कर्मेति न सर्वशब्दः सङ्कोचितो भवति । अत एव ब्रह्मवेदोऽथर्ववेद इति पूर्वोत्तरब्राह्मणे पठ्यते ऋग्वेदो यजुर्वेदः सामवेदः ब्रह्मवेद इति । तथा च काठकशताध्ययने 'ब्राह्मणे ब्रह्मौदने श्रूयते ब्रह्मवादिनो वदन्ति पुरा वा औद्दालकिरारुणिरुवाच ब्रह्मणे त्वा प्राणाय जुष्टं निर्वपामि ब्रह्मणे त्वा व्यानाय जुष्टं निर्वपामि'इत्युपक्रम्य 'आथर्वणो वै ब्रह्मणः समानोऽथर्वणमेवैतज्जुष्टं निर्वपति ततश्चतुः शरावो भवति चत्वारो हीमे वेदास्तानेव भागिनः करोति मूल वै ब्रह्मणो

---

मरणकामनाद्याः सर्वा युगपद् उत्पत्तुमर्हन्ति, तथाविधानां विरुद्धानामिच्छानां युगपदुत्पादादर्शनात् ।

**यज्ञाथर्वाणं वै काम्या इष्टयः** 'चित्रया यजेत पशुकामः' इत्याद्याः । यज्ञा अथर्वयज्ञा रहस्ययज्ञा इत्यर्थः । **न सर्वशब्दः सङ्कोचितो भवति** । अशेषवेदवृत्तेरेकपरिहारेण वृत्तिः सङ्कोचः । **पूर्वोत्तरब्राह्मणे** यत्र 'ऋग्वेदः किं वेद' इति पूर्वमभिधाय 'हौत्रं वेद' इत्युत्तरम् । **ब्रह्मोदने श्रूयत इति** । ब्रह्मौदनाख्ये चरौ, स हि ऋत्विगुद्देशेन क्रियते न देवतान्तरोद्देशेन, 'यद् ऋत्विजः प्राश्नन्ति तद् ब्रह्मौदनस्य ब्रह्मौदनत्वम्' इति वचनाद् ऋत्विक्संस्कारार्थत्वं तस्य, न यागद्रव्यत्वम्; अतश्चतुःशरावनिर्वापेष्टौ हुत्वा ऋत्विज उद्देश्याः । **ब्रह्मणे त्वा प्राणाय जुष्टं निर्वपामि, ब्रह्मणे त्वा व्यानाय जुष्टं निर्वपामि**, ब्रह्मणे त्वापानाय जुष्टं निर्वपामि ब्रह्मणे त्वा समानाय जुष्टं निर्वपामीत्यभिधायाह 'श्रुता या देवतास्तासामेवैतज्जुष्टं निर्वपति, ऋचो वै ब्रह्मणः प्राणाः, ऋचामेवैतज्जुष्टं निर्वपति; यजूंषि वै ब्रह्मणो व्यानो, यजुषामेवैतज्जुष्टं निर्वपति; सामानि वै ब्रह्मणोऽपानः, साम्नामेवैतज्जुष्टं निर्वपति; अथर्वाणो वै ब्रह्मणः समानः, अथर्वणामेवैतज्जुष्टं निर्वपति, इति । **ततश्चतुःशरावो भवतीत्याह** । यतश्च मूलं ब्रह्मणो वेदाः, वेदानां मूलम् ऋत्विजोऽतो यद् ऋत्विग्भ्यो दत्तं तद्वेदेभ्यो दत्तं भवतीत्यत आह—'चतुःशरावो भवति' इति । **चत्वारो हीमे वेदास्तानेव भागिनः करोतीति** ।

**वेदाः वेदानामेतन्मूलं यदृत्विजः प्राश्नन्ति तद् ब्रह्मौदनस्य ब्रह्मौदनत्वमि'ति। तथा सामवेदे पृष्ठचस्य चतुर्थेऽहन्यार्भवे पवमाने आथर्वणे साम्नौद्गात्रं यत्तद्विधाने श्रूयते चतुर्णिधनं भवति चतूरात्रस्य धृत्यै चतुष्पदानुष्टुभा अनुष्टुभमेवैतदहर्यच्चतुर्थं भेषजं वाथर्वाणं तद्धि भैषज्यमेव तत् करोत्याथर्वणानि यागभेषजानीत्येतदालम्बनेयं स्तुतिरत एव प्रागुक्तम् 'यज्ञे यद्व्रनश्च विरिष्टश्च यातयामश्च करोति तदथर्वणा तेजसाप्याययती'ति। तस्मादाथर्वण एव ब्रह्मेति। एतच्च शास्त्रान्तरे विस्तरेणाभियुक्तैर्युक्तिभिरुपपादितमिति नेहात्यन्ताय प्रतायते।**

---

स्तुतिरियम्, तस्य प्रतिवेदमेकैकशरावापेक्षया यश्चतुःशराव उक्तः। चत्वारः शरावा व्रीहीणामत्र निरूप्यन्ते व्रीहिपूर्णाच्छकटादुद्ध्रियन्ते, जुष्टं सेवितम्, तदुद्देशेन निरुप्यते। **पृष्ठचस्य चतुर्थेऽहनीति**। द्वादशाहेन प्रजाकामं याजयेदिति। द्वादशाहमध्ये पृष्ठचः षडह आम्नातः, पृष्ठचः पृष्ठयाख्यस्तोत्रविशेषोपलक्षितः। तथा च द्वादशाहेऽहः क्लृप्तिः, प्रायणीयोऽतिरात्रः, पृष्टचः षडहः, त्रयश्छन्दोगा अविवाक्यमहरुदयनीयोऽतिरात्र इति। **आर्भवे पवमान** इति। तृतीयसवनभाविनि पवमानाख्ये स्तोत्रविशेषे। **चतुर्णिधनं'** चत्वारि निधनानि गानभक्तिविशेषा यत्र। **चतूरात्रस्य** षडहसम्बन्धिनोऽनुष्ठितस्य। **धृत्यै** प्रतिष्ठायै। **चतुष्पदानुष्टुभा** चतुष्पादानुष्टुप्छन्दोऽत्र प्रयुज्यते। यदत्र कर्मण्याथर्वणं भवति तद् **भैषज्यमेव**। यज्ञे तन्निर्वहणमेव करोति यतो **भेषजं वा**। **आथर्वणानीति**। यागभैषजान्येतानि यदाथर्वणानि कर्माणीत्यर्थः। ननु "नर्ते भृग्वङ्गिरोविद्भ्यः सोमः पातव्यः" इत्यस्याथर्ववेदविदं ब्रह्माणं विना न सोमः पातव्य इत्यर्थो व्याख्यातो, भृग्वङ्गिरोरूपाणां मन्त्राणामथर्ववेद एव पाठादिति। तच्चायुक्तम्, ऋग्वेदे यजुर्वेदे च भृग्वङ्गिरा नाम कश्चिद् ऋषिस्तेन दृष्टानां मन्त्राणां दर्शनादिति। "नैतदेवम्, 'ऋग् यजुः सामान्युपक्रान्ततेजांस्यासंस्तत्र महर्षयः परिवेदयांचक्रुः" इत्यारभ्य 'नर्ते भृग्वङ्गिरोविद्भ्यः सोमः पातव्यः' इत्यनेनाभिधानात्; गोबलीवर्दन्यायेन भृग्वङ्गिरोमन्त्रा अथर्वमन्त्रेष्वेव वर्तन्ते" इत्याक्षेपप्रतिसमाधाने वक्तव्ये सतीत्थं किमिति नोक्तम्। तथा "यदेतत् त्रय्यै विद्यायै शुक्रम्" इत्यस्य यथाश्रुतचतुर्थ्यन्तस्य व्याख्यानान्तरमपि कुर्वन्ति। शुक्रं सारभूतोऽयमथर्ववेदो ब्रह्मवेदस्तेन ब्रह्मत्वं कुर्यात्। किमर्थम्? 'त्रय्यै त्रयीगतभ्रेषनिवर्हणार्थम्" इत्याद्यन्यदपि बहुवक्तव्यमत्रास्ति, तत्कथं ग्रन्थकृता नोक्तमित्याशङ्क्याह **एतच्च शास्त्रान्तरे विस्तरेणेति**।

यत्तु 'नाथर्वणेन प्रवृञ्ज्यादि'ति तत् कल्पसूत्रवाक्यत्वाद् वेदविरुद्धमित्यनादृतम्। अथापि श्रौतमिदं वाक्यम् ? तदापि प्रकरणाधीतं चेत्तत्र क्वचित् कर्मणि निवेक्ष्यते। अनारभ्यवादपक्षेऽपि पूर्वोक्तवाक्यविसदृशार्थत्वादथर्ववेदस्य च त्रयीबाह्यत्वेन सम्पर्कपरिहारार्हत्वान्नियतविषयमेव व्याख्यास्यते।

यदप्युच्यते 'उच्चैर्ऋचा क्रियते उच्चैस्साम्नोपांशु यजुषे'तिवदथर्वधर्मोऽपि न कश्चिदाम्नात इति, तदप्यसारम्। मन्त्रधर्मो ह्ययमुपदिश्यते न वेदधर्मः। मन्त्रब्राह्मणसमुदायस्वभावा हि चत्वार इमे वेदग्रन्थाः। मन्त्रास्तु ते गद्यपद्यभेदाद् द्विधैव। गद्यबन्धो यजुरुच्यते पद्यबन्ध ऋगिति गीतिनिबन्धनन्तु भेदान्तरं सामेति। अत एव जैमिनिना मन्त्रविभागं प्रस्तुत्य तेषामृग् यत्रार्थवशेन पादव्यवस्था, गीतिषु सामाख्या, शेषे यजुः शब्दः, इत्थमेव तेषां त्रैविध्यमुपपादितम्। तेषामेव चायमुच्चैरादिधर्मो न वेदशब्दवाच्यानां मन्त्रब्राह्मणसमुदायात्मनां ग्रन्थानाम्। अथर्ववेदेऽपीयं त्रिविधैव मन्त्रजातिरिति तत्रापीदं धर्मजातमुपदिष्टं भवति। मन्त्रविभागकृत एवायं त्रयीव्यपदेश इति। तच्च 'सैषा त्रयी विद्या तपती'त्याद्यपि न विरोत्स्यते। एवं ऋग्यजुःसामसमुदायात्मकमन्त्रोपबन्धात् त्रय्यन्तर्गतश्च अथर्ववेदः पृथग्व्यवस्थितग्रन्थसन्दर्भस्वभावत्वाच्च भिन्न इति स्थितम्।

---

वेदविरुद्धमित्यनादृतम्। कल्पसूत्राणां वेदविरोधे दुर्बलत्वान्मीमांसकैश्चाविरोधेऽपि तेषां प्रामाण्यानभ्युपगमात्। अनारभ्यवादपक्ष इति। 'अनारभ्याधीतानां प्रकृतिगामित्वम्' इति यद्यपि प्रकृतौ निविशते तथापि प्राङ्न्येनाथर्वविदो ब्रह्मत्वप्रतिपादनादथर्वविहितेन कर्मणा सम्पर्को दुष्परिहर इति नियतकर्मैकदेशविषयतया तद् व्याख्येयमिति तात्पर्यम्।

तेषामृगिति। अर्थवशेन तथा 'अग्निमीळे पुरोहितम्' इति। अत्र क्रियाकारकलक्षणार्थपरिसमाप्तेः पादव्यवस्था। ननु तर्हि "अग्निः पूर्वेभिर्ऋषिभिः' इत्यत्र क्रियापदाश्रवणात् पादव्यवस्था न प्राप्नोति। उक्तमत्र भाष्यकृतैवार्थग्रहणम् अत्रानुवादो वृत्तवशेनापि भवतीति। गीतिषु सामाख्येति। यस्याम् ऋचि सामोत्पन्नं सा शुद्धा पठ्यमाना न सामशब्दव्यपदेशं लभते। तच्च साम ऋगन्तरेऽपि गीतं तच्छब्देन व्यपदिश्यते। तथाहि रथन्तरमनेन श्लोकेन गीतमिति व्यवहारस्तदेवमन्वयव्यतिरेकाभ्यां गीतेरेव सामत्वं न ऋग्विशेषस्य। शेषे यजुरिति या न गीतिर्न च ऋक् तत्र 'यजुः' शब्दः।

अन्ये पुनः ऋक्प्रचुरत्वात्, प्रविरलयजुर्वाक्यत्वाद्, गीयमानसाममन्त्रतावशाच्च ऋग्वेदमेवाथर्ववेदमाचक्षते । अयमपि पक्षोऽस्तु न कश्चिद्विरोधः ।

यत् पुनरभिधीयते वेदशब्दस्त्रयाणामेव वाचको न चतुर्थस्येति । सोऽयमत्युत्कटो द्वेषः, वृद्धव्यवहारो ह्यत्र प्रमाणम् । वेदोऽयं ब्राह्मणोऽयमिति तत्र तत्र
5 वेदशब्दे उच्चारिते चत्वारोऽपि प्रतीयन्ते । वेदो मयाधीत इति वदन्तं पृच्छन्ति व्यवहर्त्तारः कतमस्त्वयाधीतो वेद इति, स आह अथर्ववेद इति । न तमेवमाक्षिपन्ति नासौ वेदो यस्त्वया पठित इति । सोपपदोऽथर्ववेदे वेदशब्द इति चेद्, वेदान्तरेष्वपि तुल्यमेतत् ऋग्वेदो यजुर्वेदः सामवेद इति । निरुपपदोऽपि तेषु वेदशब्दः प्रयुज्यते इति चेत् तदितरत्रापि समानमित्युक्तम्, चतुर्वेदाध्यायी भारद्वाज इति ।
10 सर्वथा तु सोपपद एवायुर्वेदादिषु वेदशब्द इति न तत्तुल्यकक्षताधिक्षेप-क्षेत्रतामथर्ववेदो नेतव्यः । ब्रह्मयज्ञविधिश्च श्रौतश्चतुर्ण्णाम्प्यविशिष्ट इत्युक्तम् । स्मार्त्तोऽपि तथाविध एवास्ति, यथाह याज्ञवल्क्यः

मेदसा तर्पयेद् देवानथर्वाङ्गिरसः पठन् ।
पितॄंश्च मधुसर्पिर्भ्यामन्वहं शक्तितो द्विजः ।। इति

15 साम्प्रदायिकमध्यापनादियजनादि सर्वमभिन्नमेवेत्यलं प्रसङ्गेन ।

तेन प्रमाणतायां वेदस्वाध्यायशब्दवाच्यत्वे पुरुषार्थसाधनविधावपि चत्वारः समा वेदाः ।

## वेदानामुत्तराधरतायां पृष्टेऽथर्ववेदस्यैव प्राथम्यम्

यदि पुनरौत्तराधर्येण विना न परितुष्यते तदथर्ववेद एव प्रथमः, ततः
20 परमस्य मन्त्रस्य ब्रह्मणः प्रणवस्याभिव्यक्तेः । तथा च श्रुतिः, 'ब्रह्म ह वा इदमग्र

---

मेदसा तर्पयेदिति । योऽथर्वाङ्गिरसः पठति तेन देवा मेदसा पितरश्च मधुसर्पिर्भ्यां तर्पिता भवन्तीत्यर्थः ।

सम्प्रदायो गुरुमुखाद् विशिष्टेन रूपेण ग्रहणम्, तत्प्रयोजनं यस्याविघ्नार्थस्य 'अस्यां तिथावध्येयम्' 'अस्यां न' इत्येवंरूपस्य धर्मजातस्य, तत् साम्प्रदायिकम् ।

25 ब्रह्म ह वा इति । एतद्ब्राह्मणवाक्यमध्ये "सोऽपः स्पृष्ट्वा तासु स्वां छायामप-

**आसीदि'त्युपक्रम्य 'आथर्वणं वेदमभ्यश्राम्यदभ्यतपत् समतपत् तस्मात् तथा श्रान्तात् सन्तप्तादोमिति मन एवोर्ध्वमक्षरमुदक्रामदि'त्यादि। तथा महाव्याहृतीनां शाखान्तर-प्रसिद्धानामप्रसिद्धानाञ्च बृहदित्यादीनां तत एवोत्थानम्। अथर्ववेदकृतोपनयनसंस्का-रस्य वेदान्तराध्ययनमविरुद्धम्। अन्यवेदोपनीयमानस्य तु नाथर्वणोपनयनसंस्का-रमप्रापितस्याथर्ववेदाध्ययनेऽधिकारः। तदुक्तम्, 'भृग्वङ्गिरोविदा संस्कृतोऽन्यान् 5 वेदानधीयीत नान्यत्र संस्कृतो भृग्वङ्गिरसोऽधीयीते'ति। त्रय्येकशरणैरपि चैतदवश्या-**

---

श्यत्, तां चेक्षमाणस्य स्वं रेतोऽस्कन्दत् तदप्सु प्रत्यतिष्ठत्'' इति प्रक्रम्य 'ताभ्यः श्रान्ताभ्यः तप्ताभ्यः संतप्ताभ्यो यद् रेत आसीत् तदभृज्यत, तस्माद् भृगुः समभवत्, तत् भृगोर्भृगुत्वम्'' इत्युक्त्वा ''तदथर्वाभवत्'' इति भृगोरेवाथर्वतामभिधायाह तमाथ-र्वणम्' इति। **अभ्यश्राम्यदभ्यतपत् समतपदिति**। गायत्र्यादिच्छन्दसां पुनः पुनः प्रयो- 10 गात् तदभिमानिनीनां देवतानां पीडातः श्रमः, गायत्र्याद्यभिमानिनीनां च देवतानां श्रमादथर्ववेदाभिमानिनीनामपि देवतानां श्रमः, गायत्र्यादिदेवतासम्बन्धात् तासाम्; अतोऽनेन द्वारेणाथर्वाणमभ्यश्राम्यदखेदयत्। अन्तर्भूतण्यर्थाः प्रयोगा अमी; अभ्यतपत् विशिष्टफलनिष्पत्तये समालोचयत् प्रावर्त्तयद्वा। श्रमजननादेव च समतपत् समतापयद् उत्पन्नसन्तापमकरोत्। **तस्मात् तथाश्रान्तादत** एव तप्तात् संतप्तात्। यथा सम्बन्धि- 15 पीडया पीडिताः सन्तप्ता मनस ऊर्ध्वमुत्क्रान्तिं कुर्वते तथा तस्मादक्षरमूर्ध्वमुत्क्रान्त-मित्यर्थः। यथा च लोके तस्करैः पीड्यमाने बालकादौ तत्सम्बन्धिनोऽतिस्नेहात् प्राणोत्क्रा-न्तिं कुर्वन्ति तस्करेभ्यश्च सारभूतं सर्वस्वं प्रयच्छन्ति तथाथर्ववेदाद् अप्रियाद् भीत्या तथाविधावस्थाप्राप्तात् सारभूताक्षरनिःसृतिरिति तात्पर्यम्। **तथा महाव्याहृतीनामि-ति**। तथाहि ''प्रजापतिर्वा इदमग्र आसीत्' इत्युपक्रम्याह ''स इमांस्त्रीन् वेदान- 20 भितताप। तेभ्यस्तप्तेभ्यस्त्रीणि शुक्राण्यजायन्त भूरिति ऋग्वेदाद् भुव इति यजुर्वेदात् स्वर् इति सामवेदात् तद् ऋग्वेदेनैव हौत्रमकुर्वत यजुर्वेदेनाध्वर्यवं सामवेदेनौद्गात्रं यदेव त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वम्'' इति पृथग् ब्रह्मवेदप्रतिपादकेन शुक्रशब्देन व्याहृतीनां निर्देशादथर्ववेदादुत्थानमिति दर्शयति। तथा च ''मन एवाक्षरमूर्ध्वमुदगात्'' इत्यस्या-वसान आह ''स य इच्छेत् सर्वैरेवाथर्वभिश्चाथर्वणैश्च कुर्वीतेत्येतयैव तं महाव्याहृत्या 25 कुर्वीत' इत्यादि। अनेन प्रागुक्तोत्पत्तिकानामाथर्वणत्वं दर्शितम्। **बृहदीत्यादिनां** बृहज्जनः

श्रयणीयम्' अथर्ववेदविहित स्वकर्मभ्रेषे प्रायश्चित्तमाचरद्भिरित्यथर्ववेद एव ज्यायान् ।

यत्तु मानवं वाक्यमुदाहृतं 'षट्त्रिंशदाब्दिकं' तत् त्रिवेदाध्ययनविषयम् । वैकल्पिकं 'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रममि'ति । एकस्मिन् वेदे द्वादश-
5 वर्षाणि व्रतम्, द्वयोश्चतुर्विंशतिः, त्रयाणां षट्त्रिंशदिति । यस्तु चतुरो वेदानधीते तस्याष्टचत्वारिंशद्वर्षं वेदब्रह्मचर्यमुपासीतेति स्मृत्यन्तरमस्ति, न च तदार्यैर्नादृतम् । तत्र त्रिवेदाध्यायिनामेव प्रतिवेदं षोडशवर्षाणि व्रतं चरेदिति व्याख्यानमसङ्गतम्, उपक्रमविरोधाद् अनुपयोगाच्च । तेन वेदान्तराध्ययनकृत एवायं विकल्पविधिर्न द्वादशषोडशवर्षापेक्ष इति । अनादरोऽप्यस्यां स्मृतौ 'कृष्णकेशो अग्नीनादधीते'ति
10 श्रुतिविरोधकृतो नाथर्ववेदाध्ययननिषेधगर्भ इति । त्रैवेदिकव्रतब्रह्मचर्यस्मृतिरपि चेयम् अथर्ववेदाध्ययनपर्युदासमेव विषयीकरोति न च वेदान्तराध्ययननिषेधमिति अत्रापि न विशेषहेतुरस्ति । त्रिषु वेदेष्विदं व्रतं न पुनरेष्वेव त्रिष्विति नियामकं वचनमस्ति ।

यदपि श्राद्धप्रकरणे 'यत्नेन भोजयेदि'ति त्रिवेदपारगपरिकीर्त्तनं तद् वेदपारग-
मिति शाखान्तगमिति समाप्तिगमिति विशेषणपदपर्यालोचनया ऋग्वेदाद्येक-
15

तपः महः सत्यमित्यासाम् । **स्वकर्मभ्रेषे** प्रायश्चित्तमिति । तथाहि 'यदि ऋक्त आर्त्ति-माच्छेंद् भूरित्येव जुहुयात्; यदि यजुष्टः भुव इत्येव; यदि सामतः स्वर् इत्येवेत्यथर्व-विहितं प्रायश्चित्तम् ।

**न च तदार्यैर्नादृतमित्यनेन** मीमांसकैर्यदस्याप्रामाण्यमापादितं तदाशङ्कते ।
**उपक्रमविरोधात्** । सामान्येन वेदब्रह्मचर्यमिति सर्ववेदविषयत्वेनोपक्रमात् । **तेन वेदा-**
20 **न्तराध्ययनकृत इति** । योऽयं 'षट्त्रिंशदाब्दिकम्' इत्यस्य 'अष्टाचत्वारिंशतं वर्षाणि' इत्यनेन विकल्पः स वेदत्रयकृते द्वादशकत्रये सति चतुर्थे द्वादशकेऽथर्वणेऽपेक्षया निर्दिष्टे तावत्सङ्ख्यासद्भावादिति स्थितः, न पुनः प्रतिवेदं द्वादश षोडश वा वर्षाणीत्येवम् । **अनादरोऽप्यस्यामिति** । अष्टचत्वारिंशतं वर्षाणि ब्रह्मचर्ये कृते दारसङ्ग्रहापत्योत्पादना-
25 दावन्यो बहुकालो यात्यतः कथं कृष्णकेशतेति विरोधः । **अथर्ववेदाध्ययनपर्युदासमेवेति** । अथर्ववेदाध्ययनपर्युदासमथर्ववेदादन्येषु वेदेष्वेवं व्रतं चरणीयम्, न पुनरथर्ववेदः सर्वथैव नाध्येतव्य इति तात्पर्यम् ।

वेदाध्यायिनामनधिकारमेव श्राद्धे सूचयति । अथर्वणस्तु अथर्वशिरोऽध्ययनमात्रलब्धपङ्क्तिपावनभावस्यैकदेशपाठिनोऽपि तत्राधिकार उपपद्यते । दर्शितश्चाथर्वशिरोऽध्ययनमात्रादपि पङ्क्तिपावनत्वम्, पङ्क्तिपावनश्च श्राद्धभोजनेऽनधिकृत इति विप्रतिषिद्धम् ।

यत्तु ज्येष्ठसामगः, त्रिमधुः, त्रिसुपर्णिक इति वेदान्तरैकदेशाध्यायिनामपि 5 श्राद्धभोजनाभ्यनुज्ञानं तदनुकल्पमिव भाति, प्रथमकल्पेन समग्रवेदाध्ययनोपदेशादिति, तस्मान्नाथर्वनिषेधार्थमेतद्वाक्यमिति । तदेवमवस्थिते यद् वार्तिककारेण भयादिव द्वेषादिव मोहादिव सानुकम्पमिव वेदमुच्यते 'यदि यज्ञोपयोगित्वमि'त्यादि तदहृदयङ्गमम्, अथर्ववेदे पूर्वोत्तरब्राह्मणे विस्पष्टमिष्टिपश्वेकाहाहीनसत्राणामुपदेशात्, वेदान्तरेषु तच्चोदनाभावात् । किमथर्ववेदे तदुपदेशेनेति चेत्, सुभाषितमिदम् । 10 एवमपि हि वक्तुं शक्यम्, अथर्ववेदे तच्चोदनाया दर्शनात् किं तदुपदेशेनेति ? न च जाने कस्यैष पर्यनुयोगः किं नित्यस्य वेदस्य किं वा तत्प्रणेतुरीश्वरस्येति द्वावपि हि तावपर्यनुयोज्यावित्युक्तम् । अर्थान्तरशान्तिपुष्टचभिचारादि वेदान्तरेष्वपि न न दृश्यते, श्येनो हि सामवेद उत्पन्न अद्भुतशान्त्यादयश्च यजुर्वेद इति तदपि समानम् । एकब्रह्मर्त्विगाश्रिता इत्येतदपि न सत्यम्, यत 15

---

दर्शितश्चाथर्वशिरोऽध्ययनेति । यदुक्तम्

> त्रिनाचिकेतो विरजाश्छन्दोगो ज्येष्ठसामगः ।
> अथर्वशिरसोऽध्येता चत्वारः पङ्क्तिपावनाः ॥ इति ॥

यत्तु ज्येष्ठसामग इति तदुक्तम्

> अग्र्याः सर्वेषु वेदेषु श्रोत्रियो ब्रह्मवित्तमः । 20
> वेदार्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णकः ॥ इति ॥

ज्येष्ठसाम-त्रिमधु-त्रिसुपर्णानि व्रतानि तदनुष्ठायिनस्तच्छब्दैरुक्ताः । तदनुकल्पमिति ।

> एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः ।
> अनुकल्पस्त्वयं यज्ञे सदा सद्भिरनुष्ठितः ॥ 25

एवं तत्र पठ्यते 'द्वे यज्ञवृत्ती भवतो वैहारिकी च पाकयज्ञवृत्तिश्चेति । तत्र वैहारिकी नामानेकर्त्विगाश्रितानामेकक्रियाणामुपदेशः श्रुतौ, एकब्रह्मर्त्विगाश्रितास्तु शान्त्यादिक्रियाः स्मृतौ इत्यभूमिज्ञोक्तिरेषा । त्रय्येवात्मीयगोचरा इति एतदपि परममाध्यस्थ्यम् । न ह्यात्मीयः परकीयो वा कश्चिदस्ति वेदार्थः, सर्वशाखा-
5 प्रत्ययत्वादेकस्य कर्मणः ।

## वेदचतुष्टयेषु मध्ये कस्याप्येकस्य ततः पृथक् करणं न शिष्टसम्मतम्

तस्मात् समानयोगक्षेमत्वात् सर्ववेदानामेकस्य ततः पृथक् करणं वेदनिन्दाप्रायश्चित्तनिर्भयधियामेव चेतसि परिस्फुरति न साधूनामित्युपरम्यते ।

इति तुल्यप्रभावर्द्धिवर्धमानोचितस्तवाः ।
विविधाभिमतस्फीतफलसम्पादनोद्यताः ।।
10 चत्वारोऽपि पराक्षेपपरिहारस्थिरस्थितिम् ।
भजन्ति वेदाः प्रामाण्यलक्ष्मीं हरिभुजा इव ।।
चतुःस्कन्धोपेतः प्रथितपृथगर्थैरवयवैः
कृतान्योन्यश्लेषैरुपचितवपुर्वेदविटपः ।
15 प्रतिस्कन्धं शाखाफलकुसुमसन्दर्भसुभगाः
प्रकाशन्ते तस्य द्विजमुखनिपीतोत्तमरसाः ।।

---

इत्यभिधाय ज्येष्ठसामगादयोऽनुकल्परूपतया दर्शिताः । वैहारिकीति । विहार आहवनीयादिरग्निस्त्रेता तत्र भवा वैहारिकी दर्शपूर्णमासादिका । पाकयज्ञ अष्टकादयो गृह्याग्निनिर्वर्त्याः । वृत्ती प्रकारौ । इत्यभूमिज्ञोक्तिरेषा । उभयासामपि तत्रैवोपदेश-
20 दर्शनादिति ।

तुल्यप्रभावर्द्धीति । तुल्यप्रभावर्द्धि माहात्म्यसम्पत्त्या प्रत्यहं वर्धमानः अधिकीभवन् उचितो योग्यः स्तवो येषां भुजानां वेदानाञ्च । भुजपक्षे भगवद्भुजानां कर्मणि सव्येतराणां विशेषाभावात् तुल्यप्रभावर्द्धित्वम् । भुजपक्षे विबुधा देवा वेदपक्षे विद्वांसस्तेषामुपायप्रदर्शनद्वारेण फलसम्पादकत्वम् । चतुःस्कन्धोपेत इति । वेदपक्षेऽवयवैर्विध्यर्थवादमन्त्रनामधेयादिवाच्यैः पृथगर्थैः प्रवर्तनास्तुतिप्रयोगप्रदर्शनादिप्रतिपादकैरत एव
25 वृपरस्परसम्बद्धैः । वृक्षपक्षेऽवयवैर्मूलत्वक्पत्रादिभिः, तेऽपि पृथगर्थाः पृथक्प्रयोजनाः ।

तन्त्रागमादीनामपि प्रामाण्ये एषैव रीतिः

आह

किमेतदित्थं प्रामाण्यं वेदानामेव साध्यते ।
तन्त्रागमान्तराणां वा सर्वेषामियमेव दिक् ॥

किञ्चातः

आद्ये पक्षे परेष्वेवं ब्रुवाणेषु किमुत्तरम् ।
उत्तरत्र तु मिथ्याः स्युः सर्वेऽन्योन्यविरोधिनः ॥

कानि पुनरागमान्तराणि चेतसि निधायैवं वत्सः पृच्छति ? पुराणेतिहास-धर्मशास्त्राणि वा, शैवपाशुपतपञ्चरात्रबौद्धार्हतप्रभृतीनि वा । तत्र शैवादीनि तावन्निरूपयिष्याम । मन्वादिप्रणीतानि धर्मशास्त्राणि वेदवत्तदर्थानुप्रविष्टविशिष्टकर्मोपदेशीनि प्रमाणमेव । कस्तेषु विचारः ? तेषान्तु प्रमाणत्वं वेदमूलत्वेनैव केचिदाचक्षते । तथा हि न तावन्मन्वादिदेशना भ्रान्तिमूलाः सम्भाव्यन्ते, बाधकाभावात्, अद्ययावदपरिम्लानादरैर्वेदविद्भिस्तदर्थानुष्ठानात् । नाप्यनुभवमूलाः प्रत्यक्षस्य त्रिकालानवच्छिन्नकार्यरूपधर्मपरिच्छेददशासामर्थ्यासम्भवात् । न च पुरुषान्तरोपदेशमूलाः पुरुषान्तरस्यापि तदवगमे प्रमाणाभावात् । भावे वा मनुना किमपराद्धम् ? असति हि मूलप्रमाणे पुरुषवचनपरम्परायामेव कल्प्यमानायामन्धपरम्परास्मरणतुल्यत्वं दुर्निवारम् । न च विप्रलम्भका अत्रभवन्तो मन्वादय एवमुपदिशे-

---

तथाहि कस्यचिद् वृक्षस्य मूलादयो भिन्नकार्यकर्तृत्वेनोपलभ्यन्ते ते च परस्परसम्बद्धा एव भवन्ति । शाखापक्षे कुसुमफले, वाक्यवाक्यार्थौ वेदपक्षे । वेदपक्षे द्विजैर्ब्राह्मणैः पीत आस्वादित उत्तमो रस उपनिषदर्थो यासाम्, वृक्षपक्षे द्विजैः पक्षिभिः ।

परेष्वेवं ब्रुवाणेषु । यथा भवद्भिर्वेदानां प्रामाण्यं साध्यत ईश्वरप्रणीतत्वेन तन्त्रागमान्तराणामपि तथैव प्रतिपादयत्सु ।

तदर्थानुप्रविष्टेति । वेदार्थेऽनुष्ठेयेऽनुप्रविष्टानि 'आचान्तेन कर्तव्यम्' 'शुचिना कर्तव्यम्' इत्यादीनि यानि शौचाचमनादीनि कर्माणि । अन्धपरम्परास्मरणतुल्यत्वमिति यथान्धः रूपविशेषोपलम्भं प्रति पृष्टोऽन्धान्तरोक्तं स्मृत्वा कथयति 'तेन ममैवमाख्यातम्' इति ।

युरिति युक्ता कल्पना, बाधकाभावात् साधुजनपरिग्रहाच्चेत्युक्तम् । तस्मात् पारिशेष्याद् वेदाख्यकारणमूला एव भवितुमर्हन्ति मन्वादिदेशनाः । तद्धचनुगुणं समर्थञ्च कारणमिति । तदाह भट्टः

> भ्रान्तेरनुभवाद् वापि पुंवाक्याद् विप्रलम्भकात् ।
> दृष्टानुगुण्यसामर्थ्याच्चोदनैव लघीयसीति ॥

तत्र केचित् परिदृश्यमानमन्त्रार्थवादवलोन्नीतविधिमूलत्वं मन्यन्ते । अन्ये विप्रकीर्णशाखामूलत्वम् ।

अपरे पुनरुत्सन्नशाखामूलत्वमिति । अनेन च विशेषविवरणेन न नः प्रयोजनम् । सर्वथा यथोपपत्ति वेद एव तत्र मूलं प्रकल्प्यतां न मूलान्तरम्, अप्रमाणकत्वात्, वेदमूलत्वपक्षेऽपि चेयमखिलजगद्विदिता स्मृतिसमाख्यानुगृहीता भविष्यति । प्रत्यक्षमूलत्वे हि वेदवदत्रापि कः स्मृतिशब्दार्थः ? किञ्च वेदमूलत्वे सति स्मृतेः श्रुतिविरोधे सति तदतुल्यकक्षत्वाद् बाध्यत्वं सुवचं भवति । क्लृप्तमेकत्रमूलमितरत्र कल्प्यम् । यावदेव भवान् स्मृतेः श्रुतिं कल्पयितुं व्यवस्यति तावदेतद्-

---

भ्रान्तेरनुभवाद्वेति । एभ्यः सकाशान्मूलत्वेनाश्रीयमाणा चोदनैव लघीयसी कल्पनारहिता । दृष्टानुगुण्यसामर्थ्यादित्यत्र दृष्टानुगुण्यसाध्यत्वादिति पाठान्तरमन्ये वदन्ति, व्याचक्षते च दृष्टानुगुणं साध्यं यस्याः सा दृष्टानुगुण्यसाध्या तद्भावस्तत्त्वम् । यदेतद् दृष्टं वेदविदनुष्ठानं तदानुगुण्यं चोदनामूलत्वे सति साध्यं भवति सिद्धचतीत्यर्थः ।

परिदृश्यमानमन्त्रार्थेति । 'यां जना अभिनन्दन्ति" इति मन्त्रार्थवादात् "अष्टकाः कर्तव्याः" इति स्मृतेः; "धन्वन्निव प्रपा असि त्वमग्ने" इत्यतः "प्रपाः प्रवर्तयितव्याः" इत्यस्याः स्मृतेरुत्थानम् । विप्रकीर्णशाखामूलत्वमिति । विप्रकीर्णा याः काश्चित् क्वचिदेव देशे पठचन्ते न सर्वाः सर्वत्र अतस्तदर्थस्यैकत्र ढौकयितुमशक्यत्वात् स्मृत्युपनिबन्धस्तदर्थसंकलनानिमित्तकः ।

उत्सन्नशाखेति । याः शाखा अन्यैः कैश्चिन्न पठचन्ते ता एव तु स्मृतिकाराः पठन्ति, तैरन्याख्यात्रभावेनोत्सादमाशङ्कमानैस्तदर्थं ग्रन्थोपनिबन्धः कृतः ।

विरोधिनी प्रत्यक्षश्रुता श्रुतिरवतरति हृदयपथमिति कथं तदा मूलकल्पनार्थं स्मृतिः प्रभवेत् ? तदाह

सोऽयमाभाणको लोके यदश्वेन हृतं पुरा ।
तत्पश्चाद् गर्दभः प्राप्तुं केनोपायेन शक्नुयादिति ॥

अपर आह, विकल्प एवात्र युक्तः । किल द्विविधो वेदः श्रूयमाणोऽनुमीयमानश्च । श्रूयमाणश्च श्रुतिरित्युच्यते, अनुमीयमानश्च स्मृतिरिति । द्वावपि चैतावनादी इति किं केन बाध्यते ? व्यक्ताव्यक्तो हि वेद एवासौ । अत एव न मन्त्रार्थवादादिमूलकत्वकल्पनं युक्तम्, स्मर्यमाणस्य वेदस्यानादित्वात् ।

नन्वेवं वेदमूलत्वेन प्रामाण्ये वर्ण्यमाने बाह्यस्मृतीनामपि प्रामाण्यं वदन्तः प्रावादुकाः कथं प्रतिवक्तव्याः ? उच्यते । प्रत्युक्ता एव ते तपस्विनः । उक्तं हि भगवता जैमिनिना 'अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यादिति' । कर्तृसामान्यादिति कोऽर्थः ? एकाधिकारावगमादिति । य एव वेदार्थानुष्ठानेऽधिकृताः कर्त्तारस्त एव स्मृत्यर्थानुष्ठाने, आचमनादिस्मार्तपदार्थसंवलितवेदिस्तरणादिवैदिकपदार्थप्रयोगदर्शनात् । न त्वेवमधिकारावगमो बाह्यस्मृतिषु विद्यते । तस्मान्मन्वादिस्मृतय एव प्रमाणं न बाह्यस्मृतयः ।

ननु मन्वादिस्मृतयोऽपि वेदमूलत्वात् प्रमाणं नान्यत इति । अत्रोच्यते, तदेतद् वेदमूलतया प्रामाण्यम्, योगिप्रत्यक्षं धर्मग्राहकममृष्यमाणाः किलाचक्षते भवन्तः, एतच्च न युक्तम् । यथाहि भगवानीश्वरः सर्वस्य कर्त्ता सर्वस्येशिता सर्वदर्शी सर्वानुकम्पी च वेदानां प्रणेता समर्थितस्तथा योगिप्रत्यक्षमपि धर्मग्रहणे निपुणमस्मदादिप्रत्यक्षविलक्षणं प्रत्यक्षलक्षणे समर्थितमेव । तस्मात् तन्मूला एव मन्वादिदेशना भवन्तु ।

यत्तु त्रिकालानवच्छिन्नः कथं प्रत्यक्षगम्यो धर्मः स्यादिति चोदनैव तत्र प्रमाणमुच्यते, प्रतिविहितं तत् । ईश्वरप्रत्यक्षं यथाग्निहोत्रादेर्धर्मत्वस्य ग्राहकमेवमष्टकादियागे तस्य ग्राहकं मन्वादिप्रत्यक्षं भविष्यतीति किमत्र त्रिकालानवच्छेदेन

---

आचमनादिस्मार्तपदार्थेति । 'आचान्तेन कर्तव्यम्' 'शुचिना कर्तव्यम्' इति स्मार्तपदार्थमिश्राणां वेदिस्तरणादीनां दर्शनात् ।

तदवच्छेदेन वा कृत्यम् ? यद्येवम्, अष्टकादिकर्मणां धर्मत्वाग्राहित्वादसर्वज्ञ ईश्वरः स्यात् ? ज्ञात्वा वानुपदिशन्नकारुणिको भवेत् ? नैष दोषः, सर्वं जानात्येव भगवान् किञ्चित् स्वयमुपदिशति किञ्चित् परानुपदेशयति। ते हि तस्यानुग्राह्या भगवतः। तेषाञ्च तदनुग्रहकृतैव तथाविधज्ञानप्राप्तिः। मन्वादीनां प्रत्यक्षो धर्म इति वेदेऽपि पठ्यते। साक्षात्कृतधर्माण ऋषयो बभुवुस्ते परेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् संप्रादुरिति वेदेऽपि पठ्यते।

नन्वेवं प्रत्यक्षमूलत्वाविशेषाच्छ्रुतिस्मृत्योर्विरोधे विकल्पः प्राप्नोति बृहद्रथन्तरविध्योरिव, न बाध्यबाधकभावः। न हीश्वरप्रत्यक्षस्य योगिप्रत्यक्षस्य च प्रामाण्ये कश्चिद्विशेषः। नैसर्गिकाहार्यत्वकृतस्तु भविष्यति? किं तेन? उच्यते। भवतु विकल्पः, को दोषः ? वेदमूलत्ववादिभिरपि कश्चिद्विकल्पो व्याख्यात एव। विषय-

---

**उपदेशेन मन्त्रान् संप्रादुः।** उपदेशेन शिष्योपाध्यायिकया अपरेभ्यः अवरकालीनेभ्यः शक्तिहीनेभ्यः मन्त्रान् ग्रन्थतोऽर्थतश्च संप्रादुः संप्रत्तवन्तः। अर्थतश्च मन्त्राणां ज्ञानाद् धर्मोऽपि ज्ञातो भवति, कर्मणां विशिष्टफलप्रदत्वस्य मन्त्रैः प्रकाशनादिति।

**बृहद्रथन्तरविध्योरिव** 'बृहत्पृष्ठं भवति' रथन्तरं पृष्ठं भवति' इत्यनयोः। **वेदमूलत्ववादिभिरपि कैश्चिद्विकल्पो व्याख्यात एवेति।** अयं तेषामाशयः किल भवद्भिः प्रत्यक्षया श्रुत्यानुमानिकी श्रुतिर्बाध्यत इत्यभिधीयते। तत्र ब्रूमः सा श्रुतिर्मन्वादीनां प्रत्यक्षा अप्रत्यक्षा वा ? न तावदप्रत्यक्षा, मन्वादीनामाप्तत्वहानेः एवञ्चातिविरोधेऽप्यप्रामाण्यप्रसक्तिः। अथ प्रत्यक्षा, तदानीमिदानीन्तनप्रत्यक्षत्वं क्वोपयुज्यते तेषां; प्रत्यक्षत्वेन तस्याः प्रामाण्यसिद्धेः प्रामाण्यञ्चेद् बृहद्रथन्तरश्रुत्योरिव विरोधे विकल्पः केन वार्यत इत्यादि। **विषयविभागेन वा विकल्पो व्याख्यास्यत** इति यथा

> प्राजापत्यान्तु कृत्वेष्टिं सर्ववेदसदक्षिणाम्।
> आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्॥

इति सप्तमाद्ये प्राभाकरटीकातात्पर्यम्।

[ [१]ननु यथाकार्यमुपदेश इति अयमापतत् सत्रमित्यनेन सह विरोधे विषयविभागो दर्शितः। यः परिपक्वकषायः विगता··· ·रूपाच्चोदकात् प्राप्तिः सा हि

---

१. एतच्चिह्नान्तर्गतं सर्वमस्पष्टार्थकम्।

विभागेन वा विकल्पो व्याख्यास्यते। न च श्रुतिस्मृतिविरोधोदाहरणं किञ्चिदस्तीति स्वाध्यायाभियुक्ताः। तस्मादाप्तप्रत्यक्षमूलत्वेन वेदानामिव धर्मशास्त्राणां हि पञ्चमं वेदत्वमाहुः। उक्तञ्च

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
विभेत्यल्पश्रुताद् वेदो मामयं प्रतरिष्यति।। इति। 5

अथ वा किमस्माकं दुरभिनिवेशेन। वेदमूलत्वात् स्मृतीनां स्मृतिवत् पुराणानामपि भवतु प्रामाण्यम्। सर्वथा तावद् वेदाश्चत्वारः पुराणं स्मृतिरिति षडिमानि विद्यास्थानानि साक्षात्पुरुषार्थसाधनोपदेशीनि। व्याकरणादीनि षडङ्गानि अङ्गत्वेनैव तदुपयोगीनि न साक्षाद् धर्मोपदेशीनि। कल्पसूत्रेष्वपि विक्षिप्तकर्मक्रमनियमसंग्रहमात्रं नापूर्वोपदेशः। मीमांसा वेदवाक्यार्थविचारात्मिका। वेद- 10 प्रामाण्यनिश्चय हेतुश्च न्यायविस्तर इत्यामुख एवोक्तम्। तदिमानि चतुर्दशविद्यास्थानानि प्रमाणम्, कानिचित् साक्षादुपदेशीनि कानिचित् तदुपयोगीनि इति सिद्धम्।

## शैवाद्यागमानामप्यनयैव रीत्या प्रामाण्यम्

यानि पुनरागमान्तराणि परिदृश्यन्ते तान्यपि द्विविधानि। कानिचित् 15 सर्वात्मना वेदविरोधेनैव प्रवर्त्तन्ते बौद्धादिवत्, कानिचित् तदविरोधेनैव कल्पित-

---

चोदयत्याक्षिपति पदार्थानुपकारसिद्धयधिताथिं त्वः तं प्रति जागमयं वाद इति। न च श्रुतिस्मृतिविरोधोदाहरणमिति। 'प्राजापत्यं शतकृष्णलं चरुं निर्वपेदायुष्कामः' इत्यादौ कार्यस्य कृष्णलताप्रतिपादकानि तानि परस्परविरुद्धश्रुत्युदाहरणान्येवेति भट्ट आचष्टे। तथा······लक्षणस्य तत्रोपकारस्य दर्शनान्नियतपरिमाणा हि 20 हेमकनुस्मृतिरिति भाष्यकृतोदाहृतम्, अनयोश्च विरोधे हि सर्वा वेष्टितार······मेंत्यादिबाधाप्रकरणारम्भवैफल्यं स्वरसत एवाप्राप्तत्वात्; साङ्ख्यायने ब्राह्मण एतत् पठ्यत इति हि स आह एवमन्योदाहरणेष्वपि। अत एव······नुचोदको येन येनानार्थी तं तमेवाक्षेप्स्यति। किमिदमुच्यते सोत्प्रासमाह। सदाचारस्याप्यनिबद्धस्य विवाहे कङ्कणबन्धनादेः। विक्षिप्त······यागानानुपदेशेनैव धर्मविधानमिति न 'प्रकृतिवद् 25 विकृतिः कर्तव्या इति।

कानिचित् तदविरोधेनेति। न हि शैवादौ वैदिकानुष्ठाननिन्दाद्वारेण स्वकीय-

**व्रतान्तरोपदेशीनि शैवादिवत्। तत्र शैवाद्यागमानां तावत् प्रामाण्यं ब्रूमहे, तदुपज-नितायाः प्रतीतेः संदेहबाधकारणकालुष्यकलापस्यानुपलम्भात्, ईश्वरकर्तृकत्वस्य तत्रापि स्मृत्यनुमानाभ्यां सिद्धत्वात्, मूलान्तरस्य लोभमोहादेः कल्पयितुमशक्य-त्वात्। न हि तत्रेदंप्रथमता स्मर्यते वेदवदेकदेशसंवादाश्च भूम्ना दृश्यन्त इति कुतो**

---

5 चरीयानुष्ठानप्रशंसा।······प्रथमं कार्येण धर्माः सम्बन्ध्यन्ते। यथाकार्यमनुपदेश इति पक्षश्रवणेऽत्र वैदिक्यास्तस्याश्च व्रतचर्याधा युगपदनुष्ठानासम्भवाद् गृह ईश्वरवद्विकल्पो भवि······। सम्बद्धास्ते तस्यैव न कार्यान्तरस्य। दर्शपूर्णमासकार्याद् ऐन्द्राग्नसपर्यादी-ष्ट्यनुष्ठानाद् वृष्टिदर्शनात् संवाद एवमिहापि विशिष्टमन्त्रजपादितो विषाद्यपा··तेषां बिहि-तत्वाद्। ऐन्द्राग्नादिष्टोपदेशतः प्राप्त्यभावात् प्राप्तिसिद्धयः। मीमांसकदृष्टचास्मद्दृष्टचा
10 वा स्मृतीनां प्रामाण्ये यो न्यायः सोऽत्रापि मा वाभूत् तथापि प्रथमतस्तेनैव प्रथमं सम्बध्य-न्त इति पूर्वपक्षयित्वा निष्फलत्वाद्यजेः सफलादीनां प्रामाण्यं कथं निर्वहति। उच्यते, स्मृतीनामेव तावन्मीमांसकस्य प्रामाण्यं······इतिकर्तव्यतां चाक्षिपति। प्रथमतस्तदा-क्षिप्तानां द्वारमात्रप्रदर्शनपरश्रुतेः। यथैवाष्टकादिवाक्येभ्यो बाधारहिता कार्यावगति-रुत्पद्यते स्वतः प्रामाण्यञ्च स्थितम् अतो वेद मूलत्वकल्पना, तथेहापि भविष्यति]।
15 अथाष्टकादिस्मृतीनां वेदमूलत्वमुपलभ्यते नैषाम् इति अष्टकादिस्मृतीनामपि कुतो वेदमूलत्वसमुपलम्भः? प्रत्यक्षादिमानान्तराणामस्मिन् विषयेऽनाशङ्कनादनुमानमर्था-पत्तिर्वा। 'तस्मिन् विषये प्रमाणमनुमानमस्तु' इति चेन्न, लिङ्गाभावात्। 'अष्टकादिका-र्यप्रतिपत्तिस्मृतिर्लिङ्गमिति चेत्; मनुर्ह्यष्टकाः कर्तव्या इति स्मरति, न चाप्रतिपन्नस्या-ष्टकादेः कार्यतया स्मरणं संभवति. कार्यप्रतिपत्तिश्च पुंसोऽतीन्द्रियार्थे दृष्टत्वाभावाद् वेदं
20 विना न सम्भवतीति वेदमूलत्वकल्पनम्' इति। तन्न; सर्ववेष्टनादिना व्यभिचारात्। तथाहि 'उदुम्बरीं सर्वां वेष्टयेत्' इति स्मरति; न च तत्स्मरणस्य वेदमूलत्वं भवद्भिरङ्गी-कृतम्। अथ तत्र "औदुम्बरीं स्पृष्ट्वोद्गायेत्" इति श्रुतिबाधितत्वान्मूलान्तरकल्पनाया अभावान्मिथ्यात्वम्, न चैवमष्टकादावपीति वाच्यम्, श्रुतिबाधाया अनुपलम्भात्। तेषु तत्सामान्येन च मिथ्यात्वाशङ्कायां स्वप्नज्ञानसाधर्म्येण जाग्रज्ज्ञानस्यापि मिथ्यात्वाशङ्का
25 स्यात्। अथ तत्र "दोषज्ञाने त्वनुत्पन्ने नाशङ्का निष्प्रमाणिका" इत्याशङ्कानिरासः, तर्ह्येवं मन्वादिस्मृतावपि भविष्यति। न, नियमासिद्धेः। यदि हि वह्न्यभावे क्वचि-दपि धूमो दृश्येत तदा किं शक्येत वक्तुं यत्रैव धूमो दृष्टस्तत्रैव वह्निं विना भवत्वन्यत्र

**मूलान्तरकल्पनावकाशः ? न च वेदप्रतिपक्षतया तेषामवस्थानम्, वेदप्रसिद्धचातुर्वर्ण्यादिव्यवहारापरित्यागात् ।**

**मन्वादिचोदनान्यायः स यद्यपि न विद्यते ।**
**शैवागमे तथाप्यस्य ननु युक्ता प्रमाणता ॥**

---

पुनर्दहनादेव धूम इति; एवं यत्र स्मरणं वेदमूलत्वं विनोपलब्धं सर्ववेष्टनादौ तत्र वेदमूलत्वं व्यभिचरतु नाम, अन्यत्र तु वेदमूलत्वाव्यभिचारि स्मरणमिति । यतो नियमस्याविनाभावस्य निश्चयोऽनुमानस्य मूलम् । तस्य चासिद्धिर्विपर्ययसम्भावनायामपि, किं पुनर्विपर्ययदर्शनेऽपि । विपर्ययश्च दर्शितः । यत् पुनः "दोषज्ञाने त्वनुत्पन्ने" इति तत् प्रत्यक्षाभिप्रायेण, यतो न प्रत्यक्षं लिङ्गवन्नियमनिश्चयापेक्षं स्वविषयं परिच्छिनत्ति । किं तर्हि ? बोधस्वभावत्वादेव । अतस्तत्र सत्यामप्याशङ्कायां न नियमासिद्धिः । निश्चितनियमस्य गृहीताविनाभावस्य तु लिङ्गस्य लिङ्गत्वात् कथं विपर्ययदर्शनेऽपि लिङ्गत्वम् ? अथार्थापत्तितो मन्वादिस्मृतीनां वेदमूलत्वनिश्चयः स्मृतिदार्ढ्यमन्यथानुपपद्यमानं वेदमूलत्वं कल्पयति इति, तन्न । सर्ववेष्टनादावन्यथाप्युपपत्तेर्दृष्टत्वाद् भट्टपक्षे, प्राभाकरैरेवंविधार्थापत्त्यनभ्युपगमाच्च । 'ननु कल्पयित्वा मन्वादीनां प्रतारकत्वमन्यथाप्युपपत्तेरिति वक्तुं न शक्यते, तादृशाञ्च महात्मनां दोषवत्त्वकल्पनायां बहुदुष्टकल्पना प्राप्नोति' । न । संसारिणां रागादिबहुलत्वेन दृष्टत्वात् पुरुषविशेषानभ्युपगमाच्च न काचित् कल्पना । तदुक्तम् 'सर्वदा चापि पुरुषाः प्रायेणानृतवादिनः' इति । अथैवं वेदमूलत्वानभ्युपगमेऽष्टकादिवाक्येभ्योऽवगतेर्मिथ्यात्वं प्राप्नोति, कारणाभावात् । तन्न । कारणाभावनिश्चये भवतः प्रमाणाभावात्, अनिश्चिते च कारणाभावेऽष्टकादिवाक्येभ्यः प्रतिपत्तेरुद्भवन्त्या अप्रतिपत्तित्वासिद्धिः । यदि प्रतिपत्तेरप्रतिपत्तित्वं नेष्यते भवता तदस्याः प्रतिपत्तेर्भवतः किं जनकं प्रमाणमिति चेद्, वाक्यमेव । मम हि प्रत्यक्षपक्षपातिनो नियमनिश्चयानपेक्षाद् वाक्यादवगतिरुत्पद्यते । न च परेण मूलकारणाभावो निश्चेतुं शक्यते, सम्भवाद् वेदसंयोगस्य त्रैवर्णिकानाम् । त्रैवर्णिका हि मन्वादयः, तेषाञ्च त्रैवर्णिकत्वादेव वेदसंयोगः सम्भाव्यते । सम्भवमात्रेण चाभावनिश्चयो निरसितुं शक्यते । उक्तञ्च 'सम्भवमात्रनिरसनीयश्चाभावो नाशङ्कितसिद्धिमपेक्षते ।' एवं परोक्ते कारणाभावनिश्चये निरस्ते निष्प्रतिपक्षावगतिः प्रमाणम् । न च कारणसद्भावनिश्चया-

**सर्वोपनिषदामर्था निःश्रेयसपदस्पृशः ।**
**विविच्यमाना दृश्यन्ते ते हि तत्र पदे पदे ।।**
**ये च वेदविदामग्र्याः कृष्णद्वैपायनादयः ।**
**प्रमाणमनुमन्यन्ते तेऽपि शैवादिदर्शनम् ।।**

---

भावात् कारणाभावोऽपि सम्भवतीति सम्भवमात्रेणानुभवविरुद्धकारणाभावः शक्यते वक्तुं, यथोक्तम् 'दोषज्ञाने त्वनुत्पन्ने' इति । अन्येनाप्युक्तम् 'बाधके सति स न्यायः, नानुभूतं त्यक्तव्यम्' । लिङ्गे पुनर्नियमनिश्चयापेक्षावगतिरिति नायं नयः समस्ति । अत एव प्राङ्नयेन वेदमूलत्वनिश्चयाभावाद् **भाष्यकृता** ''सम्भवाद् वेदसंयोगस्य'' इत्ययुक्तम्, अन्यथा निश्चयो वक्तव्यः, न सम्भवमात्रम् । अत एव न वाच्यं 'वेदसंयोग एव वेदमूलत्वे प्रमाणं भविष्यति' इति, अनिश्चये प्रमाणत्वासिद्धेः । अत्र शास्त्रे स्मृत्यधिकरणे **प्रभाकर-टीका** सर्वत्रोपयुज्यते ग्रन्थगौरवभयात् तु न प्रदर्शिता । तदेवं यथा स्मृत्यादिवाक्येभ्योऽवगतेरुत्पद्यमानाया मूलकारणाभावेन परैर्मिथ्यारूपता शङ्किता सा त्रैवर्णिकानां वेद-सम्बन्धस्य सम्भवमात्रेण कारणाभावनिश्चयनिराकरणेन निरस्ता । भवन्ति हि मन्वाद-यस्त्रैवर्णिकत्वाद् वेदेऽधिकृताः, अस्ति तेषां वेदेन सम्बन्धः, तत् कदाचिद् वेद एव मूलकारणं सम्भवतीति, एवं चेत् कथमेकान्तेन कारणाभावनिश्चय इति, तथा शैवादि-शास्त्रेभ्योऽप्यवगतेरुत्पद्यमानाया अयमेव न्यायः,तत्कर्तॄणामपि वेदसंयोगः केनापह्नूयते। अतस्तत्रापि मूलकारणाभावनिश्चयः सम्भवमात्रेण निरसनीय एव । तथा च **पञ्चरात्रादौ** भगवत्सङ्कर्षणादयस्त्रैवर्णिका अविच्छेदेन कर्तारः स्मर्यन्त एव । न च विद्वज्जनानाद-रस्तेषाम् विद्वद्भिः परिव्राजकवरैरपि तदादरणात् तुर्ये च ज्ञानकाण्डे भगवद् **बादरायण-सूत्रवृत्तिकृता भगवत्पुष्कराक्षेण** परिव्राजकमुख्येन पञ्चरात्रादेर्वेदमूलत्वमङ्गीकृतम् । तत्सूत्रकृतोऽपि 'विज्ञानादिभावे वा तदप्रतिषेधः' इति वदतस्तत्प्रामाण्यमभिप्रेतमिति लक्ष्यते । अस्य सूत्रस्यार्थमाहुः "ज्ञानानुत्पत्तिकृतं संदेहनिबन्धनं विपर्ययहेतुकं वा अप्रमाणं भवति । तदेतत् त्रिविधमपि पञ्चरात्रादिषु नास्ति । 'विज्ञानादिभावे' विज्ञानं तावत् तेभ्य उत्पद्यत इति विज्ञानानुत्पत्तिलक्षणाप्रामाण्यनिरासः । आदिग्रहणाद्धि संशयविपर्यययोः पर्युदासः । वाशब्दः पक्षान्तरनिवृत्त्यर्थः । अतस्तदप्रतिषेधः प्रामाण्या-प्रतिषेध इत्यर्थ इत्यलं बहूक्त्या ।"

**येऽपि वेदविदामग्र्या** इति । तथा हि भारते

पञ्चरात्रेऽपि तेनैव प्रामाण्यमुपवर्णितम् ।
अप्रामाण्यनिमित्तं हि नास्ति तत्रापि किञ्चन ।।

तत्र च भगवान् विष्णुः प्रणेता कथ्यते। स चेश्वर एव ।

एकस्य कस्यचिदशेषजगत्प्रसूति-
हेतोरनादिपुरुषस्य महाविभूतेः ।
सृष्टिस्थितिप्रलयकार्यविभागयोगाद्
ब्रह्मेति विष्णुरिति रुद्र इति प्रतीतिः ।।

वेदे च पदे पदे 'एक एव रुद्रोऽवतस्थे न द्वितीयः' इति, 'इदं विष्णुर्विचक्रमे' इति रुद्रो विष्णुश्च पठ्यते। तद्योगाच्च तदाराधनोपाया वेदेऽपि चोदिता एव। शैवपञ्चरात्रयोस्तु तद्योगा एवान्यथोपदिश्यन्ते। न चैष वेदविरोधो वैकल्पिकत्वादुपायानाम्। अत आप्तप्रणीतत्वाद् वेदाविरुद्धत्वाच्च न तयोरप्रामाण्यम् ।

## सौगतानामप्यागमानां न प्रामाण्यम्

ये तु सौगतसंसारमोचकागमाः पापकाचारोपदेशिनः कस्तेषु प्रामाण्यमार्योऽनुमोदते ?

---

पञ्चरात्रञ्च साङ्ख्यञ्च वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि राजेन्द्र विद्धि नाना मतानि च ।। इति ।।

ज्ञायतेऽनेनेति व्युत्पत्त्या विद्यापर्यायेण ज्ञानशब्देन वेदसमकक्षतया निर्दिशन् पञ्चरात्रादींस्तेषां वेदवत् प्रामाण्यमभ्यनुजानाति । तथा द्रोणपर्वणि पितृवधामर्षितमश्वत्थामानं स्वयमेव सान्त्वयितुं "भवता लिङ्गमूर्तिः शिवो नार्चितो यथा केशवार्जुनाभ्यां प्राग्भवेऽर्चितः, अतो न पराजेतुं शक्यो भवता । विरम्यतामतोऽसद्ग्रहात्" इति भङ्ग्या शैवशास्त्रप्रसिद्धलिङ्गार्चनस्तुतिं वदता तच्छास्त्रप्रामाण्यमनुमन्यते । दानधर्मेषु च तच्छास्त्रप्रसिद्धां दीक्षामुपमन्युना कृष्णाय प्रतिपादितां दर्शयंस्तदेव शैवशास्त्राणां प्रामाण्यं स्फुटीचकार मो(अत्रटीका ग्रन्थस्त्रुटितः)त्यथर्वशिरसि मूलमन्त्रभूतोऽप्युपलभ्यत एव । बौद्धादीनान्तु त्रैवर्णिकानादराद् वेदमूलत्वानभ्युपगमाच्च नायं नयः समस्तीति । तदेवं मीमांसकदृष्ट्या नैयायिकमताश्रयणेन व्यासादिवेदविद्दृष्ट्या च स्मृतिवच्छैवादिशास्त्रप्रामाण्यमिति सिद्धम् ।

बुद्धशास्त्रे हि विस्पष्टा दृश्यते वेदबाह्यता ।
जातिधर्मोचिताचारपरिहारावधारणात् ।
संसारमोचकाः पापाः प्राणिहिंसापरायणाः ।
मोहप्रवृत्ता एवेति न प्रमाणं तदागमः ।।
निषिद्धसेवनप्रायं यत्र कर्मोपदिश्यते ।
प्रामाण्यकथने तस्य कस्य जिह्वा प्रवर्त्तते ।।
ततो यद्यपि सिद्धिः स्यात् कदाचित् कस्यचित् क्वचित् ।
ब्रह्महत्यार्जितग्राम्यभोगवन्नरकाय सा ।।
निषिद्धाचरणोपात्तं दुष्कृतं केन शाम्यति ।
अतः कालान्तरेणापि नरके पतनं पुनः ।।

यत्त्वत्र चोदितं परेषु पूर्वोक्तक्रमेण बुद्धाद्याप्तकल्पनां कुर्वत्सु किं प्रतिविधेयमिति ? तत्रोच्यते । महाजनप्रसिद्ध्यनुग्रहे हि सति सुवचमाप्तोक्तत्वं भवति नान्यथा । महाजनश्च वेदानां वेदार्थानुगामिनाञ्च पुराणधर्मशास्त्राणां वेदाविरोधिनाञ्च केषाञ्चिदागमानां प्रामाण्यमनुमन्यते न वेदविरुद्धानां बौद्धाद्यागमानाम्, इति कुतस्तेषामाप्तप्रणीतत्वम् ? मूलान्तरं हि तत्र सुवचम्, अज्ञानलोभादीत्येवमभिधाय वेदस्पर्धिनो बौद्धादयो निषेद्धव्याः । आह

कोऽयं महाजनो नाम किमाकारः किमास्पदः ।
किंसंख्यः किंसमाचार इति व्याख्यातुमर्हसि ।

अपि च बौद्धादयो बुद्धादीनाप्तान् स्वागमप्रामाण्यसिद्धये वदन्ति । ते महाजनमपि निजं तत् सिद्धये वृन्दादिकम् वदेयुरेव । कस्तत्र प्रतीकारः ? उच्यते । चातुर्वर्ण्यं चातुराश्रम्यञ्च यदेतदार्यदेशप्रसिद्धं स महाजन उच्यते । आकारस्तु

---

संसारमोचका इति । ये घूकचटकन्यायेन प्राणिवधं धर्ममिच्छन्ति । निषिद्धसेवनप्रायमिति । यदुक्तम्

विसधारा मृतञ्चैव मेदो रुधिरमेव च ।
पवित्रं भैरवे तन्त्रे साधकानां न संशयः ।। इति ।।

ततो यद्यपि सिद्धिः स्यादाकाशगमनादिका ।

तस्य कीदृशम्, पाणिपादं कीदृशम्, शिरोग्रीवं वा, कियती तस्य संख्येति पुरुषलक्षणानि गणयितुं न जानीमः। चातुर्वर्ण्यचातुराश्रम्यरूपश्चैष महाजनो वेदप्रथमप्रवृत्त आगमान्तरवादिभिरप्रत्याख्येय एव। तथा चैते बौद्धादयोऽपि दुरात्मानो वेदप्रामाण्यनियमिता एव चण्डालादिस्पर्शं परिहरन्ति। निरस्ते हि जातिवादावलेपे वा क्व चाण्डालादिस्पर्शे दोषः ? येऽप्यन्ये केचिदशुचिभक्षणागम्यागमनादिनिर्विकल्पदीक्षाप्रकारमकार्यमनुतिष्ठन्ति तेऽपि चातुर्वर्ण्यादिमहाजनभीतास्तं तं रहसि कुर्वन्ति न प्रकाशम्। निर्विशङ्के हि तच्छास्त्रप्रत्यये किमिति चौर्यवत् तदर्थानुष्ठानम्? अत एव न निजो महाजन उत्थापयितुं शक्यते वृन्दकादिः, किन्त्वयमेव चातुर्वर्ण्यादिमहाजनः। स चैष महाजनो वेदविरुद्धमागमं परिहरत्येव नानुमोदते।

संसारमोचकं स्पृष्ट्वा शिष्टाः स्नान्ति सवाससः।
बौद्धैरपि सहैतेषां व्यवहारो न कश्चन॥
वेदधर्मानुवर्त्ती च प्रायेण सकलो जनः।
वेदबाह्यस्तु यः कश्चिदागमो वञ्चनैव सा॥

ईदृशश्चायमनन्यसामान्यविभवो महाभागो वेदनामा ग्रन्थराशिर्यदन्ये बाह्यागमवादिन एनमेव स्पर्धन्ते। ते हि स्वागमप्रामाण्यमभिवदन्तो वेदरीत्या-

---

निरस्ते हि जातिवादावलेप इति। ब्राह्मणोऽस्मीति यो जातिवादस्तत्कृतोऽवलेपो दर्पो जातिवादावलेपः। यदाह

वेदप्रामाण्यं जातिवादावलेप-
स्तीर्थे स्नानेच्छा कस्यचित् कर्तृवादः।
संतापारम्भः पापहानाय चेति
ध्वस्तप्रज्ञानां पञ्चलिङ्गानि जाड्ये॥इति॥

येऽप्यन्ये केचिदिति। नाथवाद्यादयः। यथाहुः

माता च भगिनी चैव तथान्या या स्वगोत्रजा।
गम्याऽपरा त्वगम्येति नाथ एवं किलाब्रवीत्॥ इत्यादि॥

भिदधति। वेदे यथा तथा प्रवेष्टुमीहन्ते। वैदिकान् अर्थान् अन्तरान्तरा स्वागमेषु निबध्नन्ति। वेदस्पर्शपूतमिवात्मानं मन्यन्ते। तेषामप्यन्तर्हृदये ज्वलतीव प्रामाण्यम्। अत एवंविधाया महाजनप्रसिद्धेरागमान्तरेष्वदर्शनान्न तेषामाप्तप्रणीतत्वम्। आह

5 महाजनप्रसिद्ध्यैव वेदप्रामाण्यनिश्चयात्।
किमर्थः कण्ठशोषोऽयमियानार्येण संश्रितः॥

वेदप्रामाण्यसिद्ध्यर्थं हि इदं शास्त्रमारब्धमिति गीयते। वेदप्रामाण्यस्य च महाजनसिद्ध्यैव सिद्धत्वात् किं शास्त्रेण? अलं क्षुद्रचोद्यैरीदृशैः।

महाजनप्रसिद्धं हि केचिद् विप्लावयन्त्यपि।
10 अतस्तदुपघाताय शास्त्रमस्त्रं प्रयुज्यते॥

तस्मात् पूर्वोक्तानामेव प्रामाण्यमागमानां न वेदबाह्यानामिति स्थितम्।

### केषाञ्चिन्मते सामान्यत आगमानां प्रामाण्यम्

अन्ये सर्वागमानान्तु प्रामाण्यं प्रतिपेदिरे।
सर्वत्र बाधसन्देहरहितप्रत्ययोदयात्॥
15 सर्वत्र वेदवत् कर्तुराप्तस्य परिकल्पना।
दृष्टार्थेष्वेकदेशेषु प्रायः संवाददर्शनात्॥

यत् पुनरत्रोक्तं सर्व एवागमाः परस्परविरुद्धार्थोपदेशित्वादप्रमाणं स्युरिति, तत्रोच्यते, आप्तप्रणीतत्वेन तुल्यकक्ष्यत्वादन्यतमदौर्बल्यनिमित्तानुपलम्भाच्च न कश्चिदागमः कञ्चिद् बाधते। विरोधमात्रन्त्वकिञ्चित्करम्, प्रमाणत्वाभिमतेषु वेद-
20 वाक्येष्वपि परस्परविरोधदर्शनात्। पुरुषशीर्षस्पर्शनसुराग्रहगवालम्भादिचोदनासु वचनान्तरविरुद्धमर्थजातमुपदिष्टमेव। किञ्चागमानां विरोधोऽपि नातीव विद्यते, प्रमाणानां पुरुषार्थे सर्वेषामविवादात्।

---

वैदिकान् अर्थान् अन्तरान्तरेति। वैदिकान् भूतदयादीन्।
केचिद् विप्लावयन्त्यपि। यथा प्रतिपादितं 'कोऽयं महाजनो नाम' इत्यादि।
25 पुरुषशीर्षेति। 'पुरुषशीर्षमुपदधाति', 'सुराग्रहं गृह्णाति', 'गामालभत' इत्यादिषु। वचनान्तरविरुद्धम्। "नारं स्पृष्ट्वास्थि सस्नेहम्" इत्यादिविरुद्धम्।

नानाविधैरागममार्गभेदैरादिश्यमाना बहवोऽभ्युपायाः ।
एकत्र ते श्रेयसि संपतन्ति सिन्धौ प्रवाहा इव जाह्नवीयाः ।।

तथा ह्यपवर्ग उपेयः सर्वशास्त्रेषु निर्दिश्यते ज्ञानविषये तु विवदन्ते। तत्रापि प्रायश आत्मविषयतायां बहूनामविप्रतिपत्तिः। प्रकृतिपुरुषविवेकज्ञानपक्षे तु प्रकृतेर्विविक्ततया पुरुष एव ज्ञेयः । नैरात्म्यवादिनस्तु आत्मशैथिल्यजननायापदिशन्ति । स्वच्छन्तु ज्ञानतत्त्वं यत्तैरिष्यते तत् स्वातन्त्र्यादनाश्रितत्वादात्मकल्पमेव, कूटस्थनित्यत्वे प्रवाहनित्यत्वे च विशेषः। एवं प्रधानयोस्तावदुपायोपेययोरविवादः। क्रिया तु विचित्रा । प्रत्यागमं भवतु नाम भस्मजटापरिग्रहो वा, दण्डकमण्डलुग्रहणं वा, रक्तपटधारणं वा, दिगम्बरता वावलम्ब्यतां कोऽत्र विरोधः ? वेदेऽपि किमल्पीयांसः पृथगितिकर्त्तव्यताकलापखचिताः स्वर्गोपायाश्चोदिताः ? तस्मात् परस्परविरोधेऽपि न प्रामाण्यविरोधः । अतश्च यदुच्यते

कपिलो यदि सर्वज्ञः सुगतो नेति का प्रमा ।
अथोभावपि सर्वज्ञौ मतभेदस्तयोः कथम् ।।

इति तदपास्तं भवति, प्रधाने सति भेदाभावात्, क्वचिद् वा तद्भावेऽपि प्रामाण्याविरोधात् । न च हृदयक्रोशनहेतुकर्मोपदेशादागमान्तराणामप्रामाण्यम्, तस्याप्रमाणतायामप्रयोजकत्वात् ।

विचिकित्सा हि नृशिरःकपालाद्यशनेषु या ।
साप्यन्यदर्शनाभ्यासभावनोपनिबन्धना ।।

---

एकत्र ते श्रेयसीति । निःश्रेयसे, सर्वेषां तदर्थत्वात् ।

कूटस्थनित्यत्वेति । आत्मा कूटस्थोऽविचलद्रूपः सन् नित्यः, ज्ञानसन्तानस्तु अविच्छेदेन प्रवहत् प्रवाह इति ।

क्वचिद्वा तद्भावेऽपीति । यथा नित्यानन्दस्यात्मनोऽवस्थानं मोक्ष इति केचित्, अन्ये चितिमात्रस्य परिशुद्धस्य चित्तसन्तानस्य, इतरे विशेषगुणवियुक्तस्यात्मन इत्युपेये भेदः । न च हृदयक्रोशनेति । हृदयक्रोशनं विचिकित्सा ।

अन्यदर्शनाभ्यासेति । पुनः पुनर्यदभ्यस्तं 'नारं स्पृष्ट्वास्थि सस्नेहम्' इत्यादिदर्शनं तत्संस्कारवासितान्तःकरणानाम् ।

तथा च शान्तचित्तानां सर्वभूतदयावताम् ।
वैदिकीष्वपि हिंसासु विचिकित्सा प्रवर्त्तते ॥

अभिचारादिहिंसायां वैदिक्यामपि भवतु कामं हृदयोत्कम्पः, करणांशोपनिपातिनी हि हिंसेति लिप्सातस्तस्यां प्रवृत्तिः ।

5 यत्त्वग्नीषोमीयादिपशुहिंसा इतिकर्त्तव्यतांशस्था, यस्यां क्रत्वर्थो हि शास्त्रादवगम्यते इति वैदी प्रवृत्तिस्तस्यामपि कारुणिको लोकः सविचिकित्सो भवति वदति च "यत्र प्राणिवधो धर्मस्त्वधर्मस्तत्र कीदृशः" इति । न चैतावता वेदस्याप्रामाण्यम्, एवमागमान्तरेष्वपि भविष्यति ।

यत्तु आगमान्तरेभ्यः कौलादिभ्यः खेचरताद्यर्थसिद्धावपि निषिद्धाचरण-
10 कृतः (प्रत्यवायः) कालान्तरेऽवश्यं भावीत्युक्तम्, तदपि न युक्तम्, तस्यार्थस्य तदागमनिषिद्धत्वाभावात्. आगमान्तरनिषिद्धत्वेऽपि वैकल्पिकत्वकल्पनोपपत्तेः, पुरुषार्थप्राप्त्युपायत्वाच्च तस्य तस्मिन् सिद्धे कुतः प्रत्यवायः ? भवतु वा कालान्तरे ततः प्रत्यवायस्तथाप्यधिकारिभेदेन तत्फले कर्मणि चोद्यमाने श्येनादाविव नागमप्रामाण्यमत्र हीयते । 'श्येनेनाभिचरन् यजेते' त्यत्राभिचरन्निति शत्रा लङ्घितनिषेधमधि-
15 कारिणमाचष्टे । तस्य च श्येनयागश्चोदितः । स च तत्प्रयोगात् कृतवधः प्रत्यवैत्येव । न च वेदस्याप्रामाण्यम् । उक्तञ्च 'उभयमिह चोदनया लक्ष्यते अर्थोऽनर्थश्चेति ।

---

भवतु कामं हृदयोत्कम्पः, तस्यां हिंसायां विधेरव्यापारात् । कथमव्यापारश्चेत् तदाह करणांशोपनिपातिनी हीति । 'श्येनेनाभिचरन् यजेत' इत्यत्र हि श्येनयागाभिचारयोरुपायोपेयतापरिज्ञानमात्रेऽधिकारे विधेर्व्यापारः. प्रवृत्तौ तु तत्र विधिरुदास्ते
20 लिप्सातस्तत्र प्रवृत्तिसिद्धेः । तदुक्तम् 'यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्सार्थलक्षणा' इति। क्रत्वर्थः पुनः क्रतूपकारको योऽग्नीषोमीयपश्वालम्भादिस्तस्य फलं प्रति करणत्वस्य साक्षादनवगमात् तत्र लिप्सातः प्रवृत्तेरभावः, प्रवृत्तौ चासत्यां सेतिकर्तव्यताकस्य क्रतोरनिर्वाहात् । तत्र शास्त्रविधिरेव प्रवर्तकः । तदुक्तं भाष्यकृता "क्रत्वर्थो हि शास्त्रादवगम्यते" इति । अतोऽसावभिचारोऽवैधः शास्त्राविहित इति । तथाप्यधिकारि-
25 भेदेनेति । यस्तज्जन्यफलकामस्तदपेक्षया । शत्रा लङ्घितनिषेधमिति । अभिचरन्निति हि शतृप्रत्ययो लक्षणे । लक्षणञ्च पूर्वसिद्धं भवति । 'शयाना भुञ्जते यवनाः' इति

अधिकारभेदाच्च विचित्रकर्मचोदना नानुपपन्ना। मरणकामस्य सर्वस्वारश्चोदितः, आयुष्कामस्य कृष्णलचरुः। तस्मादेतदपि नाप्रामाण्यनिमित्तम्।

यद्यपि बौद्धागमे जातिवादनिराकरणं तदपि सर्वानुग्रहप्रवणकरुणातिशयप्रशंसापरम्। न च यथाश्रुतमवगन्तव्यम्। तथा च तत्रैतत् पठ्यते न जातिकायदुष्टान् प्रव्राजयेदिति। तस्मात् सर्वेषामागमानामाप्तैः कपिलसुगतार्हत्प्रभृतिभिः प्रणीतानां 5 प्रामाण्यमिति युक्तम्।

## केषाञ्चिन्मते सर्वेषामेवागमानामीश्वरप्रणीतत्वम्

अन्ये मन्यन्ते सर्वागमानामीश्वर एव भगवान् प्रणेतेति। स हि सकलप्राणिनां कर्मविपाकमनेकप्रकारमवलोकयन् करुणयाताननुग्रहीतुमपवर्गप्राप्तिमार्गं बहुविधमुत्पश्यन्नाशयानुसारेण केषाञ्चित् क्वचित् कर्मणि योग्यतामवगम्य तं तमुपायमुपदि- 10 शति। स्वविभूतिमहिम्ना च नानाशरीरपरिग्रहात् स एव संज्ञाभेदानुपगच्छति अर्हन्निति कपिल इति सुगत इति। स एवोच्यते भगवान्। नानासर्वज्ञकल्पनायां यत्नगौरवप्रसङ्गात्।

ननु बुद्धः शुद्धोदनस्यापत्यं स कथमीश्वरो भवेत्? परिहृतमेतद् भगवता कृष्णद्वैपायनेन 15

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥ इति।

शरीरमेव शुद्धोदनस्यापत्यं नात्मा। अतः प्रतियुगं विष्णुरेव भगवान् धर्मरूपेणावतरतीत्यागमविदः प्रतिपन्नाः।

ननु वेदसमानकर्तृकेष्वागमान्तरेषु कथं तादृशो महाजनसंप्रत्ययो नास्ति? एवं 20 नास्ति। तेन वर्त्मना भगवता कतिपये प्राणिनोऽनुगृहीताः, येषां तादृश आशयो लक्षितः। वैदिकेन तु वर्त्मना निःसंख्यकाः प्राणिनोऽनुगृहीता इति तत्र महानादर आग-

---

शयनस्य पूर्वसिद्धस्य लक्षणत्वात्। मरणकामस्य सर्वस्वार इति। 'सर्वस्वारेण मरणकामो यजेत'। आयुष्कामस्येति। 'शतकृष्णलं चरुं न प्राजापत्यमायुष्कामो निर्वपेत्' इति। 'मन्वादिचोदनान्यायः स यद्यपि न विद्यते' इति शैवादिप्रामाण्यसमर्थनावसरे 25

मान्तरेषु कृश इति । एककर्तृके परस्परविरोधः कथमिति चेद् ? वेदैरेवात्र वर्णित समाधिः । तेष्वपि भूम्नः परस्परविरोधस्य दर्शनादित्युक्तम् । तस्मादीश्वरप्रणीतत्वादेव सर्वागमानां प्रामाण्यम् ।

## वेदमूलकत्वेनैवागमानां प्रामाण्यमिति केचित्

5 अपरे पुनर्वेदमूलत्वेन सर्वागमप्रामाण्यमभ्युपागमन् । यो हि मन्वादिदेशनानां वेदमूलतायां न्याय उक्तः

भ्रान्तेरनुभवाद्वापि पुंवाक्याद् विप्रलम्भकात् ।
दृष्टानुगुणसामर्थ्याच्चोदनैव लघीयसी ।। इति ।

स सर्वागमेषु समानः । न च मन्वादिस्मृतीनां मूलभूता श्रुतिरुपलभ्यते ।
10 अनुमानेन तु तत्कल्पनमागमान्तरेष्वपि तुल्यम् ।

ननु चोक्तम्, 'अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यादि'ति तच्चेह नास्तीति कथं श्रुत्यनुमानम् ? नैष दोषः

एकाधिकारावगमो न प्रामाण्ये प्रयोजकः ।
मिश्रानुष्ठानसिद्धौ तु कामं भवतु कारणम् ।।

15 न च पृथगनुष्ठीयमानमपि कर्म न प्रमाणमूलं भवति वर्णाश्रमभेदानुष्ठेयकर्मवत् ।

कर्तृसामान्यशून्यत्वादथ मूलान्तरोदयः ।
तदसद् बाधकाभावाद् भ्रान्त्यादिप्रतिषेधनात् ।।
प्रत्यक्षमूलतायान्तु गुर्वी भवति कल्पना ।
20 वेदस्त्वनन्तशाखत्वान्मूलं तत्र स्वसङ्गतम् ।।
नन्वत्र वेदमूलत्वे द्वेषो वेदविदां कथम् ।
गत्वा त एव पृच्छ्यन्तां येषां द्वेषादि विद्यते ।।
गोवधे वा कथं तेषां द्वेषः सुस्पष्टवैदिके ।
प्रत्युक्तश्च विरुद्धत्वं शाखानन्त्याच्च दुर्गमम् ।।

---

5 यत् किञ्चित् सृष्टं तदिदानीं सर्वागमप्रामाण्यप्रतिपादनावसर उद्घाटयति—अपरे

किमियद् वेदसर्वस्वं यावदस्मन्मुखे स्थितम् ।
शाखान्तराद् वा संवादो न लभ्येतेति का प्रमा ॥

तथा च सांख्यशास्त्रप्रसिद्धत्रिगुणात्मकप्रकृतिसूचनपरम् 'अजामेकां लोहितशुक्लकृष्णामि'ति वैदिकं लिङ्गमुपलभ्यते । निर्ग्रन्थकथितवचसः चित्तत्त्वज्ञानशंसी चायमनुवादो दृश्यते 'मुनयो वातरसना' इति। एवं रक्तपटपरिग्रहभस्मकपालधारणादिमूलमप्यभियुक्ता लभन्त एव । 5

मन्वादिस्मृतिवत् कर्तृसाम्यस्यासम्भवेऽप्यतः ।
प्रमाणं वेदमूलत्वाद् वाच्या सर्वागमा स्मृतिः ॥

ततश्च

यः कश्चित् कस्यचिद्धर्मो मनुना परिकीर्त्तितः । 10
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥

इत्यत्र यथा मनुग्रहणं गौतमयमापस्तम्बसंवर्तकाठकादिस्मृत्यन्तरोपलक्षणम् एवमर्हत्कपिलसुगताद्युपलक्षणपरमपि व्याख्येयम् ।

ननु च लोकायताद्यागमोऽप्येवं प्रामाण्यं प्राप्नोति 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्यसंज्ञास्ती'ति वेदमूलदर्शनात् । ततश्च 15 लोकायतदर्शने प्रमाणभूते सति स्वस्ति सर्वागमेभ्यः । उच्यते

---

**पुनर्वेदमूलत्वेनेति** । अजामेकामिति । "अजामेकां लोहितकृष्णशुक्लां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको भजमानोऽनुशेते जहाति चैनां भुक्तभोगामजोऽन्यः ।" इति । अत्र लोहितशुक्लकृष्णग्रहणेन रजःसत्त्वतमोरूपतां तस्या आह । अनुशेते पुनः पुनस्तया सम्बन्धं भजते । मुनयो वातरशना इति । वात एव रशना वासो ग्रन्थनं 20 येषां ते वातरशना अतो वाससोऽभावादेव वातस्तेषां रशना अत एव निर्ग्रन्था भण्यन्ते । रसना इति तु पाठे रस्यत आस्वाद्यत इति रसनं बात एव रसनं येषां वायुभक्षा इत्यर्थः । एवं रक्तपटपरिग्रहेति । तथाहि रक्तपटदर्शनसंस्थोपनिषद्वाक्यमुदाहरति— "पौल्कसोऽपौल्कसश्चाण्डालोऽचाण्डालो ब्राह्मणोऽब्राह्मणः श्रमणोऽश्रमणः" इत्यादि तद्दर्शयति । प्रसिद्धामलमार्गप्रवृत्तं श्रमणमाचक्षते, 'श्रामण्यममलो मार्गः' इति हि ते 25 आहुः इतिः प्रभृति टीकाग्रन्थो मध्ये खण्डितः ।

न हि लोकायते किञ्चित् कर्तव्यमुपदिश्यते ।
वैतण्डिककथैवासौ न पुनः कश्चिदागमः ॥

ननु च 'यावज्जीवं सुखं जीवेदि'ति तत्रोपदिश्यते ? न । स्वभावसिद्धत्वे-नात्रोपदेशवैफल्यात् । 'धर्मो न कार्यः' 'तदुपदेशेषु न प्रत्येतव्यमि'त्येवं वा यदुपदिश्यते तत् प्रतिविहितमेव, पूर्वपक्षवचनमूलत्वाल्लोकायतदर्शनस्य । तथा च तत्रोत्तर-ब्राह्मणं भवति 'न वा अरे अहं मोहं ब्रवीमि अविनाशी वा अरेऽयमात्मा मात्रा-संसर्गस्त्वस्य भवती'ति । तदेवं पूर्वपक्षवचनमूलत्वाल्लोकायतशास्त्रमपि न स्व-तन्त्रम्, उत्तरवाक्यप्रतिहतत्वात्तु तदनादरणीयम् । शास्त्रान्तराणान्तु पूर्वपक्षवाक्य-मूलकत्वकल्पनमयुक्तम्, समनन्तरमेव तत्प्रतिपक्षवचनानुपलब्धेरित्यतो वेदमूलत्वात् सर्वागमः प्रमाणम् ।

## आगमप्रामाण्ये ग्रन्थकारमतम्

सर्वागमप्रमाणत्वे नन्वेवमुपपादिते ।
अहमप्यद्य यं कञ्चिदागमं रचयामि चेत् ॥
तस्यापि हि प्रमाणत्वं दिनैः कतिपयैर्भवेत् ।
तस्मिन्नपि न पूर्वोक्तन्यायो भवति दुर्वचः ॥

जरत्पुस्तकलिखितं यदपि तदपि किञ्चिदिदानीं केनापि धूर्तेन प्रख्याप्यते ।

महाजनसमूहे ये प्रसिद्धिं प्रागुरागमाः ।
कृतश्च बहुभिर्येषां शिष्टैरिह परिग्रहः ॥
अद्य प्रवर्तमानाश्च नापूर्वा इव भान्ति ये ।
येषां न मूलं लोभादि येभ्यो नोद्विजते जनः ॥
तेषामेव प्रमाणत्वमागमानामिहेष्यते ।
न मृष्यते तु यत्किञ्चित्प्रमाणं कुट्टनीमतम् ॥

तथा हि

अमितैकपटनिवीतानियतस्त्रीपुंसविहितबहुचेष्टम् ।
नीलाम्बरव्रतमिदं किल कल्पितमासीद् विटैः कैश्चित् ॥
तदपूर्वमिति विदित्वा निवारयामास धर्मतत्त्वज्ञः ।
राजा शङ्करवर्मा न पुनर्जैनादिमतमेवम् ॥

इत्याप्तोक्तत्वहेतोः परिमुषितपरोदीरिताशेषदोषा-
देषां वेदागमानां सुदृढमुपगते मानभावे प्ररोहम् ।
तन्मूलत्वात् तथात्वं पुरुषवचनतो वास्तु शास्त्रान्तराणां
तद्द्वारेणापि वक्तुं न खलु कलुषता शक्यते वेदवाचाम् ॥

## वेदप्रामाण्ये शङ्का 5

ननु नाद्यापि वेदस्य प्रामाण्यं सुस्थवत् स्थितम् ।
स्वदेहसंभवैरेव दोषैरनृततादिभिः ॥

'चित्रया यजेत पशुकामः' पुत्रकामः 'पुत्रेष्ट्या यजेते'ति श्रूयते । न चेष्ट्यनन्तरं पुत्रपश्वादिफलमुपलभ्यते । तस्मादसत्याः चित्रादिचोदनाः ।

ननु च यः पशुकामः स इष्टिं कुर्यादितीयानेव वाक्यार्थः । तत्र यागात् 10 पशवो भवन्तीति एतदेव तावदुपपाद्यम् । ते च भवन्तोऽप्यनन्तरमेव भवन्तीत्येतद् दुरुपपादनम् । अतः कथं न सत्यार्थत्वं चित्रादिचोदनानाम् ? उच्यते, यावज्जीवं यजेत यावज्जीवं जुहुयादिति जीवनवदसाध्यमानपशुकामनैव नाधिकारिविशेषणं भवितुमर्हति, पशूनां ततः कर्मणः सिद्धिमनवबुध्यमानस्य तत्राधिकार एव न सम्प्र-वर्त्तते एव इति निर्णेष्यते एतत् । आनन्तर्यमपि कर्मस्वभावपर्यालोचनेनैव गम्यते, 15 समनन्तरफलत्वेन कर्मणां दृष्टत्वात् । आह च 'कर्मकाले च फलेन भवितव्यम्, यत्कालं हि मर्दनं तत्कालं मर्दनसुखमि'ति । अधिकार्यपि पश्वाद्यभावपरितप्य-मानमानस एव कर्मण्यधिक्रियते यदि सद्य एव ततः फलमासादयेत् । कालान्तरे च कर्मणः प्रध्वंसात् कुतः फलम् ? आह च 'यदा तावदियं विद्यमानासीत्तदा फलं न दत्तवती यदा फलमुत्पद्यते तदासौ नास्ति, असती कथं फलं दास्यती'ति । अपि 20 च कालान्तरे फलस्यान्यत् प्रत्यक्षं कारणमुपलभ्यते सेवादि । तस्मिंश्च कारणे दृष्टे सति को नाम सूक्ष्मदृष्टिरदृष्टं चित्रादिकारणं कल्पयेत् ? तस्मादसत्याश्चित्रादि-चोदनाः, प्रत्यक्षादिप्रमाणपरिच्छेद्ययोग्यार्थोपदेशत्वे सत्यपि तत्संवादशून्यत्वात्, एवंविधविप्रलम्भकवाक्यवत् ।

चित्रादिवचसामेवमपचारस्य दर्शनात् । 25
अनाश्वासोऽग्निहोत्रादिचोदनास्वपि जायते ॥

अग्निहोत्रचोदना मिथ्या, वेदैकदेशत्वात्, चित्रादिचोदनादिवत्, तदत्र तावद-संवादादप्रामाण्यम्। एवं 'पुत्रकामः पुत्रेष्ट्या यजेते'त्येवमादावपि असंवादो द्रष्टव्यः।

विसंवादोऽपि क्वचिद् दृश्यते। प्रमीते यजमाने पात्रचयाख्यं कर्मोपदिश्यैव-मादिदेश वेदः 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याती'ति तत्रैष इति 5 तावदात्मनो निर्देशः क्लिष्ट एव, परोक्षत्वात्, स्फ्यकपालादियज्ञायुधसम्बन्धाभा-वाच्च। कायस्त्वेष निर्दिश्यते स न स्वर्गं लोकं यातीति। तद्विपरीतभस्मीभावोप-लम्भादिति विसंवादः। एवञ्चासंवादविसंवादाभ्यामप्रमाणं वेदः।

व्याघाताच्च। उदिते होतव्यमनुदिते होतव्यं समयाध्युषिते होतव्यमिति होमकालत्रयमपि विधाय निन्दार्थवादैस्तदेव निषेधति श्यामो वा अस्याहुति-10 मभ्यवहरति य उदिते जुहोति, शबलो वा अस्याहुतिमभ्यवहरति योऽनुदिते जुहोति, श्यामशबलावस्याहुतिमभ्यवहरतो यः समयाध्युषिते जुहोति। न चार्थवादमात्र-मेतदिति वक्तव्यम्, यतः—

विधानं कल्पते स्तुत्या निन्दया च निषेधनम्।
विधिस्तुत्योः समा वृत्तिस्तथा निन्दानिषेधयोः॥

15 न हि निन्दा निन्द्यं निन्दितुमुपादीयते किन्तु निन्दितादितरत् प्रशंसितुमित्ययमपि प्रकारोऽत्र न सम्भवति, कालत्रयस्याप्यत्र निषेधात्, कस्यान्यस्य तन्निन्दया प्रशंसा विधीयते ? तस्मात् परस्परविरुद्धार्थोपदेशलक्षणाद् व्याघातादप्रमाणं वेदः।

पौनरुक्त्याच्च। 'त्रिः प्रथमामन्वाह त्रिरुत्तमामि'त्यभ्यासचोदनायां प्रथमो-

---

······च निषेधेन निवर्त्यते तथा निन्दयापीति समा वृत्तिः। इतरप्रशंसार्थमपि निन्दा भवति यथा 'प्राप्य गाण्डीवधन्वानं विद्धि कौरव तान् स्त्रियः' इति न केवलं 20 प्रतिषेधायेति यो मन्येत तमपि प्रत्याह न हि निन्दा निन्द्यं निन्दितुमित्यादि।

त्रिः प्रथमामिति। सामिधेन्यः समिधामग्नौ प्रक्षेपणमन्त्राः, तस्य प्रक्षेपणा-ख्यस्य कर्मणो हि प्रकाशकोऽसौ मन्त्रः, तच्च सकृदुच्चारितेनापि तेन शक्यते कर्तुं प्रकाशनमिति त्रिरुच्चारणं पुनरुक्तम्। एकादश च ते मन्त्राः पठ्यन्ते, 'पञ्चदश साम-25 धेनीरनुब्रूयात्' इति च श्रूयते, अतः प्रथमोत्तमयोस्त्रिरुच्चारणं पञ्चदशसङ्ख्या-सम्पत्त्यर्थं क्रियते।

त्तमयोः सामिधेन्योस्त्रिर्वचनात् पौनरुक्त्यम्। सकृदनुवचनेन तत्प्रयोजनसम्पत्तेरनर्थकं त्रिर्वचनम् । तस्मादित्थमनृतव्याघातपुनरुक्तदोषकलुषितत्वादप्रमाणं वेदः । तदाह सूत्रकारः "तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः" पुत्रकामेष्टिहवनाभ्यासेष्विति ।

## वेदप्रामाण्ये शङ्कानिरसनम् 5

अत्र समाधिमाह "न। कर्मकर्तृसाधनवैगुण्यादिति" । अयमाशयः अप्रामाण्यसाधनमनृतत्वं परैरुक्तम्, अनृतत्वे च साधनं फलादर्शनम्, एतच्चानैकान्तिकम्, अन्यथापि फलादर्शनोपपत्तेः । किं वेदस्यासत्यार्थत्वादत्र फलादर्शनम् उत कर्त्रादिवैगुण्यादिति ? न विशेषहेतुरस्ति । ननु न कदाचिदपि कर्मसमनन्तरमेव फलमुपलब्धमिति तदनृतत्वमेव तददर्शनकारणं न कारणवैगुण्यमिति, तदयुक्तम्। अविगुणायां कारीर्यां प्रयुक्तायां सद्य एव वृष्टेर्दर्शनात्। न च तत् काकतालीयम्, आगमेनान्वयव्यतिरेकाभ्याञ्च तत्कारणत्वदर्शनात् । पुत्रादिस्त्वैहिकमपि फलं वस्तुस्वभावपर्यालोचनयैव न सद्यो भवितुमर्हति । न हि नभसस्तदानीमेव वृष्टिरिव निपतति पुत्रः, स्त्रीपुंसयोगकारणान्तरसव्यपेक्षत्वात्तदुत्पत्तेः । पश्वादिप्राप्तिस्तु कस्यचिदुत्तरकालेऽपि दृश्यते प्रतिग्रहादिना। तथा ह्यस्मत्पितामह एव ग्रामकामः सांग्रहणीं कृतवान्। स इष्टिसमाप्तिसमनन्तरमेव गौरमूलकं ग्राममवाप । नन्वेवं तर्हि प्रतिग्रहाद्येव दृष्टं कारणमस्तु पश्वादेः पुत्रस्य च स्त्रीपुंसयोगः, किमिष्टेः कारणत्वकल्पनयेति ? मैवं वोचः । सत्स्वपि च दृष्टेषु कारणेषु तददर्शनाद् इष्टिप्रयोगानन्तरं चैतद्दर्शनादिष्टिकृतं स्त्रीपुंसयोगादिकारणत्वमिति निश्चीयते । किञ्च

---

कर्मकर्तृसाधनवैगुण्यादिति । इष्ट्या पितरौ संप्रयुज्यमानौ पुत्रं जनयत इति । इष्टिः करणं साधनम्, कर्तृलक्षणं पितरः, तत्सम्प्रयोगः कर्म, त्रयाणामपि गुणसंयोगात् पुत्रजन्म, वैगुण्याद् विपर्ययः । इष्ट्याश्रयं तावत् कर्मवैगुण्यं समीहाभ्रेषः; कर्तृवैगुण्यम् अविद्वान् प्रयोक्ता कपूयाचरणं वा; साधनवैगुण्यं हविर्न संस्कृतमुपहृतमिति, मन्त्रा न्यूनाधिकाः स्वरवर्णहीना इति, दक्षिणा दुरागता हीना निन्दिता वेति । उपजनाश्रयं कर्मवैगुण्यं मि [थ्यासम्प्रयोगः], कर्तृवैगुण्यं योनिव्यापदो बीजोपघातश्च; साधनवैगुण्यमिष्ट्यामभिहितम्, कपूयाचरणः कुत्सिताचारः, मिथ्यासम्प्रयोगः पुरुषायितत्वादिना सम्प्रयोगः।

सेवाध्ययनकृष्यादिसाम्येऽपि फलभेदतः ।
वक्तुं न युक्ता तत्प्राप्तिर्दृष्टकारणमात्रजा ।
भूतस्वभाववादश्च पुरस्तात् प्रतिषिध्यते ।
तस्मान्नूनमुपेतव्यमत्रान्यदपि कारणम् ।।

5 तदुक्तम्, तच्चैव हि कारणं शब्दश्चेति । यत्र पुनरविगुणेऽपि कर्मणि प्रयुज्यमाने कालान्तरेऽपि पुत्रपश्वादिफलं न दृश्यते तत्र तीव्रं किमपि प्राक्तनं कर्म प्रतिबन्धकं कल्पनीयम् । यथोक्तम् "फलति यदि न सर्वं तत् कदाचित्तदेव ध्रुवमपरमभुक्तं कर्म शास्त्रीयमास्ते" इति । कर्मादिवैगुण्यग्रहणमुपलक्षणार्थमृषिणा प्रयुक्तम् । न तु वेदस्याप्रामाण्यकल्पना साध्वी साद्गुण्ये कर्मणः प्राचुर्येण फल-
10 दर्शनात् ।

अपि च चित्रातः पशवो भवन्तीत्येतावानेव शास्त्रार्थः । आनन्तर्ये तु न किञ्चित् प्रमाणमस्ति । तदयं प्रत्यक्षादिसंवाद आनन्तर्यविषयः, चित्रादिचोदना त्वनिर्दिष्टकालविशेषविषयेति विषयभेदान्न सा तेन बाध्यते । तदाह भट्टः

आनन्तर्याद्यसंवादो नाविशेषप्रवर्तिनीम् ।
15 चोदनां बाधितुं शक्तः स्फुटाद् विषयभेदतः ।। इति

---

भूतस्वभाववादश्चेति । शरीरारम्भकाणि यानि भूतानि तेषामीदृक् कश्चित् स्वभावविशेषो यत् कानिचिदेव पश्वादिभिः सम्बध्यन्ते कानिचिन्नेति ।

तच्चैव हि कारणम् इति । शाबरं भाष्यम् 'यच्च कालान्तरे फलस्यान्यत् प्रत्यक्षं कारणमस्तीति । नैष दोषः" इति । अतः परं स्थितम् । यद्यपि प्रत्यक्षतः सेवादीनां कारणत्वमवगम्यते तथापि शब्दात् 'चित्रया यजेत पशुकामः' इत्यादेश्चित्रा-
20 दीनामपि कारणत्वावगमः; यथा प्रत्यक्षं प्रमाणं तथा शब्दोऽपीत्यर्थः । कर्मादिवैगुण्यग्रहणमिति । यथा कर्मादिवैगुण्यात् फलं न भवति एवं तीव्रप्राग्भाविकर्मान्तरप्रतिबन्धादपीति । ननु कथमेवंप्रायाः कल्पनाः स्थाप्यन्ते, किमाभिरित्याशङ्क्याह—न तु वेदस्याप्रामाण्यकल्पनेति । साद्गुण्ये कर्मण इति । अरणिनिर्मथनसाद्गुण्येन कृताग्न्युत्पत्ति-
25 दर्शनादन्यथा चादर्शनादिति ।

नाविशेषप्रवर्तिनीमिति । 'चित्रया पशुकामो यजेत' चित्रातः पशवो भवन्तीत्येतावत्येवाविशेषेण चोदनैषा स्थिता, न पुनरनन्तरं भवन्तीति विशेषेऽपीत्यर्थः ।

यत्तु कर्मस्वभावपर्यालोचनया चित्रादेरनन्तरफलत्वमुक्तम्, यत्कालं हि मर्दनं तत्कालं मर्दनसुखमिति। तदेतदत्यन्तमनभिज्ञस्याभिधानम्। विधिफलानां क्रियाफलतुल्यत्वानुपपत्तेः। इह किञ्चिद् विधिफलं भवति किञ्चित् क्रियाफलम्। कृष्यादौ तु भूमिपाटवादि क्रियाफलं सस्यसम्पत्तिस्तु विधिफलम्। कः पुनः कृष्यादौ विधिरस्ति ? वार्त्ताविद्यायां वृद्धोपदेशे वा कश्चिद्विधिः ? अन्वयव्यतिरेकौ वा तत्र विधिस्थानीयौ भविष्यतः। लोकेऽपि वेतनकामः पचतीत्यादौ पाकक्रियाफलमोदनः, विधिफलन्तु वेतनम्। तत्र क्रियाफलानामेवैष नियमो यत् क्रियानन्तरभावित्वम्। विधिफलानान्तु वेतनादीनां नास्ति कालनियमः। इष्टावपि हविर्विकारादि क्रियाफलं सद्यो भवति, मृद्नतस्तु पुंसः सेवाफलमनियतफलम्।

ग्रामकामो महीपालं सेवेतेत्येवमादिषु।
लौकिकेषु विधिष्वस्ति न कालनियमः फले॥

आयुर्वेदोपदिष्टानामप्यौषधविधीनां न क्रियावत् सद्य एव फलदर्शनम्। अपि तु कालापेक्षमेवेति न फलानन्तर्ये किञ्चित् प्रमाणम्।

यत्तु पशुविरहकृत-कदशनादिदोदूयमानाधिकारिस्वरूपपर्यालोचनया सद्यः फलत्वमुच्यते तदपि न साम्प्रतम्, पुरुषेच्छामात्रमेतन्न प्रमाणवृत्तम्।

अपि चैहिकत्वं फलस्य तावता सेत्स्यति न पुनः क्रियाफलवत् सद्यस्त्वम्। सन्ति चैहिकफलान्यपि कालान्तरसव्यपेक्षाणि कर्माणि, यथा 'ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे' इति। न तत्र पञ्चमवर्षे उपनीतमात्र एव माणवको ब्रह्मवर्चससम्पन्नो भवति कालान्तरे तु भवतीति। एवं वीर्यकामादिष्वपि द्रष्टव्यम्। तस्माद् विधिफलानामानन्तर्यनियमाभावान्न तद्विसंवादो दोषाय। कालान्तरेऽपि यत्र फलादर्शनं तत्र क्रियावैगुण्यकर्मान्तरप्रतिबन्धादि कारणमित्युक्तम्।

---

वार्तविद्यायां। कृषिः पाशुपाल्यं वाणिज्या च वार्ता। मृद्नतो मर्दनकर्तुः।

एवं वीर्यकामादिष्विति। उत्तरश्लोकार्धापेक्षया। तदुक्तं 'राज्ञो बलार्थिनः षष्ठे वैश्यस्यार्थार्थिनोऽष्टमे' इति।

## वेदप्रामाण्यसमर्थने मतान्तरम्

अन्ये कर्त्त्रादिवैगुण्यकल्पनाननुमोदिनः ।
इहाफलस्य चित्रादेः फलमामुत्रिकं जगुः ।

सर्वाङ्गोपसंहारेण काम्यकर्मप्रयोगात् कोऽवसरः कर्मवैगुण्यकल्पनायाम् ? जन्मातरे तु तत्फलमिति कल्पना ।

तथा च त्रिविधं कर्म किञ्चिदैहिकफलमेव किञ्चिदनियतफलमेव किञ्चिदामुष्मिकफलमेव इति कल्पना ।

तत्र कारीर्यादि तावदैहिकफलमेव । तद्धि सकलजनपदसंतापकारिणि महत्यवग्रहे प्रस्तूयते । वृष्टिलक्षणञ्च तत्फलं स्वभावत एव सकललोकसाधारणम् । आसन्नतयैव तदभिलषणीयमिति सद्य एव भवितुमर्हति । वचनानि च तत्र तादृश्येव दृश्यन्ते 'यदि वर्षेत्तावत्येवेष्टिं समापयेद् यदि न वर्षेच्छ्वोभूते जुहुयादि'ति । आमुष्मिकफलन्तु कर्म ज्योतिष्टोमादि फलस्वभावमहिम्नैव पारलौकिकफलं भवति ।

स्वर्गो निरुपमा प्रीतिर्देशो वा तद्विशेषणः ।
भोक्तुं नोभयथाप्येष देहेनानेन शक्यते ॥

चित्रादि त्वनियतफलं कर्म । तत्फलस्य पश्वादेरिह वा परत्र वा लोके सम्भवात्, अवश्यं चैतदेवं विज्ञेयम् । तथा ह्यकृतचित्रायागानामपि इह जन्मनि पशवो दृश्यन्ते ते परिदृश्यमानसेवाप्रतिग्रहादिकारणका एवेति कथ्यमाने कर्मनिमित्तत्वहाने बृहस्पतिमतानुप्रवेशप्रसङ्गः । कर्मनिमित्तकत्वे तु तेषां पशूनामुपपादकं किं कर्मेति निरूपणीयम् । न हि ब्रह्मवर्चसफलात् कर्मणः पशवो

---

कर्त्रादिवैगुण्येति । कर्त्रादिवैगुण्यं फलादर्शने कारणमननुमोदमानाः ।

सर्वाङ्गोपसंहारेणेति । यदा सर्वाङ्गान्युपसंहर्त्तुं शक्नुयात् तदा काम्यं कुर्यादिति व्यवस्थापनात् ।

अवग्रहे वर्षप्रतिबन्धे । श्वोभूते जुहुयाद् । द्वितीये दिने होमशेषं समापयेद् ।

ननूपनयनादेर्ब्रह्मवर्चसादिफलात् कर्मणः पशवो भविष्यन्तीत्याशङ्क्याह न हि ब्रह्मवर्चसफलादिति ।

निष्पद्यन्ते । चित्रा च पशुफला इह जन्मनि तैर्न कृतैव, पूर्वजन्मकृता तु तस्मिन्नेव जन्मनि फलं दत्तवतीति नियतैहिकफलाभ्युपगमादिति कुतः पशुसम्पत्? ननु गौतम-वचनप्रामाण्यात् पूर्वकृतभुक्तशिष्टज्योतिष्टोमादिकर्मनिमित्तकः पशुलाभो भविष्यति ? यथोक्तम् 'वर्णाश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य फलमनुभूय पतन्तः शेषेण विशिष्टदेशश्रुतवृत्तवित्तादियुक्तं जन्म प्रतिपद्यन्त इति । नैतद् यथाश्रुतं बोद्धुं युक्तम्

न ह्यन्यफलकं कर्म दातुमीष्टे फलान्तरम् ।
साध्यसाधनभावो हि नियतः फलकर्मणाम् ॥

तस्मात् समूहापेक्षाशेषवाचोयुक्तिर्व्याख्येया । बहूनि कर्माणि वर्णा आश्रमाश्च कृतवन्तः, ततः कर्मसमूहाज्ज्योतिष्टोमादिफलं प्रेत्यानुभूयते, ततः शेषेण चित्रादिना कर्मणा विशिष्टं जन्म प्रतिपद्यन्ते इत्यर्थः । तस्मात् पूर्वजन्मकृतचित्रादिनिबन्धन इह जन्मनि पशुलाभो नाकर्मनिमित्तको नान्यकर्मनिमित्तक इत्येवमनियतफलत्वाच्चित्रादेरिह जन्मनि फलादर्शनेऽपि नानृतत्वं तच्चोदनानां, जन्मान्तरे हि ता इष्टयः फलं दास्यन्तीति ।

## वेदप्रामाण्यशङ्कानिरासे प्रकारान्तरम्

अत्रोच्यते, किं वाचनिकमेतत् कर्मणां त्रैविध्यम्? अथ विधिवृत्तपरीक्षागम्यम्, आहो फलरूपपर्यालोचनया लभ्यम्, उत पुरुषेच्छाधीनमिति । तत्र वचनं तावत्त्रिविधविभागप्रतिपादकं नास्ति 'कारीरीं निर्वपेद् वृष्टिकामः' 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति 'चित्रया पशुकामः' इत्येतावन्मात्रश्रवणम् । न ह्यत्रैहिकत्वं पारलौकिकत्वमनियतत्वं वा फलस्य क्वचित् पठितम् । विधिवृत्तमपीयदेव यत् सप्रत्ययप्रवर्त्तनं नाम । तत्र इदमेवंकामेन कर्त्तव्यमित्येतावाँल्लिङर्थः । अपुरुषार्थरूपे तु व्यापारे प्रवर्त्तकत्वलक्षणस्वव्यापारनिर्वहणमनधिगच्छन् विधिरधिकारिविशेषणस्य काम्यमानस्य स्वर्गादेः, भावार्थस्य च यागादेः साध्यसाधनसम्बन्धमाक्षिपति, न काम्यमानस्य सद्यः कालान्तरे वा निष्पत्तिमाक्षिपतीति । फलस्वरूपपर्यालोचनया तु सत्यं स्वर्गस्य पारलौकिकत्वमवगम्यते न तु पश्वादेर्नियमः । पुरुषेच्छा तु पुरुषेच्छैव, न तया शास्त्रार्थो व्यवस्थापयितुं शक्यः । तस्मान्निष्प्रमाणकं त्रैविध्यम् ।

---

सप्रत्ययप्रवर्तनमिति । सचेतनो हि कथं निष्फले प्रवर्तेतेति ।

यस्तु चित्रादीनामनियतफलत्वे न्याय उक्तः 'चित्रादीनां फलं तावत् क्षीणं तत्रैव जन्मनि' इत्यादि, स कारीर्यामपि निश्चितैहिकफलायां योजयितुं शक्यः ।

अद्याकृतायां कारीर्यां न हि देवो न वर्षति ।
जन्मान्तरकृता तत्र कारीरी किं न कारणम् ॥

5 तस्मात् साप्यनियतफला भवतु । अथ सस्यसम्पत्सम्पाद्यसुखसम्भोगसाधनभूतादृष्टनिमित्ता कारीरीष्टिरद्याकृतायामपि कारीर्यामिति मन्यसे ? तर्हि दधिक्षीरादिभक्षणसुखाक्षेपिकर्मनिमित्तकः पशुलाभो भविष्यति । अकृतचित्रायागानां कार्यधीन ओदनः, चित्रादीनां दधीति, दध्योदनभोजनसुखसाधनादृष्टकारिता पशुवृष्टिसृष्टिर्भवतु । अथ शृङ्गग्राहिकया पशुफला चित्रेष्टिरुपदिश्यते तेन न सुख-
10 सामान्याक्षेपिकर्मनिबन्धनः पशुलाभः ? एवं तर्हि वृष्टावपि शृङ्गग्राहिकया कारीरी पठ्यत एवेति वृष्टिरपि सामान्यादृष्टनिबन्धना मा भूत् ?

'अथ न यदि वर्षेच्छ्वोभूते जहुयादि'त्यादिवचनपर्यालोचनया तस्यामैहिकफलत्वमुच्यते। यद्येवं यत्र तादृशं वचनं नास्ति 'यो वृष्टिकामः स सौभरेण स्तुवीत यदि कामयेत वर्षेत्पर्जन्यः' इति 'नीचैः सदो मिनुयादि'त्यादौ, तत्र पारलौकिक-
15 फलत्वं स्यात् ? यदि च 'श्वोभूते जुहुयादि'ति वचनमहिम्नैव फले सद्यस्त्वमात्रमधिकं भवतु, तादृशवचनरहितानां कर्मणां विस्पष्टसिद्धमप्यैहिकफलत्वं निवर्त्तते ।

यत् पुनर्बहुसाधारणत्वेन वृष्टेरैहिकत्वमुच्यते तदपि पश्वादौ समानम् । न ह्यात्मम्भरिरेव यजमानो भवति, तस्यापि स्ववासिनीकुमारातिथिभृत्यादिभोजनपूर्वकस्वभोजननियमोपदेशाद् । बहुतरोपकारकत्वन्तु वृष्टेरित्यलं तुलया ।

20 यदपि प्रत्यासन्नत्वेन काम्यमानत्वाद् वृष्टेरैहिकत्वं कथ्यते तदपि तादृगेव, पश्वादेरपि तथैव काम्यमानत्वात् । तत्रावग्रहविहितसन्तापतया प्रत्यासन्नत्वेन वृष्टि-

---

क्षीणं तत्रैव जन्मनि । 'न च स्वर्गफलस्येह कश्चिदंशोऽनुवर्तते' इति शेषः ।

यो वृष्टिकाम इति । यो वृष्टिकामः स सौभरेण स्तोत्रविशेषेण स्तुवीतेत्येतावदेवोक्तम् । तत्र 'यदि न वर्षेत्' इत्यादि नोक्तम् । यदि कामयेतेति । सदो यत्र होत्रादयः
25 ऋत्विजो याज्यानुवाक्यास्तोत्रादिपाठव्यापारमुपविष्टाः सम्पादयन्ति, तन्नीचैर्मिनुयाव् अनुच्चाः स्थूणास्तत्र निदध्यादित्यर्थः ।

रभिलष्यते इहापि दौर्गत्योद्वेगादासन्नतयैव पशवः काम्यन्ते । 'तस्माद् वारिदस्तृप्ति-माप्नोति सुखमक्षयमन्नदः' इत्यादिवचनोपदिष्टसामान्यसुखसाधनादृष्टनिबन्धनै-वेयम् । इहाकृतकर्मणां वृष्टिपश्वादिसम्पदिति न बृहस्पतिमतवदकर्मनिमित्तं फलम् । नापि कर्मफलसाध्यसाधनभावनियमव्यवहारोल्लङ्घनमिति ।

यच्च कारीर्याः क्वचित् फलसंवादे समाधानमुक्तम् 5

'फलति यदि न सर्वं तत् कदाचित् तदेव ।
ध्रुवमपरमभुक्तं कर्म शास्त्रीयमास्ते' ।। इति ।

तेन साप्यनियतफलैव स्याद् । न हि तत् कर्मान्तरमासंसारं प्रतिबन्धकं भवति फलोपभोगाद्धि तस्यावश्यं क्षयेण भवितव्यम् । प्रतिबन्धके च क्षीणे कारीर्या स्वफलं तदा दातव्यमेव । साप्यदत्तफला न क्षीयते एव इत्येवं जन्मान्तरे 10 तत्फलसम्भवात् तस्य अनियतफलत्वम् । अनेन च प्रकारेण चित्रादेरप्यनिय-तफलत्वमस्माभिरिष्यते एव यत्र सम्यक् प्रयुक्तायामपीष्टौ कर्मान्तरप्रति-बन्धादेव पशूनामनुपलम्भः कथ्यते । सर्वथा सद्यःफलत्वमात्रवर्जं समानयोगक्षेमा कारीर्या चित्रेष्टिः । एतेन ब्रह्मवर्चसवीर्यान्नाद्यग्रामादिकामेष्टयोऽपि व्याख्याताः । तस्माद् यथाश्रुतमेव बोद्धव्यम् । 15

यदप्यभ्यधायि समग्राङ्गोपसंहारेण काम्यकर्मप्रयोगात् कुतः कर्मणो वैगुण्या-वसरः ? इति तदप्यसारम् । सर्वाङ्गोपसंहारेण प्रवृत्तावपि प्रमादादसंवेद्यमानवै-गुण्यसम्भवात् । स च विचित्रः प्रदर्शितो भाष्यकारेण । तस्मात् पूर्वोक्त एव प्रतिसमाधानमार्गः श्रेयान् ।

## कर्मणामदृष्टद्वारैव फलजनकत्वम् 20

यत् पुनः पूर्वपाक्षिकेण कथितं कालान्तरे कर्माभावात् कुतः फलमिति, तदपि न सम्यक्

---

यथाश्रुतमेव स्वर्गादिफलापेक्षयैव शेषत्वमिति ।

प्रदर्शितो भाष्यकारेणेति । 'कर्मकर्तृसाधनवैगुण्यात्' इति सूत्रव्याख्याने प्रदर्शितः, तथैव प्राक् प्रतिपादितोऽस्माभिः । 25

यद्यप्याफलनिष्पत्तेः कर्मणो नास्त्यवस्थितिः ।
तथाप्यस्त्येव संस्कारः पुरुषस्य तदाहितः ॥
कर्मजन्यो हि संस्कारः पुंसां बुद्धयादिवद् गुणः ।
तस्य चाफलसंयोगादवस्थितिरुपेयते ॥
5 यथेन्द्रियादिसंयोगादात्मनो बुद्धिसम्भवः ।
तथा यागादिकर्मभ्यस्तस्य संस्कारसंभवः ॥
बुद्धिस्तु भङ्गुरा तस्य संस्कारस्तु फलावधिः ।
साध्यसाधनभावो हि नान्यथा फलकर्मणोः ॥
स्मृतिबीजन्तु संस्कारस्तस्यान्यैरपि मृष्यते ।
10 तथैव फलसंयोगबीजं सोऽस्य भविष्यति ॥
स यागदानहोमादिजन्यो धर्मगिरोच्यते ।
ब्रह्महत्यादिजन्यस्तु सोऽधर्म इति कथ्यते ॥

## धर्मपदार्थस्वरूपविषये मतान्तरखण्डनम्

कापिलास्तु अन्तःकरणस्य बुद्धेर्वृत्तिविशेषमाहुः । आर्हताः पुण्यपुद्गलान्
15 धर्मत्वेन व्यपदिशन्ति । शाक्यभिक्षवश्चित्तवासनां धर्ममाचक्षते । वृद्धमीमांसका यागादिकर्मनिर्वर्त्यमपूर्वं नाम धर्ममभिवदन्ति । यागादिकर्मैव शाबरा ब्रुवते । वाक्यार्थ एव नियोगात्मा अपूर्वशब्दवाच्यो धर्मशब्देन स एवोच्यते इति प्राभाकराः कथयन्ति ।

तत्र पुण्यपुद्गलवृत्तिपक्षयोः कपिलार्हद्ग्रन्थकथितयोस्तन्मतनिरासादेव
20 निरासः। आत्मनश्च समर्थयिष्यमाणत्वात् तस्यैव वासना न चेतस इति सौगतपक्षोऽप्ययुक्तः। स्वर्गयागान्तरालवर्त्तिनश्च स्थिरस्य निराधारस्यापूर्वस्य निष्प्रमाणकत्वाज्जरज्जैमिनीयप्रवादोऽप्यपेशलः। अपि च फलस्य वा काचिदुत्पद्यमानदशा

---

कापिलास्त्विति। यागब्रह्महत्यादिक्रियाभिर्निष्पन्नसंस्कारो योऽभिव्यज्यमानः प्रकाशरूपबुद्धिवृत्तिस्वरूपो विशिष्टफलहेतुर्धर्माधर्मावविति साङ्ख्याः। पुण्यपुद्गलेति।
25 पुण्यपुद्गलाः पुण्यपरमाणवः। निराधारस्यापूर्वस्येति। ते हि क्रियानिर्वर्त्यं क्रियाभिव्यङ्ग्यम् आश्रितमेवापूर्वमाहुः।

यागस्य वा शक्तिरग्निशब्देनोच्यते। न चानियोगो वाक्यार्थ एवापूर्वशब्दवाच्यः, तस्योपरिष्टादपाकरिष्यमाणत्वात्। नापि यो यागमनुतिष्ठति तं धार्मिक इत्याचक्षते इति यागादिसामानाधिकरण्येन प्रयोगात् स एव धर्मशब्दवाच्य इति युक्तं वक्तुम्, तस्य क्षणिकत्वेन कालान्तरे फलदातृत्वानुपपत्तेः सामानाधिकरण्यप्रयोगोऽपि चैकान्ततो नास्त्येव। 5

'यागदानादिना धर्मो भवतीत्यपि लौकिकाः।
प्रयोगाः सन्ति ते चामी संस्क्रियापक्षसाक्षिणः॥

एवं 'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्नि'ति वैदिकोऽपि प्रयोगस्तद्विषय एव व्याख्येयः, तस्य स्थायित्वेन कालान्तरे फलदानयोग्यतोपपत्तेः।

संस्कारो नृगुणः स्थायी तस्माद्धर्म इति स्थितम्। 10
तस्माच्च फलनिष्पत्तेर्न चित्रादौ मृषार्थता॥

यदपि यज्ञायुधिवाक्ये प्रत्यक्षविरुद्धत्वमुपपाद्यते स्म भस्मीभावोपलम्भात् कायस्येति तदप्यसमीचीनम्। एष इति शरीराभेदोपचारेणात्मन एव निर्देशात् तस्य च स्वर्गगमनं भवत्येव। गमनञ्च तदुपभोग एव तस्योच्यते यथा शरीरादियोग-वियोगौ जन्ममरण इति। न तु व्यापिनः परिस्पन्दात्मकक्रियायोग उपपद्यते। ज्ञान- 15 चिकीर्षाप्रयत्नसमवायश्च तस्य कर्तृत्वमिति वर्णयिष्यते। यज्ञायुधसम्बन्धोऽपि स्व-स्वामिभावादिः, तस्यैव व्यापकत्वाविशेषेऽपि व्यवस्थयोपपद्यते इति न कश्चिदत्र विरोधः। तस्मात् सर्वत्र निरवकाशमनृतत्वादिदूषणम्।

योऽपि हवनकालविधौ व्याघातदोषो दर्शितः सोऽपि न दोष एव।

तत्रानुष्ठानभेदेन कालत्रितयचोदनात्। 20
यो यस्य चोदितः कालो लङ्घनीयो न तेन सः॥

ततश्चान्यतमं कालमभ्युपेत्यैनमुज्झतः।
निन्देति न विरोधोऽत्र कश्चिद्विधिनिषेधयोः॥

---

ननु व्यापकत्वादात्मनां यज्ञायुधीति कथमेकस्यैव व्यपदेश इत्याह यज्ञायुधं-म्बन्धोऽपीति। व्यवस्थया यस्य तानि यज्ञायुधानि तस्यैव उपकारकाणि नान्येषाम्। 25

अभ्यासे पौनरुक्त्यञ्च कार्यार्थत्वाददूषणम् ।
संपाद्यं पाञ्चदश्यं हि सामिधेनीषु चोदितम् ॥

'इममहं पञ्चदशारेण वज्रेणावबाधे योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म' इति श्रूयते। एकादशसामिधेन्य ऋचः पठ्यन्ते। तत्राभ्यासमन्तरेण पाञ्चदश्यं नावकल्पते इत्येवमवश्यकर्त्तव्योऽभ्यासः। स चायमनियमेन प्राप्तो वचनेन नियम्यते प्रथमोत्तमे ऋचौ त्रिरुच्चारणीये इति । तस्मात् तत्प्रयोजनार्थत्वान्न पुनरुक्ततादोषः ।

अभ्यासे फलरहिते हि पौनरुक्त्यं
दोषः स्यादिह तु न तस्य निष्फलत्वम् ।
व्याघातानृतपुनरुक्ततादि तस्माद्
वेदस्य श्लथयति न प्रमाणभावम् ॥

इयञ्च वाक्यार्थविचारणापि
प्रामाण्यसिद्ध्यौपयिकीति मत्वा ।
चक्रे स्वशास्त्रे मुनिनेह वेद-
प्रामाण्यनिर्वाहणदीक्षितेन ॥

ननु नाद्यापि वेदस्य भवद्भिर्निपुणैरपि ।
स्वदेहसम्भवा दोषा निखिलाः परिपिञ्जिताः ।

## अर्थवादानामनिश्चितार्थकत्वाद् वेदाप्रामाण्यम्

तथा हि 'सोऽरोदीद् यदरोदीत् तद्रुद्रस्य रुद्रत्वम्। प्रजापतिरात्मनो वपामुदखिदत् तामग्नौ प्रागृह्णात् ततोऽजस्तूपर उदगात्। देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्' इत्येवमादीनामर्थवादानां किं यथाश्रुतवस्तुपरत्वम्, उत तेभ्यः कार्यरूपार्थोपदेशपरिकल्पनम्, उत लिङादियुक्तवाक्यान्तरप्रतिपाद्यमानकार्यरूपार्थौपयिकत्वमिति चिन्त्यम्। सर्वथा च प्रमादः। स्वरूपपरत्वे तावत् प्रमाणान्तरविरुद्धार्थो-

---

पञ्चदशेति पञ्चदशसङ्ख्यासम्पत्त्या वज्रभूतया ।

सोऽरोदीदिति । स (अत्रत्यष्टीकाग्रन्थः खण्डितः) उदखिदत् उदहरत् । प्रागृह्णात् प्राक्षिपत् । तूपरः शृङ्गरहितः पशुः । देवयजनेति देवा इज्यन्ते यस्मिंस्तद् यज्ञस्थानमस्मिन्नस्माभिर्यष्टव्यमित्यध्यवसाय निश्चित्य । तथात्वनिश्चयाभावादिति । रोदनादि हि प्रमाणान्तर-

पदेशाद् अप्रामाण्यमेवावतरति, रोदनवपोत्खेदनदिङ्मोहादेरर्थस्य तथात्वनिश्चया-भावात् ।

किञ्च 'स्तेनं मनोऽनृतवादिनी वागि'त्येवंजातीयकानामर्थवादवाक्यानां विस्पष्टमेव प्रमाणान्तरविरुद्धार्थप्रत्यायकत्वम् । न हि निसर्गत एव सर्वप्राणिनाम-नृतवादिनी वाग् भवति स्तेनं वा मनः । 5

अपि च 'धूम एवाग्नेर्दिवा ददृशे नार्चिरर्चिरेवाग्नेर्नक्तं ददृशे न धूमः' इति प्रत्यक्षविरुद्धमिदमभिधीयते, नक्तन्दिनं द्वयोरपि इन्द्रियार्थसन्निकर्षे सति ग्रहणात् ।

किञ्च 'एतन्न विद्मो यदि ब्राह्मणाः स्मोऽब्राह्मणा वे'ति ब्राह्मणजातेरुप-देशसहायप्रत्यक्षगम्यत्वात् तद्विरुद्ध एषोऽर्थवादः । शास्त्रविरोधोऽप्यस्ति "को ह वै 10 तद्वेद यदमुष्मिँल्लोकेऽस्ति वा न वे'ति । शास्त्रे स्वर्गादिफलानां ज्योतिष्टोमादि-कर्मणामुपदेशात् केयमनवक्लृप्तिः ?

अपि च गर्गत्रिरात्रब्राह्मणमधिकृत्य श्रूयते 'शोभतेऽस्य मुखं य एवं वेदे'ति न हि कस्यचिदेवंविदतो मुखं शोभते इति प्रत्यक्षविरोधः ।

अन्यकर्मानर्थक्यशंसी च कश्चिदर्थवादो भवति 'पूर्णाहुत्या सर्वान् कामान- 15 वाप्नोति', 'पशुबन्धयाजी सर्वाँल्लोकानभिजयति' 'तरति मृत्युं तरति पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजते यश्चैवं वेदेति' । यदि पूर्णाहुत्यैव सर्वकामावाप्तिः, पशु-बन्धयागेनैव सर्वलोकजयः, अश्वमेधवेदनेनैव तत्फलावाप्तिस्तत् किमर्थमन्यकर्मो-

---

ग्रहणयोग्यं वस्तु, सिद्धत्वात्; सिद्धं हि वस्तु लोके प्रमाणान्तरग्राह्यमेव 'राजा याति' वत् शब्देन प्रतिपाद्यमानं दृष्टम्, अतो वेदेऽपि तथैव भवितुमर्हति । न च प्रमाणान्तरेण 20 रुद्रादिरोदनग्रहणसम्भवः । रोदनस्य ग्रहणाभावादेव प्रमाणान्तरविरुद्धत्वम् । वपोत्खेद-नादीनां तु विपर्ययग्रहणात् ।

को ह वै तद्वेदेति । को वै तद्वेद, नैव कश्चिज्जानाति परलोके फलमस्ति न वेति ।

गर्गत्रिरात्रब्राह्मणमिति । गर्गत्रिरात्राख्यस्याहीनस्य क्रतोः प्रतिपादकं ब्राह्मणं 25 गर्गत्रिरात्रब्राह्मणम् ।

आधानान्ते होमविशेषः पूर्णाहुतिः । यश्चैवं वेद यश्चाश्वमेधमन्त्रब्राह्मणार्थं जानाति ।

पदेशः ? उपदिष्टान्यपि तानि बहुक्लेशसाध्यानि कर्माणि व्यर्थानि भवेयुरनेनैव लघुनोपायेन तत्फलप्राप्तेर्दर्शनात् ।

अपि च 'न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवीति' वेदे चयननिषेध एवात्र भङ्ग्या भवेद् । दिवि चान्तरिक्षे च तावच्चयनप्रयोग एव नास्ति किं तन्निषे-
5 धेन ? पृथिवीचयननिषेधार्थञ्च यद्वाक्यं तच्चयनप्रतिषेधार्थमेव भवेत् अपृथिव्यधि-करणस्य चयनस्यानुपपत्तेः ।

अपि च 'यजमानः प्रस्तरः' 'आदित्यो यूपः' इत्येवंजातीयकानां प्रत्यक्षविरु-द्धार्थाभिधायिनामर्थवादानां का परिनिष्ठेति ? तस्मान्न स्वरूपपरत्वं तेषामुपपद्यते।

नापि तेभ्य एव कार्यरूपार्थपरिकल्पनमुपपन्नम्, अशक्यत्वात् । 'सोऽरोदीद्-
10 यदरोदीत् तद्रुद्रस्य रुद्रत्वमि'त्यत्र कार्यं कल्प्यमानमेवं कल्प्येत रुद्रः किल रुरोद अतोऽ-न्येनापि रोदितव्यमिति । तच्चाशक्यम् । प्रियविप्रयोगजनितसंतापवशेन हि वाष्प-मोचनं रोदनमुच्यते । न तच्चोदनोपदेशात् कर्त्तुं शक्यते । 'प्रजापतिरात्मनो वपा-मुच्चिखेद तस्मादन्योऽप्येवमुत्खिदेदात्मनो वपामिति दुरनुष्ठानोऽयमर्थः । को हि नामात्मनो वपामुत्खिदेत् । कस्य वा वपाहोमे सति समनन्तरमेव अजः पशुस्तूपर
15 उद्गच्छेद् इति । देवा दिशो नाज्ञासिषुरतोऽन्योऽपि न जानीयादिति अशक्योप-देशः। न हि दिङ्मोहो नामोपदेशात् कर्तुं शक्यः । न च सर्वस्मादर्थवादाद् विधिः कल्पयितुं शक्य इति मध्यमोऽपि न सत्पक्षः ।

नापि तृतीयः पक्षः सम्भवति । वाक्यान्तरविहितकार्यरूपार्थोपयिकत्वं हि तदुपयोगिद्रव्यदेवतादिविधानद्वारकं भवति यथा 'अग्निहोत्रं जुहोती' त्यत्र 'दध्ना
20 जुहोति' 'पयसा जुहोती' ति द्रव्यविनियोगविधेः।'यदग्नये च प्रजापतये च सायं जुहोति' इति देवताविधेर्वा । न चायमर्थवादेषु प्रकारः सम्भवति । न चैभिः 'व्रीहीनवहन्ति'

---

न पृथिव्यामग्निरिति । अग्न्याधारभूतानामिष्टकानां विशिष्टेन सन्निवेशेन स्थापनमग्निचयनम् । तासामाधारभूतो दर्भः प्रस्तरणम् ।

अग्निहोत्रं जुहोति । केन द्रव्येणेत्यपेक्षायामाह पयसाग्निहोत्रमिति । का च
25 तत्र देवतेत्यप्याह यदग्नये चेति । व्रीहीन् अवहन्तीति । दृष्टेतिकर्तव्यतातण्डुल-निष्पत्त्यर्थमपेक्षणात् । प्रोक्षणं तददृष्टोपकारार्थमनपेक्षणाददृष्टेतिकर्तव्यता ।

'व्रीहीन् प्रोक्षती' तिवद् दृष्टा अदृष्टा वा काचिदितिकर्त्तव्यतोपदिश्यते । तस्मान्न तेषां तदौपयिकत्वम् ।

ननु प्रेक्षावतां प्ररोचनातिशयकरणेन प्रवृत्त्युत्साहमावहन्तोऽर्थवादास्तदुपयोगिनो भविष्यन्ति ? नैतदपि सम्यक् । प्रवृत्त्युत्साहो हि केषाञ्चिन्मते निरपेक्षशब्दप्रत्ययादेव सिद्धचति । अस्मन्मते तु तत्प्रणेतृपुरुषप्रत्ययादिति किं प्ररोचनया ? 5
एवं काम इदं कुर्यादित्युक्ते यस्तत्र न प्रवर्त्तते स प्ररोचनयापि न प्रवर्तत एवेति यत्किञ्चिदेतत् । तदेवं प्रकारत्रयेणाप्यर्थवादपदानामनन्वयात् एकदेशाक्षेपेण सर्वाक्षेप एव क्रियत इति अप्रमाणं वेदः ।

ननु यावत्येव प्रमाणान्तरविरुद्धत्वमुपलभ्यते तावत्येवाप्रामाण्यमस्तु सर्वत्र तु कुतस्त्या तदाशङ्केति ? मैवम् । तत्सामान्यादन्यत्राप्यनाश्वासः । मीमांसकपक्षे 10
हि अर्थवादरहितकेवलवेदग्रन्थानुपलम्भात् तदनुषङ्गेण सर्वत्र सापेक्षत्वमवतरति । नैयायिकमते तु वेदप्रणेतुरीश्वरस्य क्वचिद् वितथवादित्वे दृश्यमाने कथमन्यत्र सत्यवादितायां दृढः प्रत्ययो भवेदित्यप्रामाण्यं सर्वत्रेति ।

## वेदप्रामाण्येऽर्थवादानां बाधकत्वनिरसनम्

अत्राभिधीयते । विध्येकवाक्यतयैव भूम्ना तावदर्थवादपदानि पठ्यन्ते । 15
'वायव्यं श्वेतमालभेत भूतिकामः' 'वायुर्वै क्षेपिष्ठा देवता' इत्यतो यद्यपि क्रिया नावगम्यते नापि तत्सम्बद्धः कश्चिदर्थस्तथापि विध्युद्देशेनैकवाक्यत्वं प्रतीयते । भूतिकाम इत्येवमन्तो विध्युद्देशः, तेनैकवाक्यभूतो वायु र्वेक्षेपिष्ठेत्येवमादिः । कथमेकवाक्यभावः ? पदानां साकाङ्क्षत्वात् ।

ननु भूतिकाम इत्येवमन्तेन वाक्येन विधेयं विहितम्, उत्पादितं प्रतिपत्तुरनाकाङ्क्षत्वम्, कृतश्च शब्दकर्त्तव्यमिति किमनेन क्षेपिष्ठेत्यादिना प्रयोजनम् ? तदर्थस्यैव स्तुतिरिति ब्रूमः । 20

---

केषाञ्चिन्मते मीमांसकानाम् ।

वायव्यमिति वायुमेव स्वेन भागधेयेनोपधावति वायवे देयो यः पशुः स वायोः स्वं भागधेयम्, तेन वायुमुपधावति उपसर्पति स्वाभिमुखं करोति । क्रियया सम्बन्धः 25
द्रव्यदेवतादिः । एवमन्तो विध्युद्देशः । विधिरनुबन्धद्वयानुबद्ध उद्दिश्यते येन ।

ननु स्तुत्या किं प्रयोजनम्, स्तुतोऽस्तुतश्च तावानेव सोऽर्थः ? मैवम् । स्तुति-पदे हि वाक्ये स्तुतिपदसहितं विधायकं विधायकं भवति । किमिदानीं केवलं लिङादियुक्तं वाक्यं न विधायकमुच्यते यदि स्तुतिपदानि न श्रूयन्ते ? तद् बाढं भवति विधायकम् । एतेषु च सत्सु तत्सहितं तद्विधायकं भवति न केवलम्, तथा प्रतीतेः । स्तुतिपदसम्बन्धे सति भिन्नवाक्यता मा भूदिति विधिपदेन च स्तुतिपदेन च सम्भूयार्थो विधीयते, तथावगमात् । अन्यथा हि प्रतीयमानः पदार्थान्वयस्त्यज्येत, वाक्यभेदो वा कल्प्येत । तस्मान्न स्तुतिपदानामानर्थक्यम् ।

ननु केवलस्यापि विधिवाक्यस्य सामर्थ्यात् किमर्थं स्तुतिपदानि प्रयुज्यन्त इति ? उच्यते । अपर्यनुयोज्यो जैमिनीयानां मते शब्दः । अस्माकञ्च भगवानीश्वरः । उक्ते सति प्रतिपत्तारो वयम् वेदस्य न कर्त्तारः । प्रतिपत्तौ च क्रमो दर्शितः । एवञ्च यद्यपि द्रव्यदेवतेतिकर्त्तव्यताविधानद्वारकमङ्गविधिवदर्थवादवाक्यानां कार्योपयिकत्वं नास्ति तथापि प्रतीत्यङ्गत्वं न निवार्यते । अत एव प्रमाणोपयोगित्वमाचक्षते न प्रमेयोपयोगित्वम् । केवलविधिपदश्रवणे हि न तदाद्रियन्ते यज्वानः । तत्र विधि-विभक्तेः शक्तिरवसीदति । तां निमज्जन्तीमिवार्थवादजनितकर्मप्राशस्त्यप्रत्यय उत्तम्भाति । 'सर्वजिता यजेते' त्यतो न तथाविधः श्रद्धातिशयो भवति यथाविधः 'सर्वजिता वै देवाः सर्वमयजन् सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेन सर्वं जयति' इत्यर्थवादपदेभ्यः । लोकेऽपि इयं गौः क्रेतव्येत्यतो न तथा क्रेतारः प्रवर्त्तन्ते यथा एषा बहुस्निग्धक्षीरा सुशीला सापत्या अनवप्रजा चेत्येवमादिभ्यः स्तुतिपदेभ्यः ।

---

**अङ्गविधिवत्** । अङ्गविधयः प्रयाजादिविधयः । **प्रतीत्यङ्गत्वमिति** । केवलाद् विध्युद्देशात् स्तुतिरहितस्य विषयस्य प्रतीतिः सार्थवादकात्तु सस्तुतिकस्येति सस्तुतिक-विषयप्रतीतावङ्गमर्थवादाः । दारा इत्यादौ बहुत्ववद्वा प्रतीत्यङ्गबहुत्वयुक्तं द्रव्यं प्रतीयते केवलम्, कार्ययोगः पुनरेकस्यैव; एवं सस्तुतिको विषयः प्रतीयत एव, अनुष्ठीयते तु शुद्ध एवेति । **अत एव प्रमाणोपयोगित्वमिति** । शब्दतः प्रतिपन्नापि स्तुतिः प्रमाणस्य लिङादेः प्रत्ययस्य कर्तव्यतावबोधं प्रति साहाय्यकरणात् प्रमाणोपयोगिनी । अत एव प्राभाकरा वेदोऽर्थवादा न तु वैदिकाः इत्याहुः; वेदोऽवबोधका न वैदिकाः प्रमेया इत्यर्थः । **न प्रमेयोपयोगित्वम्** । प्रमेयं तादृगेव स्तुतं चास्तुतं चेति ।

स्वानुभवसाक्षिकोऽयमर्थः । अत एव केचिदश्रुतार्थवादकेऽपि विधिवाक्ये तत्कल्पन-
मिच्छन्ति, यथा क्वचिदर्थवादाद् विधिकल्पनमिति । यथोक्तम् 'विधिस्तुत्योः सदा
वृत्तिः समानविषयेष्यते' । अनधिगम्यमानविधिवाक्यसंबन्धाच्च अर्थवादाद् विधि-
रुन्नीयते न गम्यमानविधिसंबन्धात् ।

अत एव च 'सोऽरोदीदि' त्येवमादिभ्यो न रोदितव्यमित्यादिविधिकल्पन- 5
मिष्यते । मुधैव पूर्वपक्षिणा तदाशङ्कितम् । विध्यन्तरेणैकवाक्यत्वं हि प्रत्यक्षमिहोप-
दिश्यते । बर्हिषि रजतं न देयमित्यस्य विधेः शेषोऽयं सोऽरोदीदित्यादिः। 'रुद्रो रुरोद'
तस्य यदश्रु अशीर्यत तद्रजतमभवत्, 'यो हि बर्हिषि रजतं ददाति पुरा अस्य संवत्स-
राद् गृहे रोदनं भवती' ति तस्माद् बर्हिषि रजतं न देयमिति । 'प्राजापत्यमजं तूपर-
मालभेते' त्येतस्य विधेःशेषः'प्रजापतिरात्मनो वपामुदखिददि'ति वपाहोममाहात्म्य- 10
प्रदर्शनार्थमुच्यते'अग्नौ वै प्रगृहीतमात्रायां वपायामजस्तूपर उदगादि'ति। 'आदित्यः
प्रायणीयश्चरुरि'त्यस्य विधेः शेषोऽयं देवा वै 'देवयजनमध्यवसाय दिशो न प्राजान-
न्नित्थं व्यामोहानामादित्यश्चरुर्नाशयिता यथा दिङ्मोहस्ये'ति ।एवं तत्र तत्र विधि-
शेषत्वमर्थवादानां वेदितव्यम् ।

कथं पुनरिदमसत्यमेवोच्यते रुद्ररुदिताद्रजतमजायत, प्रजापतिवपाहोम- 15
समिद्धादग्नेरजस्तूपर उदगादिति ? उच्यते । नेदमसत्यम् । यदस्य वाक्यस्य प्रतिपाद्यं
तत्र सत्यार्थमेवेदम् ।न चास्य यथाश्रुतोऽर्थः प्रतिपाद्यः किन्तु विधेयो निषेध्यो वा

---

स्वानुभवसाक्षिक इति । स्तुतिवाक्यमेव विधिवाक्यम्, स्तुतित एव विध्यर्थावगमात्
न तत्रान्यस्य विधिवाक्यस्य कल्पनमुपयुज्यत इत्यनुभवसाक्षिकमेतत् । यद् विधिवाक्यात्
प्रतीयते तत् स्तुतिपदेभ्योऽपि प्रतीयत इत्यत्रानुभवः साक्षी । तथापि केचित्
कल्पनमिच्छन्ति । यथा 'यो ब्राह्मणायावगूरेत् तं शतेन यातयात्' इत्यर्थवादाद् 20
ब्राह्मणावगूरणं न कर्तव्यमिति निषेधविधिवाक्यकल्पनम् ।

आदित्यः प्रायणीयश्चरुरिति । प्रयन्ति प्रारभन्तेऽनेन यज्ञमिति प्रायणीयोऽ-
दितिदेवताकश्चरुः । दर्शपूर्णमासकर्मसम्बद्धस्य हौमिकस्य वह्नेः कर्मसमूहस्योपस्थानात्
किं कथं कर्तव्यमिति कर्मक्रमाद्यनवधारणरूपो यो भ्रमः सोऽनेन चरुणा निवर्त्यते,
अवकाशदानात् । अत्र प्रवृत्त्या हि अवकाशं लभन्ते 'इदं कृत्वा इदं क्रियते' इति । 25
यथा दिङ्मोहेति दिङ्मोह इव दिङ्मोहः, यथा दिङ्मोहे सति न क्वचित् प्रवर्तितुं
शक्यत एवं कर्मक्रमाद्यनवधारणेऽपीति । अपि दिङ्मोहस्य किं पुनः दिङ्मोहस्येत्यर्थः ।

कश्चिदर्थः । इहान्वाख्याने द्वयमापतति यच्च वृत्तान्तज्ञानं यच्च कस्मिंश्चिदर्थे प्ररोचनाद्वेषौ । तत्र वृत्तान्तज्ञानं न प्रवर्त्तकं न निवर्त्तकमिति प्रयोजनाभावादनर्थकमनादरणीयम् । प्ररोचनाद्वेषौ तु प्रवृत्त्यङ्गत्वात् तदर्थौ गृहीत्वा प्ररोचनायाः प्रवर्त्तेत द्वेषान्निवर्त्तेतेति तत्र तत्प्रतिपाद्यसत्यार्थ एवार्थवादः ।

5 यत्तु अरुदति रुद्रे कथं तद्रोदनवचनम्, अनश्रुप्रभवेऽपि रजते कथं तदुद्भवताभिधानमिति गुणवादमात्रम् । गौण एष वादः । श्वेतवर्णसारूप्यादिना रोदनप्रभवं रजतं निन्दितुमुच्यते । एवं पशुयागे वपाहोमप्रशंसार्थं 'प्रजापतिरात्मनो वपामुदखिददि'ति वृत्तान्ताख्यानं योजनीयम् । आदित्यचरुप्रशंसार्थं देवा 'देवयजनमध्यवसाय दिशो न प्राजानन्नि'ति ।

10 अथ वा नैयायिकानामनेकप्रकारपुरुषातिशयवादिनां यथाश्रुतेऽप्यर्थे नात्यन्तमसम्भवः । रुद्रस्य रुदिताद्रजतजन्म, प्रजापतेर्वपोत्खेदः, तद्धोमात्तूपरपशूद्गमः, देवानां देवयजनाध्यवसाने दिङ्मोह इत्येवंजातीयकमपि सत्यमस्तु को दोषः ? तत्, सर्वथा अर्थवादानां प्रामाण्यम् ।

एवं 'स्तेनं मनोऽनृतवादिनी वागि'ति गौण एष वादः । प्रच्छन्नतया स्तेनं मन उच्यते बाहुल्याभिप्रायेण चानृतवादिनी वागिति ।

15 'धूम एवाग्नेर्दिवा ददृशे नार्चिरर्चिरेवाग्नेर्नक्तं ददृशे न धूमः' इति दूरभूयस्त्वाभिप्रायेण कस्मैचित् प्रयोजनाय सायंप्रातर्होमदेवतास्तुतये कथ्यते ।

'न चैतद् विद्मो यदि ब्राह्मणाः स्मोऽब्राह्मणा वे'ति प्रवरानुमन्त्रणप्रशंसार्थं

---

वृत्तान्तज्ञानं पुरैवमासीदिति ।

20 यत्त्वरुदति रुद्र इति । अरुदति प्रमाणान्तरादनुपलभ्यमानरोदन इत्यर्थः । अनश्रुप्रभवेऽपीति । प्रमाणान्तराद् रजताकाराद् रजतप्रभवदर्शनात् ।

एवं स्तेनं मन इति । सोममाने श्रूयते 'हिरण्यं हस्ते भवत्यथ गृह्णाति' इति हिरण्यं हस्ते गृहीत्वा अथ सोमं मातुं गृह्णातीत्यर्थः । ननु अहिरण्यहस्त एव कस्मान्न गृह्णाति तदाह 'स्तेनं मनोऽनृतवादिनी वागि'ति । हिरण्यहस्तेन यत् कृतं तत् सत्यं न मनसा वाचा वेति हिरण्यस्तुत्यर्थं तयोर्निन्दा ( अतःपरं टीकाग्रन्थो नष्टः ) ।

25 ......ऽब्राह्मणा वेति संशयरूपमज्ञानम्, अब्राह्मणोऽप्यनेन ब्राह्मणो भवतीति

**संशय इव दर्शितः। अब्राह्मणोऽपि यजमानः प्रवरानुमन्त्रणेन ब्राह्मणः स्यादिति। 'को ह वै तद्वेद यदमुष्मिँल्लोकेऽस्ति वा न वे'ति दृष्टफलं किमपि कर्मस्तोतुच्यते।**

**'शोभतेऽस्य मुखं य एवं वेदे'ति विद्याप्रशंसैषा। शोभते इति शिष्यैरुद्वीक्ष्यमाणस्य मुखमिति। सर्वान् कामानवाप्नोति इति सर्वत्वं प्रकृतापेक्षम्। स्तुत्यर्थश्चाश्वमेधाध्ययनेऽपि तत्फलवचनम्।** 5

**'हिरण्यं निधाय चेतव्यमि'ति स्तुत्यर्थतया दिव्यन्तरिक्षे पृथिव्याञ्च चयनं प्रतिषिध्यते। अनुपहितहिरण्यायां पृथिव्यामग्निर्न चेतव्यो न पुनर्न चेतव्य एव तस्यामिति।**

**'आदित्यो यूप' इत्थमञ्जने सति तेजस्वितया यूपस्यादित्यरूपता स्तुतये कथ्यते। तत्कार्यकारित्वाच्च यजमानः प्रस्तर उच्यते। न हि मुख्ययैव वृत्त्या लोके** 10 **शब्दाः प्रवर्त्तन्ते, गौण्यापि वृत्त्या व्यवहारदर्शनात्ः। एवं वेदेऽपि तेषां तथा प्रयोगो भविष्यति। इत्थञ्च मन्त्रेष्वप्यैन्द्र्या गार्हपत्योपस्थानमविरुद्धम्। एवं स्तुतिनिन्दा-**

---

स्तुतिः। **को ह वै तद्वेदेति** यदुच्यते तद् दृष्टफलं कर्म स्तोतुमुच्यते। 'दीक्षितशालायामुपभद्रादिप्रचारकाले 'दिक्ष्वतीकाशान् कुर्यात्' इति श्रूयते। अतीकाशा धूमनिर्गमनविवरप्रदेशाः। किमति कुर्यादित्याकाङ्क्षायां वाक्यशेषः 'को ह वै तद्वेद'। 'को हि 15 तदन्यत् स्वर्गादि फलं जानाति यदमुष्मिल्लोके भवति वा न वा' इति। एतत्त्वतीकाशकरणं दृष्टफलमेव, दृष्टेन धूमनिर्गमनलक्षणेन फलेन फलतत्त्वादस्येति स्तुतिः।

**विद्याप्रशंसा** गर्गत्रिरात्रब्राह्मणज्ञानस्तुतिः। **सर्वत्वं प्रकृतापेक्षमिति**। पूर्णाहुत्या सर्वान् कामानवाप्नोति। सर्वकामफलस्य दर्शपूर्णमासादिकर्मसमूहस्य निमित्त आहवनीये प्राप्यमाणे पूर्णाहुत्या सर्वान् कामान् अवाप्नोतीति स्तुतिः। एवं तर्हि 20 अन्तर्धानादिफलानामपि कर्मणामाहवनीयो निमित्तं प्राप्त इत्याह प्रकृतापेक्षमिति। प्रकृतानि यान्यग्निहोत्रादिकर्माणि तेषां निमित्तं पूर्णाहुत्या आहवनीयः प्राप्यते, तस्मिन् प्राप्ते प्रस्तुतानि कर्माण्यनुष्ठीयन्ते अग्निहोत्रादिकानि, ततस्तत्तत्फलमिति। दृष्टश्च प्रकृतापेक्षः सर्वशब्दः 'सर्वमनेन भुक्तम्' इतिवत्। **अश्वमेधाध्ययनेऽपीति**। आस्तां तावदश्वमेधानुष्ठानं योऽपि वेद सोऽपि मृत्युं तरतीत्यश्वमेधानुष्ठानस्यैव स्तुतिः। 25

**अञ्जने सति** घृतादिना। **तत्कार्यकारित्वाद्** यज्ञनिर्वर्तकत्वाद् यजमानकार्यकारित्वं प्रस्तरस्य। **ऐन्द्र्या गार्हपत्योपस्थानमविरुद्धमिति** इन्द्रप्रतिपादकानां

स्वरूपास्तावदर्थवादा विध्येकवाक्यत्वेन प्रमाणम् । परकृतिपुराकल्पस्वरूपा अपि तथैव योज्याः ।

क्वचित् पुनरर्थवादेनैव कश्चिदंशः पूर्यत इति, न तु प्रतीत्यङ्गत्वमेव तस्य कार्याङ्गत्वमपि भवति । यथा 'प्रतितिष्ठन्ति हवा य एता रात्रीरुपयन्ति' इत्यश्रूयमाणाधिकारस्य रात्रिसत्रविधेरधिकारांशोऽर्थवादादेव लभ्यते । यथोक्तं 'फलमात्रेयो निर्देशादि'ति, तत्र हि प्रतिष्ठाकामाः सत्रमासीरन् इत्यर्थवादवशाद् गम्यते वाक्यार्थः ।

क्वचिद् विधिवाक्यस्यार्थसंदेहेऽर्थवादात्मकाद् वाक्यशेषात् तन्निश्चयो भवति। यथा 'अक्ताः शर्करा उपदधाती'त्यञ्जनद्रव्ये घृततैलवसादिभेदेन तदिह्यमाने 'तेजो वै घृतमि'ति अर्थवादाद् घृतेनाक्ताः शर्करा उपधेया इति गम्यते ।

इत्यर्थवादा विधिनैक्यभावात्
तद्वत् प्रमाणत्वममी भजन्ते ।
अस्ति प्रतीत्यन्वयिता हि तेषां
क्वचिच्च कार्यान्वयिता तु दृष्टा ॥
यद्वा स्वरूपपरतामपि संस्पृशन्ति
प्रामाण्यवर्त्म त इमे न परित्यजन्ति ।
नैयायिका हि पुरुषातिशयं वदन्तो
वृत्तान्तवर्णनमपीह यथार्थमाहुः ॥

---

पदानां 'कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे' इत्यस्यामैन्द्र्यामृचि ऐश्वर्यादियोगाद् गौण्या वृत्त्या गार्हपत्येऽपि प्रवृत्तिरविरुद्धा । परकृतिपुराकल्पस्वरूपाः पूर्वं दर्शिताः, यथा चात्र दाल्भ्य आह 'माषानेव मह्यं पचते'ति परकृतिरूपोऽर्थवादः, तस्मादारण्यानेवाश्नीयादित्येतद् विधिशेषः । 'उल्मुकैर्ह स्म पुरा समाजग्मुरि'ति च पुराकल्परूपोऽर्थवादः । तस्माद् गृहपतेरेव निर्मन्थ्याग्निषु स पचन् पचेदित्येतच्छेषः । विशिष्टनामधेयतया ज्ञातकर्तृक कर्मसम्बद्धोऽर्थवादः परकृतिः, अविज्ञातकर्तृकर्मसम्बद्धस्तु पुराकल्प इति ।

प्रतितिष्ठन्ति ह वेति । 'त्रयस्त्रिंशद्रात्रमुपेयुरि'त्येतावन्मात्रं श्रूयते, किंकाम इति तु न श्रूयते । फलमात्रेयो निर्देशादिति । 'प्रतितिष्ठन्ति ह वा' इत्यादि किं फलार्थ-

आदित्ययूपवचनादिषु तु स्वरूप-
याथार्थ्यमित्थमुपपादयितुं न शक्यम् ।
गौणीन्तु वृत्तिमवलम्ब्य कृता तदर्थ-
व्याख्येति तेष्वपि न विप्लवनावकाशः ।। 5

## मन्त्राणामपि न वेदप्रामाण्योपघातकत्वम्

अथेदानीं मन्त्रा विचार्यन्ते । किमर्थप्रकाशनद्वारेण विध्यर्थोपयोगिता तेषाम् उत उच्चारणमात्रेणेति? ननूभयथापि प्रामाण्याविशेषात् किं तद्विचारेण ? न हीदं शास्त्रं वेदस्यार्थविचाराय मीमांसावत् प्रवृत्तम्, अपि तु प्रामाण्यनिर्णयायैवेति । सत्यम् । प्रामाण्यनिर्णयायेदं शास्त्रं प्रवृत्तम्, अविवक्षितार्थत्वे तु मन्त्राणामप्रतिपादकत्व-लक्षणमप्रामाण्यमेव भवेत् तत्सामान्याद् वेदब्राह्मणवाक्यानामपि तथाभावप्रसङ्ग इति 10 वेदस्य कर्मावबोधार्थत्वं हीयते । न च संशयविपर्ययजननमेवाप्रामाण्यम्, अज्ञानजन-कत्वमप्यप्रामाण्यमेव । तदुच्यते । उच्चारणमात्रोपकारिणो मन्त्राः । कुतः ? तथा विनि-योगोपदेशात् । 'उरु प्रथा उरु प्रथस्वे'ति पुरोडाशं प्रथयति । यद्यर्थप्रकाशनोपकारिणो मन्त्राः, सामर्थ्यादेव प्रथनोपयोगी मन्त्रोऽयमिति किमर्थं प्रथने विनियुज्यते वचनेन ?

---

वादमात्रमुत फलविधिरिति संशये फलार्थवादमात्रमित्यत्र पूर्वपक्षे सूत्रम् "क्रतौ फलार्थ- 15 वादमङ्गवत् कार्ष्णाजिनिः' इति क्रतावस्मिन् रात्रिसत्रे फलमर्थवादतया कार्ष्णाजिनिरा-चार्यो मेने, यथा 'यस्य खादिरः स्रुवो भवति च्छन्दसामेव स रसेनावद्यती'त्यत्राङ्गविधा-वर्थवादमात्रं फलनिर्देशः । ततः सिद्धान्तसूत्रं 'फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात्' इति । आत्रेय आचार्यः । फलविधिमेव मन्यते सः । फलं ह्यवश्यं कल्प्यम्, तच्च निर्दिष्टमेव, अश्रुतौ ह्यनुमानं कल्पना भवतीति । अत्र चार्थवादविचारे पूर्वपक्षावस्थायां 20 'सोऽरोदीदि'त्याद्या उदाहृताः, सिद्धान्ते तु 'वायुर्वै क्षेपिष्ठे'त्यादयः; तत्र कोऽभिप्रायः । उच्यते । तेषु स्वार्थासत्यत्वाशङ्का विद्यते, अमीषु तु स्वार्थासत्यत्वाशङ्काया अभावः ! एषाञ्चैकवाक्यत्वं विधिना साधयितुं पारितं तदनेनैव न्यायेन तेषामपि सेत्स्यतीति ।

**किं अर्थप्रकाशनद्वारेणेति** । प्रयोगकाले योऽयं मन्त्राणां पाठः स किं प्रयोज्यान् पदार्थान् प्रकाशयितुं तेषां स्मरणाय उत अदृष्टार्थमुच्चारणमात्रमिति । **उरुप्रथा उरु** 25 **प्रथस्व** । त्वं पुरोडाश उरुप्रथाः उरु कृत्वा प्रथस्व इति । उरुप्रथाः प्रथःशब्दः सान्तः । अत उरु विस्तीर्णं कृत्वा प्रथस्व विस्तारं भजेति । **प्रथयति** पिण्डरूपं सन्तमपूपरूपं

यथा साक्षः पुरुषः परेण चेन्नीयते नूनमक्षिभ्यां न पश्यतीति गम्यते। 'अग्नीदग्नीन् विहरे'ति च । करोत्येवासौ ऋत्विगग्निविहरणं किं वचनेन ? उच्चारणमात्रोपकारिणि मन्त्रे तदुच्चारणादेवादृष्टं किञ्चिदुपकारजातं कल्प्यते । वाक्यक्रमनियमाच्च अविवक्षितार्थान् मन्त्रानवगच्छामः । नियतपदक्रमा हि मन्त्राः पठ्यन्ते । यद्यर्थप्रतिपादनेनोपकुर्यु र्नियतक्रमाश्रयणमनर्थकं स्यात्, क्रमान्तरेणापि तदर्थावगमसम्पत्तेः ।

इतश्चाविवक्षितार्था मन्त्राः । अविद्यमानार्थप्रकाशिनो हि केचिद् दृश्यन्ते । यथा 'चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यानाविवेश' इति । न हि चतुः शृङ्गं त्रिपादं द्विशिरस्कं किञ्चिद् यज्ञसाधकमस्ति यदनेन प्रकाश्येत, अतश्चैवम् । अचेतनप्रैष प्रदर्शनाद् 'ओषधे त्रायस्वैनमि'ति, न ह्योषधिर्बु द्ध्यते त्राणाय नियुक्तास्मीति। 'शृणोतु ग्रावाण' इति चोदाहरणम् । न ह्यचेतना ग्रावाणः श्रोतुं नियुज्यन्ते । अपि च 'अदितिर्द्यौ र्रन्तरिक्षमि'ति विप्रतिषिद्धमभिवदन्ति मन्त्राः। कथं सैव द्यौस्तदेवान्तरिक्षं भवितुमर्हति ? केषाञ्चिच्च मन्त्राणामर्थो ज्ञातुमेव न शक्यते ते कथमर्थप्रकाशनेनोपकुर्युः ? 'अम्यक् सा त इन्द्रऋष्टिरि'ति, 'शृण्येव जर्फरी तुर्फरीतु' इति, 'इन्द्रः सोमस्य करके'ति च । तस्मादविवक्षितार्था मन्त्राः ।

अपि चोच्चारणमुभयथापि कर्त्तव्यम्, मन्त्राणामदृष्टाय वा अर्थप्रत्यायनाय वा । यतोऽर्थमपि नानुच्चारिताः शब्दाः प्रत्याययितुमुत्सहन्ते । तस्मादवश्यकर्त्तव्येऽस्मिन्नुच्चारणे तत एव यज्ञोपकारे सिद्धे किम् अर्थप्रतिपादनद्वारपरिग्रहेण प्रयोजन मिति ।

तत्रोच्यते । किं मन्त्रेभ्योऽर्थप्रतीतिरेव नास्ति, किं वा भवन्त्यपि निर्निमित्तासौ, उत सन्निमित्तापि ग्रहैकत्वप्रतीतिवदविवक्षितेति । न तावत्प्रतीतिरेव नास्ति,शब्दार्थसम्बन्धव्युत्पत्तिसंस्कृतमतीनां 'बर्हिर्देवसदनं दामी'त्येवमादिमन्त्रश्रवणे सति तदर्थप्रतीतेः स्वसंवेद्यत्वात् । नाप्यसौ निर्निमित्ता, लोकवत् पदानामेवात्रनिमित्तत्वात् । व्युत्पत्तिरपि न नास्ति, य एव लौकिकाः शब्दास्त एव वैदिकास्त एव तेषा-

---

सम्पादयति । अग्नीदग्नीन् विहरेति मन्त्रेणाग्नीधोऽग्निविहरणं कर्तव्यं प्रकाश्यम्, तच्चाग्निविहरणमसावनेन वचनेनाप्रकाशितमपि कर्म पाठक्रमवशादेव जानन् करोति । अस्मिन् ह्यवधीतस्याग्निविहरणं पठ्यते ।

मर्था इति लोकव्यवहारतस्तद्व्युत्पत्तिसम्भवात् । नापि सम्भवन्त्यपि मन्त्रेभ्योऽर्थ-
प्रतीतिः ग्रहैकत्वप्रतीतिवदविवक्षिता भवितुमर्हति, अविवक्षानिबन्धनस्य कस्य-
चिदप्यभावात्, ग्रहादिवचनान्तरनिर्ज्ञातसंख्यत्वात् सोमावसेकनिर्हरणस्य च सम्मार्ग-
कार्यस्य सर्वग्रहसाधारणत्वाद्, ग्रहम् इति विभक्तेश्च कर्मकारकसमर्पणमात्रेणापि
सार्थक्योपपत्तेः, युक्तमेकत्वमविवक्षितमिति कथयितुम् । इह तु 'बर्हिर्देवसदनं दामी'-　5
त्येवमादिवाक्यक्रियमाणं क्रतूपयोगिद्रव्यादिप्रकाशनम् तस्य विध्यपेक्षितत्वान्मन्त्रेण
स्मृतं कर्म करोति । तथाक्रियमाणमभ्युदयकारि भवति इति न यज्ञाङ्गप्रकाशनम-
विवक्षितम् । अतो नोच्चारणमात्रोपकारिणो मन्त्राः । जपमन्त्राणान्तु 'पावमानीं
जपेदि'ति विधिनैव तावन्मात्राक्षेपणान्नार्थेन प्रकाशितेन प्रयोजनमिति । किं तत्र
क्रियते ? यत्र तु जपेदिति विधिर्न श्रूयते न तत्र तदर्थः प्रतीयमानोऽपेक्ष्यमाणश्चो-　10
पेक्षितुं युक्तः ।

ननु यदि जपेदिति विधेर्वैष्णव्यादिषु नार्थो विवक्ष्यते तर्हि 'स्वाध्यायोऽध्ये-
तव्यः इत्यक्षरग्रहणमात्रविधानात् सर्वस्य वेदस्याविवक्षितार्थत्वं स्यात् । एतच्च

---

ग्रहैकत्वप्रतीतिवदिति । 'ग्रहं सम्मार्ष्टि' इत्यत्र ग्रहं निर्दिश्य सम्मार्गो विधीयते ।
निर्देशस्तु वचनान्तरनिर्ज्ञातस्य भवति, वचनान्तरेण च नवसंख्योऽसौ विहित इत्येकत्वा-　15
विवक्षा । **सोमावसेकः** सोमावलेपः । **अपेक्ष्यमाणश्चेति** । यथा 'बर्हिर्देवसदनमि'त्यस्य
द्रव्यप्रकाशनं योऽर्थः स विधिना अपेक्ष्यते ।

**सर्वस्य वेदस्याविवक्षितार्थत्वं स्यादिति** । 'ननु कथमविवक्षितार्थत्वम्, स्वाध्या-
याध्ययनविधेः स्वाध्यायोऽध्येतव्यः' इत्यस्यार्थज्ञानपरत्वादित्याह 'अक्षरग्रहणमा-
त्रविधानात्' इति । 'स्वाध्यायोऽध्येतव्यः' पाठेनामुखीकर्तव्य इति हि तस्यार्थः । दृष्टो　20
हि तस्यार्थः कर्मावबोधनमिति । अक्षरग्रहणमात्रस्य निष्फलत्वादवश्यं विधिना प्रवर्तक-
शक्त्यविघाताय फलान्तरं कल्प्यम् । यावच्च कल्प्यते तावद् दृष्टमेवार्थावबोधनं लघित्व-
त्यादि प्रथमाह्निकारम्भ एव प्रपञ्चितमिति । ननु 'यद् ऋचोऽधीते घृतकुल्या भवन्ति,
यद् यजूंष्यधीते मधुकुल्या भवन्ति' इति ऋगाद्यध्ययनात् फलान्तरश्रवणात् कथमर्था-
वबोध एव फलमिति । अतिप्रसिद्धोऽयमर्थः, प्रथमसूत्र एव मीमांसायामस्य विचारणादत　25
एवाह **एतच्च शास्त्रान्तर** इति । 'अन्यार्थत्वे स्वाध्यायस्यावगते तेषामर्थवादतयैव
समन्वयः' इत्याद्युत्तरमत्र ।

शास्त्रान्तरे विस्तरतो निर्णीतम् इह तु वितन्यमानमस्माकमवान्तरविचारवाचालतामाविष्करोतीति न प्रतन्यते ।

यत्तु तदर्थविनियोगोपदेशादित्यविवक्षितार्थत्वमुक्तं तत्र 'उरु प्रथा उरु प्रथस्वे'ति लिङ्गादेव मन्त्रस्य प्रथनविनियोगसिद्धेः कामं तद्विधायकं वचनमनर्थकं भवतु प्राप्तानुवादकत्वाद्, न तु प्रतीयमानो मन्त्रादर्थस्त्यक्तुं युक्तः। तत् किं वचनमनर्थकमेव ? नानर्थकम्, प्रतिपन्नार्थविषयन्तु तत् । अर्थवादार्थं वा तद्वचनम् । यज्ञपतिमेव तत्प्रथयतीति तद् यज्ञपतिं यजमानमेव प्रजया पशुभिः प्रथयतीति । क्वचित्तु गुणार्थविधानं यथा 'तां चतुर्भिरादत्ते' इति, एवम् 'अग्नीदग्नीन्विहरे'दित्यादावपि द्रष्टव्यम् ।

यत्तु नियतपदक्रमत्वादुच्चारणमात्रोपयोगिनो मन्त्रा इतिं तदप्यसाधु । मीमांसकानामनादित्वाद् वेदस्य तत्क्रमलङ्घनानुपपत्तेः । यथोक्तम् 'अन्यथा करणे चास्य बहुभ्यः स्यान्निवारणम्' इति । अस्माकमपि यादृगीश्वरप्रणीतो वेदस्तदन्यथाकरणे किमध्येतॄणां स्वातन्त्र्यमस्ति ? तस्मान्नार्थविवक्षायै मन्त्रक्रमः प्रभवति ब्राह्मणवाक्यक्रमवत् ।

यदपि 'चत्वारि शृङ्गे'त्यविद्यमानार्थवचनमाशङ्कितम्, तदप्यनभिज्ञतया ।

---

तद्विधायकम् उरुप्रथा इति पुरोडाशं प्रथयतीति । **प्रतिपन्नार्थविषयन्तु तदि**त्यनेन निरालम्बनत्वकृतमनर्थकत्वं परिहरति, **अर्थवादार्थम्** वेत्यनेन त्वनुवादमात्रत्वम् । **क्वचित्तु गुणार्थविधानमिति** । सन्त्यादानसमर्था मन्त्रा 'देवस्य त्वा' इत्यादयः, तान् पठित्वाह 'तां चतुर्भिरादत्ते' इति । तामित्यभ्रिं; वेद्यर्थं मृत् खन्यते यया सा अभ्रिः । तत्र तदादानप्रकाशनसामर्थ्यादेव मन्त्रेण तदादाने लब्धे पुनस्तां चतुर्भिरादत्त इति वचनं निष्फलमाशङ्क्य समुच्चितैश्चतुर्भिरादानं कार्यं नैकैकेनेति समुच्चयलक्षणगुणस्य विशेषस्य विधानार्थम् । यद्यपि समुच्चयो न वाच्यस्तथाप्यसमुच्चितैरेकैकश आदानं क्रियमाणं कथं चतुर्भिरादानं कृतं स्यादिति फलतः समुच्चयलाभः । **एवमग्नीदग्नीन् विहरेति** । अत्र यद्यपि तस्य ज्ञानं स्थितं मयैतत्कर्तव्यमिति तथापि प्रयोगकालेऽवश्यं स्मर्तव्यं तत्, उपायान्तरेण स्मरणप्रतिषेधार्थं मन्त्रेण स्मृतं कर्तव्यमिति मन्त्रस्योपयोगः ।

**अन्यथा करणे चास्येति** । बहुभ्योऽध्येतृभ्यो निवारणम्, एवं मा पठीरिति ।

यज्ञस्य वैष गुणवादेन । संस्तवः । चत्वारि शृङ्गा इति वेदा उक्ताः, त्रयोऽस्य पादा इति सवनानि, द्वे शीर्षे इति दम्पती यजमानौ, सप्त हस्तास इति च्छन्दांसि, त्रिधा बद्ध इति मन्त्रब्राह्मणकल्पैर्निबद्धो वृषभ इति, 'कामान् वर्षति, 'रोरवीती'ति स्तोत्र-शस्त्रप्रयोगबाहुल्याच्छब्दायमानः 'महोदेवो मर्त्यानाविवेशे'ति मनुष्यकर्तृकत्वेनैवमेष यज्ञः स्तुतो भवति । तद् यथा चक्रवाकमिथुनस्तनी हंसदन्तावली शैवालकेशी काशवसनीति नदी स्तूयते । 5

'ओषधे त्रायस्वैनमि'ति चेतनवन्नियोगस्तस्याः स्तुत्यर्थः । 'शृणोत ग्रावाण' इति प्रातरनुवाकस्तुतिः । इत्थं नामैष प्रातरनुवाकः 'प्रशस्यो यदचेतना ग्रावाणोऽपि शृणुयुः अदितिर्द्यौ'रदितिरन्तरिक्षमि'ति गुणवादादप्रतिषेधः । तद् यथा लोके त्वमेव मे माता त्वमेव मे पिता त्वमेव भगिनी त्वमेव मे भ्रातेति । 10

यत्तु केषाञ्चिन्मन्त्राणामर्थो न ज्ञायते इति, पुरुषापराधः । अर्थावगमोपायेषु बहुषु सत्स्वपि तदन्वेषणालसः पुरुषो नार्थमवगच्छति न पुनर्मन्त्रोऽत्रापराध्यति,

---

सवनानि प्रातःसवन, माध्यंदिनसवन, तृतीयसवनानि । छन्दांसि गायत्र्या-दीनि । कल्पो यज्ञसूत्रम् । कामान् स्वर्गादीन् । स एवंभूतो महो देवो महान् देवो यज्ञो मर्त्यान् मनुष्यान् आविवेश, तेषामेव यज्ञेऽधिकारात् । चत्वारि शृङ्गास्त्रिधा बद्ध इत्यनयोरथर्ववेदभक्त्या स्वव्याख्यानं कृतवान् ग्रन्थकारः, भाष्यकारस्तु चत्वारो होत्राः शृङ्गाणीवास्येति, त्रिधा बद्धस्त्रिभिर्वेदैर्बद्ध इति च व्याचचक्षे । होत्रा इति ऋत्विग्-विशेषाणां ब्रह्मन्-आच्छसि-पोतृ-नेष्टृलक्षणानां चतुर्णामभिधानम्, तेषां यज्ञमुखप्रदेश-वर्तित्वाच्छृङ्गतुल्यत्वम् । 15

ओषधे त्रायस्वेति । पशुसंज्ञापनकाले पशुपरित्राणार्थमध्वयुर्दर्भमाह 'ओषधे त्रायस्वे'ति । तस्या अचेतनायाश्चेतनवत्त्वसमारोपः स्तुतिः । प्रातरनुवाकस्तुतिरिति प्रातरनुवाकाख्यः शस्त्रविशेषः ऋग्वेदप्रसिद्धः । यदचेतना ग्रावाणोऽपि शृणुयुरि-त्यस्य किं पुनर्विद्वांसो ब्राह्मणा इति शेषः । 20

यत्तु केषाञ्चिन्मन्त्राणामर्थो न ज्ञायत इति । तत्र 'अम्यक् सा त इन्द्र ऋष्टिरस्मे सनेम्यभ्वं मरुतो जुनन्ति अग्निश्चिद्धि ष्मातसे शुशुकानापो न द्वीपं दधति प्रयांसि' इति तावन्मन्त्रस्यायमर्थः' अगस्त्योऽमरत्वं प्रार्थयमान इन्द्रमाह हे इन्द्र सा ते भवत्सम्बन्धिनी ऋष्टिरायुधविशेषः अस्मे अस्माकं स्थितैव, किंविशिष्टा ? अम्यक् 25

ब्राह्मणवाक्यवदुपायतस्तदर्थावगमदर्शनात् । उपायश्च प्रथमस्तावद् वृद्धव्यवहार एव । तुल्यत्वाल्लोके वेदे शब्दार्थानाम् । य एव लौकिकाः शब्दास्त एव वैदिकास्त एव चैषामर्था इति ।

यद्यपि च 'अग्निर्वृत्राणि जङ्घनदि'ति वेदे कृतणत्वमग्निशब्दं पठन्ति 'उत्ताना वै देवगवा वहन्ति वनस्पते हिरण्यपर्ण प्रदिवस्ते अर्थमि'ति लौकिकवैदिकयोः शब्दयोरर्थयोश्च नानात्वमिवाशङ्क्यते, तथापि तथात्वं प्रत्यभिज्ञानेनावधार्य ईषद्विकृतास्त एव वेदे इति लौकिक्येव व्युत्पत्तिः । लोकप्रसिद्धिविप्रतिषेधे तु शास्त्रवित्प्रसिद्धिः प्रमाणीक्रियते यथा 'यवमयश्चरु' 'वाराही उपानहौ' 'वैतसे कटे प्राजापत्या सञ्चिनोती'तियववराहवेतसशब्दादीर्घशूकसूकरवञ्जुलकेषु शिष्टप्रसिद्ध्या नियम्यन्ते,

---

अमिशब्दः सहार्थे अमि सह अञ्चतीत्यम्यक् या तव सहचारिणीत्यर्थः । अग्निः चित् हि स्म अग्निरिव हि अतसे शुष्कतृणे, शुशुकान् दीप्तवान् शुष्कतृणप्रज्वलिताग्नितुल्या या लक्ष्यत इत्यर्थः । येऽप्येते मरुतः सनेमि पुराणमभ्वं तोयं जुनन्ति वृष्टिरूपेण प्रक्षरन्ति । अत एव प्रयांस्यन्नाद्यानि दधति धारयन्ति तव सखाः तेऽप्यस्माकमेव कथं (अत्र टीकाग्रन्थो नष्टः) तावच्छब्दौ प्राङ्नीत्या प्रहरणहिंसापरौ सति च प्रहर्तव्ये तत्परत्वमनयोर्नान्यथा अश्विनोश्च देवभिषजोर्जरणमरणे एव प्रहर्तव्यहिंसितव्ये च नान्यत् । अत उक्तम् जरणमरणनिमित्ताविति । यत एव च जरामरणयोः प्रहर्तारौ हिंसितारौ चाश्विनावत एव ताभ्यामजरत्वममरत्वञ्च प्रार्थितवानगस्त्य इति । 'एकया प्रतिधापिवत् साकं सरांसि त्रिंशतम् । इन्द्रः सोमस्य काणुका' इति मन्त्रेणेन्द्रः स्तूयते । एकया प्रतिधा एकेन प्रयत्नेन साकं युगपत् त्रिंशतं सरांसि पात्राणि सोमस्य पूर्णानीन्द्रोऽपिबत् । काणुका कामयमानः सन् ।

**अग्निर्वृत्राणीति** । अग्निर्वृत्राणि पापानि जङ्घनदित्यर्थं हतवानित्यर्थः । **हिरण्यपर्णेति** । न हि लोके वनस्पतीनां हिरण्मयपर्णत्वमित्यर्थान्यत्वम् । **वाराही उपानहौ** वराहचर्मनिर्मिते । **वैतसे कट** इत्यश्वमेधे श्रूयत एतत् । वेतसनिर्मिते कटे प्रजापतिदेवताकानश्वादिनानापश्ववयवान् सञ्चिनोति सहचरयति । **शिष्टप्रसिद्ध्या** शास्त्रवित्प्रसिद्ध्या । तथाहि 'यवमयेषु करम्भपात्रेषु विहितेषु वाक्यशेषं यत्रान्या ओषधयो म्लायन्ते तत्रैते मोदमाना इवोत्तिष्ठन्तीति'; न चैवंरूपता प्रियङ्गुषु सम्भवति, सर्वौषधिसाधारणे शरत्समये तदुद्भवात्; यवानान्तु ग्रीष्मे समुद्भवः, अतस्तेष्वेव प्रत्ययस्तस्माद् ।

न प्रियङ्गुकृष्णशकुनिजम्बूष्विति। यत्र तु शिष्टप्रसिद्धिर्नास्ति तत्र म्लेच्छेभ्योऽपि तदर्थव्युत्पत्तिराश्रीयते, यथा पिकनेमतामरसशब्देषु। म्लेच्छप्रसिद्धेरप्यभावे निगम-निरुक्तव्याकरणवशेन धातुतोऽर्थः परिकल्पनीयः। तेनाश्विनसूक्तप्रक्रमाज्जरणमरण-निमित्तौ जर्फरीतुर्फरीतू इति द्विवचनान्तसरूपावेतौ शब्दावश्विनोर्वाचकाविति गम्यते, एवमन्यत्राप्युत्प्रेक्षणीयम्। तदनेनापि निमित्तेन न मन्त्राणामविवक्षितार्थत्वं 5 वक्तव्यम् ।

अमी तस्मादर्थप्रकटनमुखेनैव दधति
क्रियार्थत्वं मन्त्रा न तु पठनमात्रेण जपवत् ।
न तद्द्वारेणापि श्लथयितुमतः शक्यत इदं
प्रमाणत्वं वेदे सकलपुरुषार्थामृतनिधौ ।। 10

## नामधेयपदसार्थक्यम्

इदमिदानीं परीक्ष्यते, 'उद्भिदा यजेत' 'चित्रया यजेत पशुकामः' 'अग्निहोत्रं जुहुयात् स्वर्गकामः' 'श्येनेनाभिचरन् यजेत' 'वाजपेयेन स्वाराज्यकामो यजेते'ति श्रूयते। तत्र किमुद्भिदेति चित्रयेति अग्निहोत्रमिति श्येनेनेति वाजपेयेनेति गुणविधय एते,तत्तत् कर्मनामधेयानि वेति ? किमनेन परीक्षितेन प्रयोजनम् ? उभयत्रापि 15 प्रामाण्यं नोपपद्यते इति तदर्थमेवेदं परीक्ष्यते। यदि तावद् 'व्रीहिभिर्यजेत' 'दध्ना जुहोती'तिवद् गुणः कश्चिदुद्भिदादिपदैर्विधीयते अनेन द्रव्यविशेषेण यागः कर्त्तव्य इति तदा भावार्थस्य यज्यादेरन्यतोऽवगतिर्मृग्या, अनवगते भावार्थे गुणविधा-

---

'वराहं गावोऽनुधावन्ति' इत्यतस्तु वाक्यशेषात् सूकरे वराहशब्दो न कृष्णशकुनौ काके; न हि तं गावोऽनुधावन्तीति। 'अप्सुजो वेतसः' इत्यमुष्माच्च वाक्यशेषाद् वञ्जुले 20 वेतसशब्दो न जम्ब्वाम्। निगमेति निगमा निघण्टवः, अस्येयन्ति नामानीत्येवंप्रायाः। मन्त्रार्थप्रदर्शनपराणि वेदवाक्यान्येव यानि. यथा 'युञ्जानः प्रथमं मनः' इत्यस्य मन्त्रस्य 'प्रजापतिर्वै युञ्जानः' इत्यादिको व्याख्यारूपो निगम उच्यते। व्युत्पत्त्यार्थप्रतिपादनं येन क्रियते तन्निरुक्तम्।

तत्र किमिति उद्भिद्यते मृत् खन्यते येन तदुद्भित् कुद्दालादि, तेन 'उद्भिदा 25 यजेत' इति गुणविधिः, यवैर्यजेतेतिवत्।

नस्यानुपपन्नत्वात्। 'आग्नेयोऽष्टाकपालो भवति' 'अग्निहोत्रं जुहोती'ति विध्यन्तरेण भावार्थे चोदिते तत्र 'व्रीहिभिर्यजेत' 'दध्ना जुहोती'ति।

ननु 'वाजपेयेन स्वाराज्यकामो यजेते'त्यनेनैव वाक्येन यागाख्यो भावार्थः चोदयिष्यते गुणश्च तस्मिन् वाजपेयाख्यो विधास्यते इति को दोषः? कथं न दोषः? अर्थद्वयविधानेन वाक्यभेदप्रसङ्गात्। यागेन स्वाराज्यं कुर्यादित्येकोऽर्थः, वाजपेयेन गुणेन यागं कुर्यादिति द्वितीयोऽर्थः, न च सकृदुच्चरितं वाक्यमर्थद्वयविधानाय प्रभवति।

ननु यजेतेति रूपसाम्यादुभयत्रापि संबध्यते यजेत स्वाराज्यकामो वाजपेयेन चेति तुल्यमस्योभयत्रापि रूपम्? न। रूपसाम्यस्यासिद्धत्वात्। स्वाराज्यं प्रति यजिरप्राप्तत्वाद् विधीयते गुणञ्च प्रति प्राप्तत्वादनूद्यते। अनवगते हि कर्मणि गुणविधानमघटमानमित्यवश्यं गुणविधिपक्षे गुणं प्रति यजिः प्राप्तत्वादुद्देश्यो भवति प्रधानञ्च। स एव स्वाराज्यं प्रति विधेयत्वादुपादेयो गुणश्चेति विरुद्धरूपापत्तेर्न यजिरुभाभ्यां युगपत् सम्बन्धुमर्हति। यः स्वाराज्यं साधयितुमिच्छेत् स यजेतेत्यन्यद्रूपम्, यद् यजेत तद् वाजपेयेनेत्यन्यपद्रूम्। तस्माद् भावार्थप्राप्तौ प्रमाणान्तरापेक्षणाद् गुणविधिपक्षे तदप्रमाणं वचनम्। अथैष दोषो मा भूदिति नामधेयपक्ष आश्रीयते?

---

गुणश्च तस्मिन् वाजपेयाख्य इति। वाजमन्नं वाजश्च तत् पेयञ्चेति यवागूरुच्यते, स गुणः, तेन यागः कर्तव्य इति।

रूपसाम्यादिति। तदेव यागाद्यात्मकं रूपमुभयत्रापि सम्बध्यमानस्य, अतस्तन्त्रेणोभयत्र सम्बध्यत इति। प्रधानञ्चेति। अन्येनोपक्रियमाणत्वात् प्रधानम्। तस्माद् भावार्थप्राप्ताविति। वैदिकानि तावद् विधायकानि सर्वाण्येव गुणविधाने पर्यवसितानि सर्वाणि हि सोपपदानि, उद्भिदा यजेतेतिवत्। तच्छुद्धस्य यागस्य विधायकमवश्यमन्यत् प्रमाणान्तरं मृग्यम्, अतश्च प्रमाणान्तरसव्यपेक्षत्वादप्रमाणमिति प्रभाकरमतम्। तथा च स आह 'तस्मात् कर्मविधानासम्भवादप्रामाण्यम्। कथम्? लौकिककर्माश्रयणात्। अवश्यं हि गुणविधिपरे वाक्ये लौकिकं कर्माश्रयणीयम्। वैदिके न खलु बाधा दोषः किन्तु असम्भवः। कथमसम्भवः? सर्वत्रोपपदश्रुतेः। एवमपि किमित्यप्रामाण्यम्? धात्वर्थेऽन्यतः प्रवृत्तिर्मृग्या। अन्यतश्चेत् सापेक्षत्वप्रसङ्गः, सापेक्षत्वाच्चाप्रामाण्यं प्रसक्तम्" इत्यादि।

तदैषामुद्भिदादिपदानां विस्पष्टमेवानर्थक्यम्। यावदेवोक्तं भवति यजेतेति तावदेव वाजपेयेनेति । एवमानर्थक्यादन्यत्राप्यसमाश्वासः ।

## नामधेयपदसार्थक्यम्

अत्रोच्यते, गुणविधिपक्षे यथा भवानाह तथैव, नामधेयपक्ष एव तु श्रेयानित्यभ्युपगम्यते। तथा हि भावार्थस्य फलं प्रति करणत्वात् तत्सामानाधिकरण्येन तृतीया प्रयुज्यते तत्र वाजपेयेनेति । साध्यश्च भवन् भावार्थः करणभावमनुभवतीति साध्यत्वापेक्षया तत्सामानाधिकरण्येन क्वचिद् द्वितीयापि प्रयुज्यते अग्निहोत्रं जुहोतीति। 5

ननु गुणवन्नामापि विधातव्यमेव अनभिहितस्यानवगमात्। ततश्च गुणविधिपक्षस्पृशो वाक्यभेदादिदोषास्तदवस्था एव ? नैतदेवम् । न ह्यस्य कर्मण इदं नाम वेदितव्यमिति संज्ञासंज्ञिसम्बन्धं वेदो विदधाति । योगेन केनचित् प्रवर्त्तमानं नामधेयमवगम्यत एव, उद्भेदनमनेन पशूनां क्रियत इत्युद्भिदम्, दधि मधु घृतं धाना उदकं तत्संसृष्टं प्राजापत्यमिति नानाविधविचित्रद्रव्यसाध्यत्वाच्चित्रा, अग्नये होत्रमस्मिन्नित्यग्निहोत्रम्, यथैव श्येनो निपत्यादत्ते एवमनेन द्विषन्तं भ्रातृव्यमादत्ते इत्यर्थवादात् श्येन एव श्येनो यागः, वाजमन्नं पीयतेऽस्मिन्निति वाजपेयो यागः, तस्मात् कर्मनामान्येतानि । 10 15

यत्तु नामधेयपक्षे नैरर्थक्यमाशङ्कितं तदपि न चारु, नामापि गुणफलोपबन्धेनार्थवदिति अभियुक्तैः परिहृतत्वात्। एवंनामेदं कर्मेत्यवगम्यते तत्र गुणो द्रव्यदेवतादिः, फलञ्च तस्य स्वर्गः पश्चादवगम्यत इति । तस्मान्नामधेयपदानामविरुद्धोऽन्वयः। क्वचित् पुनरप्राप्ते भावार्थे सगुणमेव तत्कर्म चोद्यते, यथा 'आग्नेयोऽ- 20

---

गुणविधिपक्षस्पृश इति । फलं प्रति विधेयत्वाद् धात्वर्थस्य, नामविधिं प्रति चोद्देश्यत्वात् । संज्ञासंज्ञिसम्बन्धमिति । कार्यपरत्वाद् वेदस्येति भावः । योगेन केनचिदित्यादिना नामधेयस्यानूद्यमानत्वं दर्शयति । योगेन पशूनामुद्भेदनेन फलभूतानां प्रकाशनेन यत् सिद्धमुद्भित्त्वं तदनेनानूद्यते न विधीयत इत्यर्थः । येनानेन यागविशेषेण पशुकामो यजते भवत्येवासावुद्भित् पशूनामुद्भेदनादित्यर्थः । 25

गुणफलोपबन्धेनार्थवदिति । तत्सम्बन्धित्वेन गुणफलयोर्विधानादित्यर्थः ।

**ष्टाकपालोऽमावास्यायां पौर्णमास्याञ्च च्युतो भवति' इति। यथा वा 'एतस्यैव**

---

**आग्नेयोऽष्टाकपाल** इति। अच्युत इत्युभाभ्यामपि दर्शपूर्णमासाभ्यां न च्यवत इति।
अत्र हि अष्टकपालेषु यः संस्कृतः साष्टाकपाल आग्नेयो भवति, तस्य पुरोडाशस्या-
ग्नेयता विधीयते; न ह्यविधीयमान आग्नेयो भवति। स पुनरष्टाकपाल एवमाग्नेयो
5 भवति यदग्नये संकल्प्य दीयते, संकल्पमन्तरेणाग्नेयत्वाभावात्। संकल्पितस्य यागेन
विना अर्थवत्ता नास्तीत्येवमनेन प्रकारेण तद्धितान्तनिर्देशान्यथानुपपत्त्या यागो विहितः।
स चैवं द्रव्यदेवतासम्बन्धात्मको यागो विधायमानो न शक्यः सम्बन्धिनावग्निपुरोडा-
शावन्तरेण विधातुमिति सगुणस्य कर्मणो यागस्य विधानम्। तथा च जैमिनिः
"तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः" इति। **यथा वा एतस्यैवेति।**
10 "समेषु कर्मयुक्तं स्यात्" इत्यत्रैतच्चिन्तितम्। त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वेक-
विंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेतेति। ततः पुनरुक्तम् एतस्यैव रेवतीषु
वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति। तत्र प्रथमं त्रिवृत्स्तोमकोऽ-
ग्निष्टुन्नामको यागः स चाग्निष्टोमोऽग्निष्टोम संस्थस्तस्य वायव्या या ऋचः तास्वेक-
विंशमेकविंशत्या स्तोत्रीयाभिर्ऋग्भिर्निर्वर्त्योऽग्निष्टोमाख्यः स्तोत्रविशेषः। पश्चादेतस्यै-
15 वेत्याह। अत्र विशेषः रेवत्याख्यासु ऋक्षु वारवन्तीयाख्यस्याग्निष्टोमसाम्नो विधानम्।
तत्र संदेहः। किं पूर्वप्रकृतस्याग्निस्तुतोऽग्निष्टोमस्य यो गुणो वारवन्तीयाख्यस्तस्मिन्
पशवः फलम् अथवा एतेन यजेतेति कर्मान्तरविधानमिति। तत्र पशुकामो यदि
यजेतानेन यदेवं कृत्वेति सम्बन्धादेतस्यैवेत्यनेन तस्यैव परामर्शात् तस्यैव गुणविधिरिति
पूर्वपक्षिते "समेषु कर्मयुक्तं स्यात्" इति सिद्धान्तः। समेष्वेवंजातीयेषु रेवत्यादिवाक्येषु
20 कर्मयुक्तं फलमपूर्वात् कर्मणः फलं न पूर्वस्यैव गुणविधिरित्यर्थः। कथम्? गुणविधिपक्षे
वाक्यभेदात् तस्य तावत् प्रकृतस्य रेवत्यो न सन्ति ता विधेयास्तासु चाग्निष्टोमसाम
नास्ति पूर्वसिद्धं तदपि विधेयम्। सिद्धान्ते तु रेवत्याधारवारवन्तीयस्तोत्रनिर्वृत्तिपूर्व-
कत्वविशिष्टो यागो विधीयते। तदा च विशेषणानामविधाने कथं तद्विशिष्टस्य यागस्य
विधिरिति बलात् सगुणस्य कर्मणो विधानमायाति। यदा चैवं न्यायस्तदा एतस्येत्येवं
25 धर्मकस्येति व्याख्येयम्। अत्र च 'यागप्रवृत्तौ सत्यां साम्नः करणमुपपद्यते न तु पूर्वम्'
इत्याक्षिप्य प्राभाकरैः 'प्रतीतिपौर्वापर्ये क्त्वाश्रुतिर्न प्रयोगपौर्वापर्ये' इत्यादि समर्थित-

रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेते'ति। अलं शास्त्रान्तरोक्तगहनकथाविस्तरेण इति नास्ति नामधेयद्वारेणापि प्रामाण्याक्षेपः। सर्वप्रकारमेव सिद्धं वेदप्रमाणत्वमिति।

वेदप्रामाण्यसिद्ध्यर्थमित्थमेताः कथाः कृताः।
न तु मीमांसकख्यातिं प्राप्तोऽस्मीत्यभिमानतः॥ 5

## कार्य एवार्थे वेदाः प्रमाणमिति शङ्का

नन्वेवं विध्यर्थवादमन्त्रनामधेयानां कार्यौपयिकत्वदर्शनात् कार्य एवार्थे वेदाः प्रमाणमित्युक्तं स्यात्। ततः किं सिद्धेऽर्थे तस्य प्रामाण्यं हीयते? ततोऽपि किं भूयान् भूतार्थाभिधायिग्रन्थराशिरुपेक्षितो भवेत्? सकलस्य च वेदस्य प्रामाण्यं प्रतिष्ठापयितुमेतत् प्रवृत्तं शास्त्रम्। 10

अत्र केचिदाहुः, सर्वस्यैव वेदस्य कार्येऽर्थे प्रामाण्यम्। तथा हि गृहीतसम्बन्धः शब्दोऽर्थमवगमयति, सम्बन्धग्रहणञ्चास्य वृद्धव्यवहारात्। वृद्धानाञ्च व्यवहारः पानीयमानय गां बधान ग्रामं गच्छेति कार्यप्रतिपादकैरेव शब्दैः प्रवर्त्तते इति तत्रैव व्युत्पद्यन्ते बालाः। प्रयोजनोद्देशेन हि वृद्धा वाक्यानि प्रयुञ्जते। न च सिद्धार्थाभिधायिना प्रवृत्तिनिवृत्ती अनुपदिशता शब्देन किञ्चित् 15 प्रयोजनमभिनिर्वर्त्तत इति तस्य न प्रयोगयोग्यत्वम्। अप्रयुज्यमानस्य च न सम्बन्धग्रहणम्। अगृहीतसम्बन्धस्य च न प्रतिपादकत्वम्। अप्रतिपादकस्य च न प्रामाण्यम्। अपि च आख्यातपदोच्चारणमन्तरेण निराकाङ्क्षप्रत्ययानुत्पादादवश्यमाख्यातयुक्तं वाक्यं प्रयोक्तव्यम्। आख्यातपदेन साध्यरूपोऽर्थ उच्यते नामधेयपदेन च सिद्धः। भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यत इति वाक्यस्य साध्यार्थनिष्ठतेति 20 न भूतार्थविषयं तस्य प्रामाण्यम्। अतश्च कार्येऽर्थे शब्दस्य प्रामाण्यम्, यतश्च कार्यरूपोऽर्थः शब्दस्यैव विषय इति। न च शब्दः प्रमाणतां सिद्धेऽर्थे लभते। सिद्धोऽर्थः प्रसिद्धत्वादेव प्रमाणान्तरपरिच्छेदयोग्य इति तत्प्रतिपादने तत्प्रमाणान्तरसव्यपेक्षः

---

मित्यास्तां तावदेतत्। अत एवानेनाप्युक्तम् अलं शास्त्रान्तरेत्यादि।

25

समुच्चारणे सहोच्चारणे।

शब्दो भवति। ततश्च तद्ग्राहिणः प्रमाणान्तरस्यैव तत्र प्रामाण्यं स्यान्न शब्दस्य। शब्दश्च तदुपस्थापनमात्रनिष्ठ एव स्यात्। तस्माच्छब्दप्रामाण्यमिच्छता कार्य एवार्थे तत्प्रामाण्यमङ्गीकर्त्तव्यमिति।

## अकार्येऽपि अर्थे वेदाः प्रमाणम्।

5 अत्रोच्यते। यद् ब्रूषे कार्य एवार्थे वाक्यस्य व्युत्पत्तिरिति तदयुक्तम्। एवं हि सिद्धरूपोऽयं तस्यार्थ इति कथं त्वयोच्यते? न ह्यलब्धव्युत्पत्तेः शब्दादर्थप्रत्ययो युज्यते। अर्थप्रतीतिश्च ततो दृश्यते व्युत्पत्तिश्च तत्र नास्तीति चित्रम्। न च कार्य-परैरेव शब्दैर्लोके व्यवहारो वर्त्तमानापदेशकेभ्योऽपि व्यवहारप्रवृत्तेस्तत्रापि व्युत्प-त्तिर्भवत्येव। अपि चाङ्गुल्यादिना पुरोऽवस्थितमर्थं निर्दिश्य यदा कश्चित् कथयत्य-

10 स्येदं नामेति तदा कार्योपदेशमन्तरेणापि भवत्येव व्युत्पत्तिः 'अस्माच्छब्दादयमर्थः प्रतिपत्तव्यः इति। कार्योपदेश एवासौ इति चेत्? तादृशानामक्षराणामश्रवणात्। अस्येदं नामेति हि श्रूयते नास्मादयं प्रतिपत्तव्य इति। अस्येदं नामेत्येषामेवाक्षराणा-मेषोऽर्थ इति चेद्? न। अपदार्थस्य वाक्यार्थत्वायोगात्। न चैवं कल्पयितुमपि शक्यते, अस्येदं नामेत्येतावतैव च तत्प्रतिपत्तिसिद्धेः प्रतिपत्तिकर्त्तव्यताविधानस्य निष्प्रयो-

15 जनत्वात्। कार्यपरादपि शब्दाद् व्युत्पत्तिर्भवन्ती न वाक्यार्थमात्रपर्यवसायिनी भवति किन्त्वेकैकपदादावापोद्वापद्वारकपदार्थपर्यन्ता सा भवति। पदार्थव्युत्पत्ति-संस्कृतमतेश्च अभिनवकविविरचितवर्त्तमानापदेशश्लोकश्रवणेऽपि वाक्यार्थप्रतीति-र्दृश्यत एवेति नाव्युत्पत्तिकृतमप्रामाण्यम्। न चासौ भूतार्थप्रतिपादकशब्दजनिता प्रतीतिर्बाध्यते सन्दिग्धा वा। तेन प्रत्यक्षादिप्रमाणान्तरकरणकप्रतीतिवत् प्रमाण-

20 फलमेव सा भवितुमर्हति।

यत्पुनरभ्यधायि कार्येऽर्थे प्रमाणान्तरनिरपेक्षतया प्रमाणं भवति शब्दः, न सिद्धेऽर्थे, प्रमाणान्तरसापेक्षत्वादिति, तदसत्। प्रवर्त्तयितुमेव न शक्नोति इत्यवो-

---

प्रतिपत्तिकर्तव्यताविधानस्य निष्फलत्वादिति। यथा भुजौ प्रवृत्तस्तृप्तिं प्रति न नियुज्यते स्वत एव भावादेवं शब्दश्रवणादेव प्रतिपत्तेः सिद्धत्वात् 'प्रतिपत्तिं कुरु'

25 इति प्रतिपत्तिकर्तव्यताविधानं निष्फलम्।

चाम, वक्ष्यामश्च वाक्यार्थचिन्तायामपि। प्रमाणान्तरसापेक्षत्वं तस्य प्रत्युत प्रामाण्य-मावहति। किञ्चेदं सापेक्षत्वमिति वक्तव्यम्। किं सिद्धार्थाभिधायिनः शब्दस्योत्पत्तावेव प्रमाणान्तरापेक्षत्वम्, उत तद्विषयस्य प्रमाणान्तरपरिच्छेदयोग्यत्वमित्युभयथाति-प्रसङ्गः। उत्पत्तौ प्रमाणान्तरसव्यपेक्षतया यद्यप्रामाण्यं वर्ण्यते? हन्त हतमनुमानम्, तस्योत्पत्तौ प्रत्यक्षादिसापेक्षत्वात्। वर्णितञ्च तत्पूर्वकं त्रिविधमनुमानमिति। तद्विष-यस्य प्रमाणान्तरग्रहणयोग्यतायान्तु तदप्रामाण्ये प्रत्यक्षादीनां सर्वेषामप्रामाण्यं प्राप्नोति, प्रमाणसंप्लवस्य प्राक् प्रतिपादितत्वात्। किञ्च लौकिकेषु वाक्येषु 'अधीष्व' 'गां बधान' 'ग्रामं गच्छे'त्येवमादिष्वन्वयव्यतिरेकाभ्यां हिताहितप्राप्तिपरि-हारसाधनसामर्थ्यावगमेन प्रवृत्तिसिद्धेः विनियोगनिष्ठ एव विधिर्भवति। अप्रवृत्त-प्रवर्त्तनात्मकनिरपेक्षनिजव्यापारवैधुर्यात् कार्यपरत्वानुपपत्तेः अनुवादमात्रं विधि-वचनमि'ति कार्यार्थप्रामाण्यवादिनां सर्वमेव लौकिकं वाक्यमप्रमाणं स्यात्।

ये तु भूतार्थवादिषु प्रवृत्तिनिवृत्तिकारिषु विधिनिषेधौ कल्पयन्ति ते नित-रामृजवः। श्रूयमाणोऽपि विधिरनुवादीभवति यत्र तत्राश्रुतः कल्पयितव्य इति किमन्यदेतत् परमार्जवम्। प्रवृत्तौ तु तत्र विधिरप्रयोजक एव, अन्वयव्यतिरेकाभ्यां पुरुषार्थसाधनसामर्थ्यावगमात् पुरुषप्रत्ययाद् वा लोकेषु प्रवृत्तिसिद्धेः, तत्रैतत् स्यात्। लौकिकवाक्यानां विवक्षापरत्वान्न कार्यार्थत्वम्।

---

किञ्च लौकिकेष्विति। अत्र किञ्च लौकिकेष्विति आरभ्य अनुवादमात्रं विधि-वचनमिति एवंवदतां कार्यप्रामाण्यवादिनामिति समन्वयः। हिताहितेति। हिताहितप्राप्ति-परिहारयोर्यत्साधनं सिद्धिस्तत्र सामर्थ्यमवगत्य ग्रामगमनादेस्तत्र ग्रामगमनादौ प्रवृत्तेः। विनियोगनिष्ठ एव। 'ग्रामं गच्छ ग्रामगमनाद्धितं भवति' इति हितप्राप्तिग्रामगमनयोर्यः साध्यसाधनसम्बन्धलक्षणो विनियोगस्तन्निष्ठ इति। अनुवादमात्रमिति। प्रवर्तनाभि-धानद्वारेण हि प्रवृत्तौ तात्पर्यं लिङादेः, सा चान्यतः सुखसाधनत्वावगमनादेर्या प्राप्ता तामसावनुवदति नापूर्वां विदधाति।

ये तु भूतार्थवादिष्विति। 'निधिमानयं प्रदेशः' 'प्रतिरोधकवानयमध्वा' इत्यादिषु 'गृहाण' 'मा गमः' इत्यादि कल्पयन्ति। तत्राश्रुतः कल्पयितव्य इति कल्प-यित्वाप्यनुवादीकर्तव्यः, तद् वरमकल्पनैवेत्यभिप्रायः। न च कल्पनामपि विना काचित् क्षतिरित्याह प्रवृत्तौ त्विति।

अपि च पौरुषेयाद् वचनादेवमयं पुरुषो वेदेति भवति प्रत्ययो नैवमर्थप्रतीतिः। वैदिकानि पुनरपौरुषेयतया कार्यपराण्येव वाक्यानीति, एतदपि न पेशलम्। अपौरुषेयस्य वचसः प्रतिक्षिप्तत्वात्, वेदेऽपि कर्तुरीश्वरस्य साधितत्वात्। न च पुरुषवचनमपि विवक्षापरमिति दर्शितम्। तथा हि न विवक्षा वाक्यार्थो देवदत्त गाम-
5 भ्याज कृष्णां दण्डेनेति पदग्रामे विवक्षावाचिनः पदस्याश्रवणात्, अपदार्थस्य वाक्यार्थत्वानुपपत्तेः। न च विषभक्षणवाक्यस्येव परगृहे भोजननिवृत्तौ पौरुषेयवचसो विवक्षायां तात्पर्यशक्तिरपि प्रभवति। न हि सर्वात्मनाभिधात्रीं शक्तिमवधीर्यैव तात्पर्यशक्तिः प्रसरतीति न विवक्षापरत्वम्। कथं तर्हि पुरुषवचनादुच्चारिताद् विवक्षावगम इति चेद्, अनुमानादिति ब्रूमः। कार्यत्वात् पदरचनायाः पुरुषेच्छापूर्व-
10 कत्वमनुमीयते। अर्थावगमपुरःसरञ्च पुरुषवचनाद् विवक्षानुमानमेवमयं वेद एवमयं विवक्षतीति। अर्थोपरागरहितस्य विवक्षामात्रस्य जीवतां निसर्गत एव सिद्धेः। अयमर्थो विवक्षित इत्यर्थोपरज्यमाना तु विवक्षा न शक्या अर्थेऽनवगतेऽवगन्तुम् अर्थश्चेत् प्रथममवगतो वाक्यान्न तर्हि तद्विवक्षापरम्, अर्थपरमेव भवितुमर्हति। लोकवाक्यानां विवक्षापरत्वे बाह्येऽर्थे सम्बन्धग्रहणासम्भवाद् वेदादपि वाक्यार्था-
15 वगमो न स्यादित्यलं प्रसङ्गेन। तस्मान्न कार्यपरत्वेनैव शब्दस्य प्रामाण्यम्।

यत्पुनरभाणि, नाख्यातशून्यं वाक्यं प्रयोगार्हम्, तेन विना नैराकाङ्क्ष्यानुपपत्तेः। आख्यातस्य च भव्यरूपोऽर्थो, न नाम्न इव भूतः, भूतभव्यसमुच्चारणे च भूतं भव्यायोपदिश्यते इति सर्वत्र कार्यपरत्वम्, तदपि न साम्प्रतम्। पुत्रस्ते जातः कन्या ते गर्भिणीति सुखदुःखकारिणामनुपदिष्टप्रवृत्तिकानामनाख्यातानामपि वाक्यानां
20 लोके प्राचुर्येण प्रयुज्यमानत्वात्।

अथ सुखी भव दुःखी भवेति तत्र कार्यपरत्वं व्याख्यायते, तदपि न युक्तम्। ईदृशानामक्षराणामश्रवणात्, कल्पनायाश्च निष्फलत्वात्। न हि भवेत्युपदेशादसौ सुखी भवति सुखीभवितुं वा क्वचित् प्रवर्त्तते, उपाये पूर्वमेव प्रवृत्तत्वात्, उपेये च

---

एवमयं पुरुषो वेदेति। एवमस्य ज्ञानमस्तीत्यर्थः। न हि सर्वात्मनाभि-
25 धात्रीमिति। पदानां हि पदार्थेऽभिधात्रीः शक्तिः, पदार्थसंसर्गात्मके वाक्यार्थे तात्पर्यशक्तिः, पदार्थाभावे च कथं तत्संसर्गात्मकवाक्यार्थलाभः।

उपाये पूर्वमेवेति। पुत्रजननाद् यदुत्पद्यते सुखं तस्य पुत्रजननात्मको व्यापार

प्रवृत्त्यनुपपत्तेः। किन्तु पुत्रजन्मश्रवणत एवासौ सुखीभवति। तथा कस्यचिदुत्तरी-
यावगुण्ठिततनोर्निद्रायमाणस्य क्वचित् केनचित् केलिना रज्जुवेष्ठितवपुषः पश्चात्
प्रबोधसमये सहसा सरीसृपवलितमात्मानं मन्यमानस्य भयादनुन्मीलितचक्षुषः केन-
चित् प्रयुज्यमानं रज्ज्वा वेष्टितोऽसीति वचः श्रवणपथमवतरति तत् सिद्धार्थबोधक-
मपि प्रमाणम्। न च तत्र मा भैषीरिति प्रयोगकल्पनाप्रयोजनम्। रज्जुवेष्टनप्रत्यया- 5
देव भयनिवृत्तेः सिद्धत्वात्। तथा च विषमविषधराधिष्ठितोऽयमध्वा निधियुक्तोऽयं
भूभाग इति भूतार्थख्यापकं वचो दृश्यते न च तदप्रमाणम्। न च तत्र मा गास्त्वम-
नेनाध्वना, निधिं गृहाणेति विधिनिषेधपरत्वं युक्तम्, एषां पदानामश्रवणात्।

ननु वक्तुः प्रेक्षापूर्वकारितया निष्प्रयोजनवचनानुच्चारादवश्यं मा गा गृहा-
णेति कार्याक्षराणि हृदये परिस्फुरन्ति कथञ्चिदालस्यादिना नोच्चारितानीति, 10
नैतद्युक्तम्। प्रेक्षापूर्वकारित्वादेव वक्तुः यथावस्थितवस्तुस्वरूपमात्रख्यापकवचनो-
च्चारणमेव युक्तम्, अर्थात् प्रवृत्तिनिवृत्त्योः सिद्धत्वात्, पराभिप्रायस्य चानवस्थित-
त्वेन नियतोपदेशानुपपत्तेः, सर्पबन्धजीविनो हि सपन्नगः पन्था उपादेयतयावभाति,
वीतरागस्य च ब्रह्मविदो वित्तैषणाव्युत्थितस्य गोविन्दस्वामिन इव निधिरपि
हेयतया परिस्फुरतीति कस्मै किमुपदिश्यताम्। वस्तुस्वरूपे तु कथिते यथाहृदय- 15
वर्त्तिरागद्वेषानुवर्तनेन कश्चित् तत्र प्रवर्ततां कश्चित् ततो निवर्त्ततामिति भूतार्थ-
कथनमेव लोके प्रेक्षावान् करोति, न विधिनिषेधौ प्रयोक्तुमर्हतीति।

येऽपि ब्रुवते सर्वत्र प्रतिपत्तिकर्त्तव्यताविधानमेवादौ वेदितव्यम्, अविधिकस्य
वाक्यस्य प्रयोगानर्हत्वादिति, तेऽपि न साधु बुध्यन्ते। विदितशब्दार्थसम्बन्धस्य
पुंसः शब्दश्रवणे सति प्रतिपत्तेः स्वतः सिद्धत्वेनानुपदेश्यत्वात्। असिद्धायां वा 20

---

उपायः।

वित्तैषणाव्युत्थितस्य धनाभिलाषनिरपेक्षेण वर्तमानस्य। गोविन्दस्वामिन
इव इति। भगवान् गोविन्दस्वामी हि धनाहरणाय पुरा किं किं न व्यधत्त तथापि
कृतयत्नातिशयो न कामपि यदा धनमात्रामाससाद तदा कालेन महद्वैराग्यमस्य
प्रादुरभूत्, तथाविरक्तश्च कदाचिन्निधिमुपलभ्य तदुपरि मूत्रपुरीषोत्सर्गमकरोदिति
श्रूयते। 25

प्रतिपत्तौ प्रतिपत्तिकर्त्तव्यतापि कुतः प्रतीयेत ?

ननु कार्यार्थप्रतिपादकं पदमन्तरेण पदान्तराणि संसर्गमेव न भजन्ते, कार्याकाङ्क्षानिबन्धत्वात् सम्बन्धस्य, तेन सर्वत्र कार्यपरत्वमुच्यते ? नैष नियमः कार्याकाङ्क्षागर्भ एव सर्वत्र सम्बन्ध इति, वर्त्तमानापदेशकानामपि प्रेक्षापूर्वकारिवाक्यानामितरेतरसंसृष्टार्थप्रतीतिजनकत्वदर्शनात् । न हि दशदाडिमादिवाक्यसदृंशि वर्त्तमानापदेशीनि वचांसि भवन्ति । कार्यनिबन्धने हि सम्बन्धे तद्रहितानामनन्वय एव स्यात् । दर्शितश्चान्वयः पूर्वोदाहृतवाक्यानाम् । अपि च लिङन्तपदयुक्तेऽपि वाक्ये पदार्थान्तरानां परस्परमन्वयो दृश्यत एव । स कथं समर्थयिष्यते ? कार्याकाङ्क्षानिबन्धने हि, कार्ये सर्वेषामन्वयो न परस्परमिति ।

अथ ब्रूयात् सर्वथा कार्यसम्बन्धे प्रथममवगते सति पश्चादरुणैकहायनीन्यायेन वाक्यीयः परस्परान्वयोऽपि सेत्स्यतीति ? हन्त ! तर्हि परस्परान्वये कार्याकाङ्क्षा कारणम् । तर्ह्यरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणातीति द्रव्यगुणयोर्विभक्त्या सोमक्रयं प्रति युक्तत्वात् प्रथमं क्रयसम्बन्ध एव तयोर्गम्यते । यश्च पाश्चात्यः परस्परान्वयस्तत्र कार्यपारतन्त्र्यापादिका विभक्तिरकारणम्, असत्यामपि तस्यां शुक्लः पट इति सामानाधिकरण्यप्रयोगेणान्वयसिद्धेः । तस्मात् कार्यैकनिबन्धनोऽन्वय इति नियमो य उच्यते स कल्पनामात्रप्रभवो न प्रामाणव्यवस्थागम्य इति ।

यत्तु भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यत इत्ययमपि न सार्वत्रिको नियमो विपर्ययस्यापि व्रीहीन् प्रोक्षतीत्यादौ दर्शनाद् । अलं वा दर्शपूर्णमासप्रकरणनिवेशानुज्झितकार्यमुखप्रेक्षणदैन्येन व्रीहिप्रोक्षणोदाहरणेन ।

---

प्रतिपत्तिकर्तव्यतापि कुत इति । प्रतिपत्तिं कुर्वित्युपदिश्यते, सा चेच्छब्दाद्भवति तदा कर्तुं शक्या ।

पदार्थान्तराणाम् । शुक्लैर्व्रीहिभिर्यजेतेत्यादिषु द्रव्यगुणादीनां वाक्यीयः परस्परसम्बन्धः साकांङ्क्षाणां सन्निधानकृतः ।

विभक्त्या तृतीयया । कार्यपारतन्त्र्यापादिका विभक्तिरिति तृतीयया हि द्रव्यगुणयोः क्रयकार्यं प्रति पारतन्त्र्यं प्रतिपादितम्, अतस्तत्रैवोपक्षीणासौ । व्रीहीन् प्रोक्षतीति । प्रोक्षणस्य भव्यस्यापि व्रीह्यर्थत्वात् । ननु दर्शपूर्णमासप्रकरणादपरित्यक्तपारार्थ्यानामेव व्रीहीणामसौ संस्कार इत्याशङ्क्याह अलं वेति ।

आत्मा ज्ञातव्य इति तु सिद्धपर एव साध्योपदेशः । नह्यत्र कर्म किञ्चित् साध्यं प्रधानमुपदिश्यतेऽधिकाराश्रवणात् । न च विश्वजिदादिवदधिकारकल्पना काचिदुपदिश्यते। न च कर्मप्रवृत्तिहेतुत्वमात्मज्ञानस्येति वक्ष्यामः। अर्थवादस्त्वर्थवाद एव नाधिकारिकल्पनायै प्रभवति । तस्मादपहतपाप्मादिगुणयुक्तात्मस्वरूपनिष्ठत्व-मेव तत्रावतिष्ठते, तस्मिन्नवगते पुरुषान्तरप्रार्थनादैन्यानुपपत्तेः। स एव ह्युत्तमः पुरु- 5 षार्थः, स च सिद्ध एव न साध्यः, यत्नस्तु कृतबुद्धीनामविद्योपरमायैवेति व्याचक्षते ।

ज्ञातव्य इति प्रतिपत्तिकर्त्तव्यतापरोऽयं विधिरिति चेन्न । प्रतिपत्तेः प्रमिति-

---

कर्म किञ्चित्साध्यं प्रधानमिति। दर्शपूर्णमासप्रधानकर्मोपदेशात् तादर्थ्यं व्रीह्यादीनां नैवमत्र ज्ञानमेव प्रधानं कर्म भविष्यति। तत्र साध्यगुणत्वेनैवात्मनो 10 द्रव्यस्य सम्बन्ध इति चेन्न। साधिकारं हि प्रधानं कर्म भवति, न चात्राधिकारः श्रूयते। न चाधिकारकल्पना भवति; सा ह्यनुष्ठानाय क्रियते, अनुष्ठानञ्च वक्ष्यमा-णनीत्यापि सम्भवतीत्यभिप्रायः। ननु कर्मप्रवृत्तिसिद्ध्यर्थं नित्यत्वेनात्मनो ज्ञानोपदे-शात् पारार्थ्यमेव, तन्नेत्याह **न च कर्मप्रवृत्तीति** 'अथात्मा ज्ञातव्यो निदिध्यासि-तव्यः' इत्याद्युपक्रम्य 'एवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न स पुनरावर्तते' 15 इत्यादेरर्थवादादपुनरावृत्तिकामोऽधिकारी लभ्यते। तन्नेत्याह **अर्थवादस्त्विति**। **आत्मस्वरूपनिष्ठत्वमेवेति**। आत्मा ज्ञातव्यः, अपहतपाप्मत्वादिगुणवत आत्मनः साक्षात्कारो यथा भवति तथा कुर्यात्, न पुनस्तज्ज्ञानेनान्यदिति। **तस्मादपहत-पाप्मादीति**। "एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" इत्यादिग्रहणेन श्रुतिपरिग्रहः। यदि न तेनान्यत् साधयेत् तर्हि 20 तत्स्वरूपमात्रप्रतिपत्तौ निष्फलायां किमर्थं प्रवर्तेतेत्याह—**तस्मिन्नवगत** इति। **स एव ह्युत्तमः पुरुषार्थः**, तथाविधावस्थाया एव कैवल्यशब्दवाच्यत्वात्। यदि तादृगसौ तर्हि स्थित एव तेन रूपेणेति किमर्थं तदुपासनादियत्नविशेष इत्याह **यत्नस्त्विति**।

**प्रतिपत्तिकर्तव्यतापरोऽयमिति**। अयमर्थः। 'आत्मा ज्ञातव्यः' इति नायं विधिरपहतपाप्मत्वादिविशिष्टात्मस्वरूपप्रतिपादनपरः, किन्त्वेवंविधात्मप्रतिपत्तिरत्र 25 कर्तव्यतयोपदिश्यते, अतः प्रतिपत्तिविषयो यो नियोगस्तत्रैवास्य तात्पर्यम्, उभयपरत्वे

त्वात् प्रमितेश्च प्रमेयनिष्ठत्वाज्ज्ञातव्य इति कर्मणि चायं कृत्यप्रत्ययनिर्देशात् कर्मणश्चेप्सिततमत्वात् तत्परत्वमेवागम्यते। विधिस्त्वत्र प्रसरन् क्व प्रसरेत् ? फलं तावद्विधेर्न विषय एव। यथाऽऽह भट्टः 'फलांशे भावनायाश्च प्रत्ययो न विधायकः' इति। उपायस्तु ज्ञानमेव, ज्ञानञ्च ज्ञेयनिष्ठमित्युक्तम्।

5 यस्तु यमनियमादिप्रतिपत्तीतिकर्त्तव्यताप्रकारोपदेशः सोऽपि तथाविधात्मरूपाधिगतये सत्यासत्यस्वभावनामरूपप्रपञ्चविलापनद्वारा तत्रोपयुज्यत इति सिद्धतन्त्रमेव साध्यम्।

तिष्ठतु वा यमनियमप्राणायामप्रत्याहारधारणाध्यात्मज्ञानयोगीतिकर्त्तव्य-

---

वाक्यभेदप्रसङ्गादिति। **प्रमितेश्च प्रमेयनिष्ठत्वादिति**। प्रमेयसाक्षात्कारं विना प्रति-
10 पत्तिकर्तव्यताया एवासम्पत्तेरित्यर्थः। **कर्मणि चायं कृत्यप्रत्ययेति**। भावनाकर्मणि यागेन स्वर्गं भावयेद्यथा तथा श्रुतेनात्मानं साक्षात्कुर्यादिति न पुनर्विधिकर्मणि विधेये सोमेन यष्टव्यमितिवत्। विष्णुरुपांशु यष्टव्यः प्रजापतिरुपांशु यष्टव्य इति वा यथा कृत्यप्रत्ययः उपांशुयाजस्तुत्यर्थत्वेन तथेहात्र साक्षात् तस्यैव ज्ञानेन प्रेप्सितत्वात्। **फलं तावद्विधेर्न विषय एव**। स्वत एव तत्र प्रवृत्तत्वात्, तथा चाह भाष्यकारः
15 "वेदैवासौ मयैतत्कर्तव्यमुपायन्तु न वेद" इति। फलांशे भावनायाश्चेत्यस्य शेषः "वक्ष्यते जैमिनिश्चाह तस्य लिप्सार्थलक्षणा' इति।....( अत्र टीकाग्रन्थस्य स्पष्टाक्षरत्वम् ज्ञेयम्) फलांश एव न विधायकः करणेतिकर्तव्यतांशयोस्तु विधायक एवेति।

**सत्यासत्यस्वभावेति**। तथाहि यथा घटशरावोदञ्चनप्रभृतीनि नानारूपाणि अभिधानाभिधेयानि प्रपञ्चतो भेदव्यवहाररूपतया स्थितानि मृदपेक्षया असत्यानि,
20 तेषामुपसंहारे केवलं मृद्रूपताप्रतिभासात्। सापि द्रव्यरूपतया असत्येव, मृद्रूपतोपसंहारे केवलद्रव्यरूपताप्रतिभासात्; एवं सत्तापेक्षया द्रव्यरूपताप्यसत्येव। इत्येवञ्च सामान्यरूपः सन्मात्रं ब्रह्म इत्यस्तमितज्ञातृज्ञेय...(अत्रत्यष्टीका ग्रन्थोनोपलब्धः)।

इत्यत्र पुरुषसंस्कारकत्वेनोपयोगात्। तथा च श्रुतिः "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति, ब्रह्मचर्येण तपसा श्रद्धया यज्ञेन दानेनानाशकेन वा" इति। यज्ञेनेति
25 यज्ञस्य विविदिषायामात्मज्ञानेऽङ्गत्वं प्रदर्शयति। तथा 'येन केन च यजेतापि दर्विहोमेनापहतपाप्मैव भवति' इति च। तथा च व्यासः।

तावद्विधिः। अन्येऽपि ज्योतिष्टोमादिविधयस्तन्निष्ठा एवेति वेदान्तिनः। साध्यस्य सर्वस्य क्षयित्वेनानुपादेयत्वात्, सिद्धस्य ब्रह्मण एवानाद्यविद्यातीतस्यानपायिनः पुरुषार्थत्वात्, स्तोकस्तोकप्रपञ्चविलापनद्वारेणोत्तमाधिकारयोग्यत्वापादनाद्, ब्रह्मप्राप्त्यौपयिका एव सर्वविधयः। तथा च मनुः

स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः॥
तदेवं सिद्ध एवार्थे वेदस्याहुः प्रमाणताम्।
सर्वस्तावद्विषयो बहु वक्तव्यः प्रमाणता तु गिराम्।×

---

सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते।
आरुरुक्षोर्मुनेर्योगं कर्म कारणमिष्यते॥ इति॥ 10

**स्तोकस्तोकप्रपञ्चे**त्यादिना तन्निष्ठत्वमेव तत्र प्रदर्शयितुमाह। तत्र प्रपञ्चप्रविलयं केचिदेवमाहुः। तथा च ज्योतिष्टोमेन यजेतेत्यतस्तावच्छरीरव्यतिरिक्तो नित्य आत्मास्तीति प्रतीयते तेन शरीरेण स्वर्गस्याप्तुमशक्यत्वात्। अतो देह एवात्मेति यः प्रपञ्चस्तस्य प्रविलयः। तथा कलञ्जप्रतिषेधविधिरपि रागतो या प्रवृत्तिस्तस्याः प्रविलयः। अन्यास्वपि कामचोदनासु फलार्थं या प्रवृत्तिस्तस्याः प्रविलयनमुत्तमफलार्थत्वेन, यानि प्रवृत्त्यन्तराणि तेषामपि प्रविलय इति प्रासङ्गिकफलप्रदर्शनद्वारेण च प्रदर्शित एव प्रपञ्चप्रविलय इति। **उत्तमाधिकारयोग्यत्वापादनादि**ति। यथा यथा हि प्राङ्नीत्या कर्मानुष्ठानद्वारेण परिपक्वकषायता भवति तथा तथा आत्मसाक्षात्कारयोग्यतास्य जायत इति। 15

**स्वाध्यायेन व्रतैरि**ति। स्वाध्यायेनोपनयनाङ्गभूतेन प्रणवव्याहृतिगायत्र्यादिपाठेन। व्रतैर्वेदग्रहणार्थैरुपनयनोत्तरकालं सावित्रादिभिः। **त्रैविद्येन** त्रिवेदाध्ययनेन। **इज्यया** गुरुशुश्रूषया। **सुतै**र्धर्मप्रजोत्पत्त्या। **महायज्ञैः** पञ्चभिः स्मार्तैर्भूतयज्ञादिभिः। **यज्ञैश्च** ज्योतिष्टोमादिभिः श्रौतैः। **ब्राह्मीयं क्रियते** ब्रह्मप्राप्तियोग्या क्रियते। ब्रह्मप्राप्तिपर्यवसायिनः स्वाध्यायादयः। ब्रह्म चात्मा सिद्धस्वभाव एवेति। ननु ब्रह्मणः सिद्धस्वभावस्य प्रमाणान्तरग्रहणयोग्यत्वात् तत्परत्वे वेदान्तानामनुवादकत्वं प्राप्तम्। तत्स्वरूपस्य च स्वाध्यायाध्ययनादेवावगतेर्नैष्फल्यमित्याशङ्क्याह **आस्तां चायं** 20 25

---

× श्लोकरूपेण मुद्रितापीयं पंक्तिश्छदोहीनत्वादस्माभिः गद्यत्वेनात्रमुद्रितेति मन्तव्यम्।

किंतन्त्रता भवति तस्य तयोरितीयं
चर्चा चिराय न महत्युपयुज्यते नः ।
सन्तोषवृत्तिमवलम्ब्य वयं हि वेद-
प्रामाण्यमात्रकथनाय गृहीतयत्नाः ॥
5 प्रामाण्यसाधनविधावुपयोगि यच्च
वक्तव्यमत्र तदवादि यथोपयोगम् ।
वक्तव्यमिष्टमपि किञ्चिदिहाभिदध्म-
स्तच्छ्रूयतां यदि न धीः परिखिद्यते वः ॥

## इति श्रीजयन्तभट्टकृतौ न्यायमञ्जर्यां चतुर्थमाह्निकम् ।

---

10 **विषय इति । किंतन्त्रता तस्येति** । तयोः सिद्धसाध्ययोर्मध्यात् तस्य शब्दस्य किंतन्त्रता किंपरत्वमिति । ननु अधुनैव साधितं सिद्धपरत्वमिति, तत्र प्रागुक्ताभिप्रायेणैवाह **महतीयं चर्चा न चिराय** न कदाचिदस्माकमुपयुज्यते इत्यर्थं इति ।

भट्टश्रीशङ्करात्मजश्रीचक्रधरकृते
15 न्यायमञ्जरीग्रन्थिभङ्गे चतुर्थमाह्निकम् ॥



# परिशिष्टम् १

## ( विशिष्टनामसूचीं । )

# परिशिष्टम् २

## उद्धृतवचनानां सन्दर्भस्थाननिर्देशः

# परिशिष्टम् ३

## सरसोक्तिसङ्ग्रहरूपम्

# शुद्धिपत्रम्

| पृष्ठे | पंक्तौ | मुद्रितः पाठः | शुद्धः पाठः |
|---|---|---|---|
| २२ | ५ | ०तमवर्थ गेगा० | ०तमवर्थागेगा |
| २२ | ८ | तत्त्व- | तत्स्व- |
| ३१ | २२ | दृष्टत्वाद् | दृष्टतावा |
| ३५ | ५ | ०मविसंबादकत्वञ्च | ०मविसंवादकमविसंवादकत्वञ्च |
| ४० | ३ | ०नुपातिना | ०नुपातिनी |
| ४१ | २२ | मूत्रा० | सूत्रा० |
| ४९ | १३ | प्रमाणसंप्लवसमर्थनम् | इति न पाठ्यम् |
| ५० | १७ | निहनुत्य | निह्नुत्य |
| ५० | २३ | कतवं | कैतवं |
| ५३ | ८ | तद्धीन | तदधीन |
| ५५ | २ | अतश्चैवं | इतश्चैवं |
| ५६ | २५ | सं र्गो | संसर्गो |
| ५८ | ८ | प्राप्तिनिर्वृति | प्राप्तनिर्वृति |
| ५८ | ११ | अभिधाय | अविधाय |
| ५८ | १६ | ०प्रकरशे | ०प्रकरणे |
| ५६ | ३ | तद्विधः | तद्विधिः |
| ६६ | १० | 'चैकदेश० | 'न चैकदेश० |
| ६९ | २७ | व्यप्तिगृहीताया | व्याप्तिगृहीतायाः |
| ७० | १७ | कृष्णविषाणाणां | कृष्णविषाणां |
| ७४ | २३ | प्रथ | प्रथमं |
| ७५ | ११ | ०वेत्यतिदेशककल्प० | ०वेत्यतिदेशकल्प |
| ७५ | १७ | यथा र्वमुप० | यथाकार्यमुप० |
| ८० | २६ | ०पलम्तभा | ०पलम्भात् |
| ८३ | १६ | निह्नुयते | निह्नुयते |
| ८४ | ७ | दृष्टञ्च | दृष्ट्वापि |
| ८७ | २४ | ०ह्रियतेऽभावो | ह्रियते भावो |
| ८८ | १४ | यदि भावो | यद्यभावो |

| पृष्ठे | पंक्तौ | मुद्रितः पाठः | शुद्धः पाठः |
|---|---|---|---|
| ६१ | ६ | ०मात्मांशावलम्बनं | ०मात्मालम्वनम् |
| ६२ | ८ | निह्नुवीत | निह्नुवीत |
| १०२ | ५ | ईयत्त्व० | इयत्त्व० |
| १०५ | १६ | तथा अयं | तया अयं |
| १०५ | १८ | जनितो धूम० | जनितधूम० |
| १०६ | १४ | लिङ्गप्रतीति० | लिङ्गिप्रतीति० |
| १०७ | ६ | निगमे | नियमे |
| १०८ | ९ | किञ्चित् | कञ्चित् |
| १११ | २१ | व्यापृतवमर्थो | व्यापृतत्वमर्थो |
| ११५ | ११ | ०मर्थस्स्य करणेऽपी० | ०मर्थस्यापी० |
| ११५ | ११ | ०त्युपन्न० | ०त्युत्पन्न० |
| ११६ | ६ | सुखादिना० | सुखादीना० |
| ११६ | २४ | बीजैर द्रूपै० | बीजैरतद्रूपै० |
| ११९ | १० | धर्मौ | धर्मौ |
| १२० | १८ | श्रोतुश्च | श्रोतुश्च |
| १२१ | ५ | रसाज्ञान० | रसज्ञान० |
| १२५ | १२ | व्यापारसंवेद० | व्यापारासंवेद० |
| १२५ | २६ | ०परिच्छेदे | ०परिच्छेद्ये |
| १२८ | १० | अवतरन् | अवतरन्तं |
| १२८ | ११ | परं | (न पाठ्यम्) |
| १३६ | ८ | इहावलम्बनी | इहालम्बनी |
| १४२ | १२ | ०सङ्कल्पना | ०सङ्कलना० |
| १४४ | २२ | अप्रामाण्यत्व० | अप्रामाण्य० |
| १४४ | २४ | ०प्रामाण्यकरण० | प्रामाण्यकारण० |
| १५३ | २० | उभयस्य | उत यस्य |
| १५५ | ६ | शेषहेतु० | शेषं हेतु० |
| १५५ | २५ | शेषहेतु० | शेषं हेतु० |
| १५८ | २४ | ०शोकाभयो० | ०शोकभयो० |
| १६५ | २० | ०ज्झितात् | ०ज्झितात् |
| १६६ | ८ | यत् | पत् |
| १७० | १२ | न दृश्गते | न दृश्येत |

| पृष्ठे | पंक्तौ | मुद्रितः पाठः | शुद्धः पाठः |
|---|---|---|---|
| १७१ | १ | स्यान्ननानित्य | स्यान्नानित्य |
| १७१ | २ | एष्या | एषा |
| १७७ | १७ | शक्या वस्तु | शक्यो वक्तु० |
| १८१ | २५ | ज्ञापककत्वा० | ज्ञापकत्वा० |
| १८८ | १२ | व्यभिचार्यभया० | व्यभिचार्युभया० |
| १८९ | १ | उत्पाद्यते० | उत्पद्यते० |
| १९२ | २ | तदभावात् | तदभावे |
| १९३ | १० | इद्रियाणा० | इन्द्रियाणा० |
| १९५ | १४ | परस्यालम्ब० | पटस्यालम्ब० |
| १९८ | ११ | कालासत्त्वादः | कालासत्त्ववादः |
| १९८ | १६ | चामुनव | चामुनैव |
| २०६ | २५ | गौरवं | गौरेवं |
| २०७ | २२ | नटविक | नाटविक |
| २१२ | १७ | स इदानीं० | सा इदानीं० |
| २१८ | १८ | व्यवहरात् | व्यवहारात् |
| २१९ | २३ | ०निबन्धस्य | निबन्धनस्य |
| २२१ | ६ | ०नवसायाश्च | नवसायश्च |
| २२२ | १० | धूमवत्त्वात् | धूमत्ववत्त्वात् |
| २२२ | २६ | ०तया | ०यता |
| २३७ | २२ | ०थात्वाज्ञाना० | ०थात्वज्ञाना० |
| २५१ | १० | ०भासमनायां | भासमानायां |
| २५४ | १५ | ०प्रतिबन्धां | ०प्रतिबन्धं |
| २५४ | २१ | ह्लीत्यस्यो० | हीत्यस्यो० |
| २५९ | २३ | वृत्त्येकत्वं | वृत्त्यैकत्वं |
| २६० | १ | ऐकचन्द्र | एकचन्द्र |
| २६० | १ | वृत्त्येकत्वं | वृत्त्यैकत्व० |
| २६० | ८ | ०तनिर्वह० | ०तिर्निर्वह० |
| २६२ | २१ | ०मपह्नित्यते | ०मपह्नु यते |
| २६४ | ६ | संयजत्ररङ्गा० | संयजत्रैरङ्गा |
| २६७ | १२ | हयेतदेव | ह्येतदेव |
| २६८ | २२ | कर्तृर्दृश्यत्व० | कर्तुर्दृश्यत्व |

| पृष्ठे | पंक्तौ | मुद्रितः पाठः | शुद्धः पाठः |
|---|---|---|---|
| २७३ | ३ | धमौ | धर्मौ |
| २९० | ३ | शब्दनित्यतायां | शब्दानित्यतायां |
| २९३ | ७ | ह्रस्वदीर्घयो॰ | ह्रस्वप्लुतयो॰ |
| २९७ | २४ | यस्य वि | यस्य द्वि (इति भवेत्) |
| ३०९ | २ | रससमारूढो | रसमारूढो |
| ३११ | ३ | ॰माक्षते | ॰माचक्षते |
| ३१५ | ४ | ॰ज्ञानात्त | ज्ञानात्तु |
| ३१७ | २३ | स्वाच्छान्द्ये॰ | स्माच्छन्द्ये॰ |
| ३२० | १४ | श्यामाः (?) | श्यानाः (इति भवेत्) |
| ३२० | २६ | सीददर्शन | सीदद्दर्शन॰ |
| ३२३ | २२ | प्रयत्नान्तरीय॰ | प्रयत्नानन्तरीय॰ |
| ३२८ | ६ | स्मिृतिः | स्मृतिः |
| ३३६ | २४ | ॰जगत्कायति | ॰जगत्कार्येति |
| ३३७ | १ | नाध्यर्यवम् | ॰नाध्वर्यवम् |
| ३४३ | २७ | प्रतीवेत | प्रतीयेत |
| ३४४ | ९ | एवावयाः | एवावयोः |
| ३४५ | १ | वजमिति । | वर्जमिति । |
| ३४७ | १० | सिद्धौपयिकानी॰ | सिद्ध्यौपयिकानी॰ |
| ३५३ | १८ | सर्गान्तरेष्वेव | सर्गान्तरेष्विव |
| ३५६ | १४ | प्रमाणम् द । | प्रमाणम् । |
| ३५६ | १६ | नाश्नीयात् | अश्नीयात् |
| ३५५ | १८ | तीक्षितस्य | दीक्षितस्य |
| ३५६ | १८ | नाश्नीयात् | अश्नीयात् |
| ३६६ | १८ | पृष्टेऽयर्व॰ | पृष्ठायामथर्व॰ |
| ३६७ | २६ | बृहदीत्यादि॰ | बृहदित्यादि॰ |
| ३६९ | २० | अग्रयाः | अग्रचाः |
| ३७० | २५ | वृपरस्पर॰ | परस्पर |
| ,, | ,, | । क्षपक्षे | वृक्षपक्षे |
| ३७५ | १८ | आयुध्कामः | आयुष्कामः |
| ३७५ | २० | तत्रोपकारस्य दर्शना॰ | तत्रोपाकारस्यादर्शना॰ |

| पृष्ठे | पंक्तौ | मुद्रितः पाठः | शुद्धः पाठः |
|---|---|---|---|
| ३७५ | २१ | हेमकनु० | हेमकण० |
| ३७६ | २७ | भवत्वन्त्रय | भवत्वन्यत्र |
| ३७७ | ५ | पुनर्दह्नादेव | पुनर्वह्नावेव |
| ३७७ | १९ | कारणभावे | कारणाभावे |
| ३८५ | २४ | चरुं न प्राजा० | चरुं प्राजा० |
| ३८७ | २६ | इतिः | । इतः |
| ३९४ | ५ | जन्मातरे | जन्मान्तरे |
| ३९५ | ४ | वर्णाश्रमाश्च | वर्णा आश्रमाश्च |
| ३९६ | १२ | जहुयादि० | जुहुयान्ि० |
| ४०३ | १६ | भूतिकाममः | भूतिकामः |
| ४०७ | २ | कर्मस्नोनुमु० | कर्मस्तोतुमु० |
| ४०७ | १४ | ०मुपभद्रादि | उपभृदादि |
| ४०७ | १५ | किमति | किमिति |
| ४०८ | ६ | तदिह्यमाने | संदिह्यमाने |
| ४०८ | १६ | ०वर्म | ०वर्त्म |
| ४१० | ११ | श्रृणोतु | श्रृणोत |
| ४१० | १५ | सोमस्य करकेति | सोमस्य काणुकेति |
| ४११ | १५ | नवसंख्यौऽसौ | दशसंख्योऽसौ |
| ४११ | २१ | अ रग्रहण० | अक्षरग्रहण० |
| ४१३ | १८ | ब्रह्मन्-आच्छसि | ब्रह्मन् ब्राह्मणाच्छंसि |
| ४१४ | ८ | प्राजापत्या | प्राजापत्यान् |
| ४१५ | ७ | ०दथैप्रकटन० | ०दर्थप्रकटन० |
| ४१५ | २१ | अस्ये न्ति | अस्येयन्ति |
| ४१६ | १४ | ०नेत्यन्यपद्रूम् | ०नेत्यन्यद्रूपम् |
| ४१८ | १ | ०स्याश्व च्युतो | ०स्याश्वाच्युतो |
| ४१८ | ७ | विधायमानो | विधीयमानो |
| ४२१ | १७ | त्र किञ्च | अत्र किञ्च |
| ४२२ | १७ | नाम्ना इव | नाम्न इव |

| पृष्ठे | पङ्क्तौ | मुद्रितः पाठः | शुद्धः पाठः |
|---|---|---|---|
| ४२२ | २५ | अभिधात्रीः | अभिधात्री |
| ४२३ | २ | ०वेष्ठित० | ०वेष्टित० |
| ४२४ | ८ | पदार्थान्तरानां | पदार्थान्तराणां |
| ४२४ | १० | बूयात् | ब्रूयात् |
| ४२४ | २७ | ०पाराध्यांना० | ०पारार्थ्याना० |
| ४२६ | १६ | ग्रन्थस्य स्पष्टा० | ग्रन्थस्यास्पष्टा० |
| ४२७ | २६ | ०द्याङ्क्याह | ०द्याशङ्क्याह |



